"नं य तस्स तन्निमित्तो बंधो सुहुमोवि देसितो समए।"–ओघ० गा० ७४९
"सुद्धस्स उ संपत्ती अफला वुत्ता जिणवरेहिं।"

तदेवं सकषायाकषाययोर्योगस्य यथाक्रमं साम्परायिकेर्यापथयोः कर्मणोरास्रवो भवति। कर्मग्रहणमास्रवग्रहणं चानुवर्तते। एनमेवार्थं भाष्येण स्पष्टयति—

आस्रवस्य द्वैविध्यम्

भा०—स एष त्रिविधोऽपि योगः सकषायाकषाययोः साम्परायिकेर्यापथयोरास्रवो भवति, यथासङ्ख्यं यथासम्भवं च सकषायस्य योगः साम्परायिकस्य। अकषायस्येर्यापथस्यैवैकसमयस्थितेः ॥ ५ ॥

टी०—स एष त्रिविधोऽपि योग इत्यादि। प्रकृतोपयोगाभिसम्बन्धार्थस्तच्छब्दः, एष इत्युपदर्शनार्थः। स एष योगः शुभाशुभभेदात्त्रिविधोऽपि–मनोवाक्कायलक्षणः। अपिशब्दाद् व्यस्तः समस्तो वा सकषायस्य कर्तुःसाम्परायिकस्य–संसारपरिभ्रान्तिकारणस्य कर्मण आस्रवो भवति। यथोक्तम्—"पैढमे समए बद्धपुट्ठा बितिए समए वेदिता ततिए समए निजिण्णा सेआले अकम्मं वावि भवति" (इति) पारमर्षवचनात् त्रिसमयावस्थान एव वेदितव्यः। सकषायाकषाययोर्द्वयोरपि साम्परायिककर्मबन्धाशङ्कायामीर्यापथकर्मबन्धारेकायां च द्वयोरपीदमाह–यथासङ्ख्यमिति। यथाक्रमं सकषायस्य साम्परायिककर्मास्रवः। यथासम्भवमिति। यस्य यावान् योगः सम्भवत्येकेन्द्रियाणां तावत्काययोगः द्वित्रिचतुरिन्द्रियासंज्ञिपञ्चेन्द्रियाणां कायवाग्योगौ संज्ञिपञ्चेन्द्रियाणां मनोवाक्काययोगः अकषायस्य संज्वलनवर्तिनः उपशान्तकषायक्षीणमोहयोश्च मनोवाक्काययोगाः केवलिनो वाक्काययोगावित्येवं यथासम्भवग्रहणं समर्थितं भवति। योगो व्याख्येय इत्यनुकर्षणार्थश्चशब्दः। एतदेव यथासंख्यकं दर्शयति भाष्येण–सकषायस्येत्यादि। सकषायस्य योगः साम्परायिकस्य कर्मण आस्रवः, अकषायस्येर्यापथस्यैवास्रवो न साम्परायिकस्यापीति, एकसमयस्थितेरिति एकस्मिन् समये स्थितिः–अवस्थानं यस्य कर्मण इति। भाषितपुंस्कत्वादेवं निर्देशः। वेद्यमानकर्मसमयो मध्यमः स एव स्थितिः–कालः। आद्यो बन्धसमयस्तृतीयः परिशाटसमय इति ॥ ५ ॥

साम्परायिकश्चेर्यापथश्च द्विविधोऽभिहित आस्रवस्तत्र साम्परायिककर्मास्रवभेदाः कियन्त इत्युच्यते—

---

१–२ छाया—

न च तस्य तन्निमित्तो बन्धः सूक्ष्मोऽपि देशितः समये।
शुद्धस्य तु सम्पत्तिरफलोक्ता जिनवरैः।

३ 'प्रथमे समये बद्धस्पृष्टा द्वितीये समये वेदना तृतीये समये निर्जरणं, एष्यत्कालेऽकर्म वाऽपि भवति।
४ 'मार्षाद् वचनाद्' इति क-पाठः।

सूत्रम्—इन्द्रियकषायाव्रतक्रियाः पञ्चचतुःपञ्चपञ्चविंशतिसंख्याः पूर्वस्य भेदाः ॥ ६–६ ॥

टी०—इन्द्रियादीनां चतुर्णां कृतद्वन्द्वानां संहत्योत्तरभेदैर्निर्देशः । पञ्च चत्वारः पञ्च पञ्चविंशतिः संख्या येषां ते पञ्चचतुःपञ्चपञ्चविंशतिसंख्याः । पूर्वस्येति निर्देशसामर्थ्यात् साम्परायिकस्य कर्मणो य आस्रवस्तस्य भेदा भवन्तीति, एतदेव भाष्यकारो विशकलयति भाष्येण—

भा०—पूर्वस्येति सूत्रक्रमप्रामाण्यात् साम्परायिकस्याह । साम्परायिकस्यास्रवभेदाः पञ्च चत्वारः पञ्च पञ्चविंशतिरिति भवन्ति ॥

टी०—पूर्वस्येति सूत्रक्रमप्रामाण्यात् साम्परायिकस्याहेत्यादि भाष्यम् । पूर्वं–प्रथमं कर्म । किंकृतं प्राथम्यमित्याह—सूत्रक्रमप्रामाण्यादिति । सूत्रे परिपाटी–क्रमस्तस्याप्तोक्तत्वात् प्रामाण्यम् । आचार्येण हि सूत्रे साम्परायिककर्मास्रव एव प्रथममुपन्यस्तोऽतस्तमेव विवृणोति–साम्परायिकस्याह । सम्परायकारणस्य कर्मण आस्रव इति सूत्रकारः प्रागेवमुवाच अतः साम्परायिकस्य कर्मणो य आस्रवस्तस्य भेदाः–प्रकाराः संख्यायन्ते यथाक्रमम् । पञ्चेन्द्रियाणि प्राग्व्याख्यातस्वरूपाण्यात्मनो लिङ्गादिभूतानि । मूलभेदतश्चत्वारः कषायाः क्रोधादयो वक्ष्यमाणोत्तरषोडशभेदाः । पञ्चाव्रतानि हिंसादीनि लक्षणतो वक्ष्यमाणानि । क्रियाः पञ्चविंशतिरिहैव सूत्रे व्याख्यास्यन्ते ।

साम्परायिकास्रवस्य ४९ भेदाः

एवमेते एकान्नचत्वारिंशदात्मनः परिणतिविशेषाः साम्परायिकस्य कर्मण आस्रवभेदा भवन्ति । तत्रेन्द्रियकषायातुल्लङ्घ्याव्रतान्येव व्याचष्टे भाष्यकारः । किं पुनरत्र प्रयोजनमिति ? उच्यते–अयमभिप्रायो भाष्यकारस्य–हिंसादीन्यव्रतानि सकलास्रवजालमूलानि तत्प्रवृत्तावास्रवेष्वेव प्रवृत्तिस्तन्निवृत्तौ च सर्वास्रवेभ्यो निवृत्तिरित्यस्यार्थस्य ज्ञापनार्थं सूत्रोक्तक्रममतिक्रम्याव्रतानि व्याचष्टे भाष्यकारः । सूत्रबन्धशोभाहेतोरिन्द्रियादिसन्निवेशः ॥

भा०—पञ्च हिंसानृतस्तेयाब्रह्मपरिग्रहाः । प्रमत्तयोगात् प्राणव्यपरोपणं हिंसेत्येवमादयो वक्ष्यन्ते ( अ० ७, सू० ८–१२ ) ॥

टी०—पञ्चैव न न्यूनातिरिक्तानि व्रतानि विरतिलक्षणानि वक्ष्यन्ते । तद्विपरीतानि अव्रतानि–प्राणातिपातादिप्रवृत्तिस्वभावानि, हिंसादीनि कृतद्वन्द्वनिर्दिष्टानि सप्तमेऽध्याये लक्षणतोऽभिधास्यन्ते । तच्च लक्षणमुपलक्षयति—प्रमत्तयोगात् प्राणव्यपरोपणं हिंसेति । प्रमत्तस्य–कषायादिपरिणतिभाजो योगस्तद्धेतुकं यत् प्राणव्यपरोपणं सा हिंसा । इतिशब्दोऽवधारणे । एतावदेव लक्षणं हिंसायाः परिपूर्णप्रपञ्चेन व्याख्यास्यते, एवंलक्षणा हिंसा आदि-

१ 'अव्रतकषायेन्द्रियक्रियाः' इति क-पाठः ।

येषामनृतादीनामात्मपरिणामानां त एवमाद्यो वक्ष्यमाणा हिंसादयः साम्परायिकस्य कर्मण आस्रवास्तथा—

भा०—चत्वारः क्रोधमानमायालोभाः अनन्तानुबन्ध्यादयो वक्ष्यन्ते ( अ० ८, सू० १० ) ॥

टी०—चत्वारः क्रोधादयः । अत्रतानन्तरं कषायगौरवप्रतिपादनार्थमाह—क्रोधादयोऽप्रीतिगर्वपरवञ्चनामूर्च्छालक्षणाः कषायाः,अनन्तः-संसारस्तमनुबध्नन्ति तच्छीलाश्चानन्तानुबन्धिनो वक्ष्यमाणलक्षणास्ते आदिर्येषां तेऽनन्तानुबन्ध्यादयः। आदिशब्दग्रहणादप्रत्याख्यानप्रत्याख्यानावरणसंज्वलनग्रहणम् । अनन्तानुबन्धिनश्चत्वारः क्रोधादयः, अप्रत्याख्यानाश्चत्वारः क्रोधादयः, प्रत्याख्यानावरणाश्चत्वारः क्रोधादयः, तथा संज्वलनाश्चत्वार एव क्रोधादयः, इत्येवमेते षोडश कषाया वक्ष्यन्ते लक्षणतः । एते च साम्परायिकस्य कर्मण आस्रवाः, तथा तेषु कषायेषु सत्सु—

भा०—पञ्च प्रमत्तस्येन्द्रियाणि ॥

टी०—पञ्च प्रमत्तस्येन्द्रियाणि स्पर्शनादीनि स्पर्शादिषु विषयेषु कषायादिपरिणतियुजः साम्परायिकस्य कर्मण आस्रवा भवन्ति । तदनन्तरं—

भा०—पञ्चविंशतिः क्रियाः । तत्रेमे क्रियाप्रत्यया यथासङ्ख्यं प्रत्येतव्याः । तद्यथा—सम्यक्त्व-मिथ्यात्व-प्रयोग-समादाने-र्यापथाः कायाऽधिकरण-प्रदोष-परितापन-प्राणातिपाताः दर्शन-स्पर्शन-प्रत्यय-समन्तानुपाताऽनाभोगाः स्वहस्त-निसर्ग-विदारणा-नयनाऽनवकाङ्क्षा आरम्भ-परिग्रह-माया मिथ्यादर्शनाऽप्रत्याख्यानक्रिया इति ॥ ६ ॥

टी०—पञ्चविंशतिः क्रिया इन्द्रियकषायाव्रतैः इन्द्रियादयश्च आभिः सङ्कीर्णाः शुद्धाश्च परस्परव्यतिकीर्णाव्यतिकीर्णरूपा एकास्रवत्वं प्रतिपद्यन्ते । पञ्चविंशतिरेवात्मनः सकषायकर्मणः क्रियारूपाः परिणामाः, तत्र—तेषु साम्परायिककर्मास्रवेषु इमे ये वक्ष्यन्ते लक्षणतः, क्रिया एव प्रत्ययः—कारणं येषां साम्परायिककर्मास्रवाणां ते क्रियाप्रत्ययाः—क्रियाकारणकाः यथासङ्ख्यं—येन सङ्ख्याविशेषेण क्रियाः प्रसिद्धास्तदत्र यथासङ्ख्यमुच्यते, यथासङ्ख्यं या या सङ्ख्या क्रियाणां प्रत्येतव्या—विज्ञेयाः । तद्यथेत्यनेनोदाहरति तान् क्रियाविशेषान्—सम्यक्त्वमिथ्यात्वेत्यादि । इमाः पञ्चविंशतिक्रियाः सकषायस्य कर्तुः साम्परायिकस्य कर्मण आस्रवा भवन्ति, यथासम्भवं व्याख्येयाः । तत्र सम्यक्त्वक्रिया—सम्यक्त्वकारणम् । सम्यक्त्वं च मोहशुद्धदलिकानुभवः, प्रायेण तत्प्रवृत्ता क्रिया सम्यक्त्वक्रिया—प्रशमसंवेगनिर्वेदानुकम्पास्तिक्याभिव्यक्तिलक्षणजीवादिपदार्थविषया श्रद्धा जिनसिद्धगुरूपाध्याययतिजनयोग्यपुष्पधूपप्रदीपचामरातपत्रनमस्करणवस्त्राभरणान्नपानशय्यादानाद्यनेकवैयावृत्त्याभिव्यङ्ग्या च सम्यक्त्वसद्भावसंवर्धनपट्वीसद्वेद्यबन्धहेतुर्देवादिजन्मप्रतिलम्भकारणम्॥अतो विपरीता मिथ्या-

पञ्चविंशतेः क्रियाणां विवेचनम्

त्वक्रिया तत्त्वार्थाऽश्रद्धानलक्षणा। सा त्रिविधा–अभिगृहीता १ अनभिगृहीता२संदेहतः ३। तत्राभिगृहीता त्रयाणां त्रिषष्टयधिकानां प्रवादिशतानाम्, अनभिगृहीताऽनभ्युपगतदेवताविशेषाणां तत्त्वार्थश्रद्धानं, सन्दिग्धं मिथ्यात्वं प्रवचनोक्तमक्षरमर्थं पादं वा स्तोकमप्यश्रद्दधानस्य भावतो यद् भवति ॥ आत्माधिष्ठितकायादिव्यापारः प्रयोगः, तत्र योगत्रयकृता (तं) पुद्गलानां ग्रहणं प्रयोगक्रिया धावनवल्गनादिः कायव्यापारो वा, हिंस्रपरुषानृतादिवाग्व्यापारो वा, अभिद्रोहाभिमानेर्ष्यादिव्यापारो वा प्रयोगक्रिया ॥ अपूर्वापूर्वविरतिप्रत्यामुख्यमुत्पद्यते यत् तपस्विनः सा समादानक्रिया। अन्ये व्याचक्षते–द्विविधा समादानक्रिया, समादीयते येन विषयस्तत् समादानम्–इन्द्रियं तस्य ( सर्वोपघातकारि ) देशोपघातकारि वा समादानक्रिया ॥ ईर्यापथकर्मणो याऽति( हि ? )निमित्तभूता वध्यमानवेद्यमानस्य सेर्यापथक्रिया । अत्र च काश्चित् साम्परायिककर्मण आस्रवः, काश्चिच्च न ॥ कायक्रिया द्विविधाः, प्रदुष्टस्य मिथ्यादृष्टेरुद्यमो यः पराभिभवात्मको वाङ्मनसनिरपेक्षः सा तु परतः कायक्रिया, प्रमत्तसंयतस्यानेककर्तव्यतासु बहुप्रकारा दुष्प्रयोगकायक्रिया ॥ अधिक्रियते येनात्मा दुर्गतिप्रस्थानं प्रति तदधिकरणं–परोपघातिकूटगलपाशादिद्रव्यजातं तद्विषयाऽधिकरणक्रिया । सा द्विधा–निवर्तने संयोजने च । तत्र मूलोत्तरगुणभेदाद् द्विधा निवर्तने मूलगुणाधिकरणक्रिया पञ्चानामौदारिकादिशरीराणां निर्वृत्तिः, उत्तरगुणनिर्वर्तना पाणिपादाद्यवयवानां, अथवा असि-शक्ति-तोमरादीनां मूलगुणनिर्वर्तना, उत्तरगुणनिर्वर्तना तेषामेव पानोज्ज्वलीकरणपरिचारादिका । संयोजनाधिकरणक्रिया तु विषगरहलाकूटधनुर्यन्त्रादीनाम् ॥ प्रादोषिकी द्विविधा–जीवाजीवद्वैविध्यात् । जीवप्रादोषिकी तावत् पुत्रकलत्रादिस्वपरजनविषया । अजीवप्रादोषिकी तु क्रोधोत्पत्तिनिमित्तभूतकण्टकशर्करादिविषया ॥ पारितापिकी तु द्विविधापरितापप्रधाना स्वपरपरितापप्रधाना–स्वपरपरितापजननी । तत्र स्वदेहपरितापकारिणी पुत्रकलत्रादिवियोगदुःखभाराद्यतिपीडितस्यात्मनस्ताडनशिरस्स्फोटनादिलक्षणा । परपरितापकारिणी पुत्रशिष्यकलत्रादिताडनम् ॥ प्राणातिपातक्रियाऽपि द्विविधा–स्वपरव्यापादनभेदात् । अत्र स्वप्राणातिपातजननी गिरिशिखरप्रपातज्वलनप्रवेशजलप्रवेशास्त्रपाटनादिका । परप्राणातिपातजननी तु मोहलोभक्रोधाविष्टा प्राणव्यपरोपणलक्षणा क्रियते । अत्रापि विचिन्त्य पञ्चके साम्परायिककर्मण आस्रवो वक्तव्यः ॥ दर्शनक्रिया द्विधा–जीवाजीवविषयत्वात् । तत्र प्रमादिनो नृपनिर्याणप्रवेशस्कन्धावारसन्निवेशनटनर्तकमल्लमेषवृषयुद्धादिष्वालोकनादरो यः सा जीवविषया दर्शक्रिया । देवकुलसभाप्रपोदकाशयत्रपुस्ताद्यालोकनलक्षणा रागार्द्रचेतसोऽजीवविषया दर्शनक्रियाः ॥ स्पर्शनक्रिया द्विविधा—जीवाजीवभेदात् । तत्र जीवस्पर्शनक्रिया योषित्पुरुषनपुंसकाङ्गस्पर्शनलक्षणा रागद्वेषमोहभाजः । अजीवस्पर्शनक्रिया मृगरोमकुतवपट्टशाटकनीलयुपधानादिविषया ॥ प्रत्ययक्रिया तु यदपूर्वस्य पापादानकारिणोऽधिकरणस्योत्प्रेक्ष्य स्वस्वबुद्ध्या निष्पादनम् ॥ समन्तानुपातक्रिया स्त्रीपुरुषनपुंसकपशुसम्पातदेशे उपनीयवस्तुत्यागः । प्रमत्तसंयतानां वा भक्तपानादिकेऽनाच्छादितेऽवश्यत्याज्ये समन्तादनुपातो

भवति सम्पात्यसत्त्वानाम् ॥ अनाभोगक्रिया अप्रत्यवेक्षिताप्रमार्जिते देशे शरीरोपकरणनिक्षेपः॥ स्वहस्तक्रिया अभिमानारूपितचेतसाऽन्यपुरुषप्रयत्ननिर्वृत्त्या या स्वहस्तेन क्रियते॥ चिरकालप्रवृत्तपरदेशिनि पापार्थे भावतो यदनुज्ञानं सा निसर्गक्रिया पराचरितप्रकाशनीयसावद्यप्रकाशीकरणं विदारणक्रिया। आपाद्ययामिज्ञःपुरुषो यथैकं विचारयति अर्हत्प्रणीताज्ञोल्लङ्घनेन स्वमनीषया जीवितादिपदार्थप्ररूपणं (वा)॥ स्वयं नयनक्रिया अन्यैर्वाऽऽनायनं स्वच्छन्दतो नयनक्रिया।अनवकाङ्क्षाक्रिया द्विधा—स्वपरभेदतः। तत्र स्वानवकाङ्क्षा जिनोक्तेषु कर्तव्यविधिषु प्रमादवशवर्तितानादरः, तथा चानाद्रियमाणः परमपि नावकाङ्क्षतीति परानवकाङ्क्षाक्रियेति॥ भूम्यादिकायोपघातलक्षणा शुष्कतृणादिच्छेदलेखनादिका वाऽप्यारम्भक्रिया स्वपरभेदतः॥ बहूपायार्जनरक्षणमूर्च्छालक्षणा परिग्रहक्रिया॥ मायाक्रिया तु मोक्षसाधनेषु ज्ञानादिषु मायाप्रधानस्य प्रवृत्तिः विरुद्धफललिप्सया मिथ्यादर्शनमार्गेण सन्ततप्रयाणमन्यं साधयामीत्यनुमोदमानस्य मिथ्यादर्शनक्रिया॥ संयमविघातिनः कषायादीन् प्रत्याख्येयान् न प्रत्याचष्ट इत्यप्रत्याख्यानक्रिया। इतिशब्दः साम्परायिकक्रियेयत्तावधारणार्थः। एवमेताः क्रियाः पञ्चविंशतिः स्थूलस्थूलाकारा विस्तरभीत्याऽऽख्याताः साम्परायिककर्महेतवः, काश्चित् परस्परतः किञ्चिद्भेदभाजः काश्चिद् विविक्तार्थाः सङ्क्षेपतः कायवाङ्मनोदुश्चरितलक्षणाः सूक्ष्मसूक्ष्मतरभूरिभेदा अपि भाष्यकारेण प्रदर्शिताः समस्तकायादिदुश्चरितकलापसङ्ग्रहाय, प्रवचनाभिज्ञेन तु युक्त्यागमाभ्यां विशेष्य व्याख्येया इति॥

एतत् पुनरिन्द्रियादिनिमित्तं साम्परायिकं कर्म बध्नतां जीवानां किं सर्वेषां समानं भवति, उत सतीन्द्रियादिमत्त्वे साम्परायिककर्मबन्धभाजां परस्परेण विशेषः ?। अस्ति विशेषः च सपरिणामजनितः। परिणामोऽनेकरूपस्तद्भेदात् कर्मबन्धभेद इत्याह—

सूत्रम्—तीव्रमन्दज्ञाताज्ञातभाववीर्याधिकरणविशेषेभ्यस्तद्विशेषः॥६-७॥

टी०—आशयपरिणामानुरूप्येण कर्तॄणां बन्धमात्राः सत्स्विन्द्रियादिषु निमित्तेषु प्रतिविशिष्टा भवन्ति नियमतः, न तुल्यास्तद्विपरीता वा। कदाचित् तुल्यपरिणामानां तुल्या अपि विषमपरिणामानामतुल्याश्चेत्येवमर्थं भाष्येण प्रपञ्चयति—

भा०—एषामेकोनचत्वारिंशत्साम्परायिका(स्रवा)णां तीव्रभावात् मन्दभावात् ज्ञातभावादज्ञातभावाद् वीर्यविशेषादधिकरणविशेषाच्च विशेषो भवति—लघुर्लघुतरो लघुतमस्तीव्रस्तीव्रतरस्तीव्रतम इति। तद्विशेषाच्च बन्धविशेषो भवति॥ ७॥

बन्धविशेषाणां हेतवः

टी०—एषामेकोनचत्वारिंशत्साम्परायिकास्रवाणामित्यादि भाष्यम्। एषामिति

१ 'चितारयति' इति क-पाठः; 'विप्रतारयति' इति प्रतिभाति। २ 'साम्परायिकानामेषा०' इति घ-पाठः।

अनन्तरसूत्रोपन्यस्तेन्द्रियादिसम्बन्धमाचष्टे । कियन्तः पुनस्ते इति सङ्ख्यया निश्चयार्थमाह–एकोनचत्वारिंशदिति । स्वशब्देनैवोक्तत्वाद् बहुत्वस्य न पुनर्बहुवचनं सङ्ख्याशब्दात् । ईर्यापथव्यवच्छेदायाह—साम्परायिकास्रवाणामिति । सम्परायः प्रयोजनं कर्मैव नान्यत् तस्यास्रवाः–प्रवेशमार्गास्तेषां विशेषो भवतीति सम्बन्धनीयम् । कुत इत्याह–तीव्रभावादित्यादि । तीव्रादिभ्यः कृतद्वन्द्वेभ्यः । पञ्चमी हेतौ । भावोऽप्यधिकरणवत् पृथग् व्याख्येय इत्याशङ्कायां प्रत्येकमभिसम्बन्धं दर्शयति—तीव्रभावात् मन्दभावात् ज्ञातभावादज्ञातभावादिति । तीव्रः–प्रकृष्टो भावः–परिणामस्तस्मात् तीव्रभावाद्धेतोः कर्मबन्धविशेषः, सातिशयश्च तीव्रपरिणामः, तद्यथा–तीव्रस्तीव्रतरस्तीव्रतमः । कारणभेदश्च कार्यभेदानुविधायी । कार्यभेदोऽपि हि कारणभेदमवगमयतीति, अतः परिणाममात्रापेक्षया आत्मा कर्म बध्नाति । तथा मन्दस्तीव्रः स्वल्पो भावस्तस्माच्च कर्मभेदोऽवश्यंभावी, स्वल्प एवान्तरः परिणामो यदा मृदुर्भवति तदा कर्मबन्धोऽपि स्वल्पपरिणामापेक्षत्वान्मृदुरेव भवति, न जातुचित् तीव्रभावतुल्यो बन्धः । यथा सिंहस्य हन्तुर्गोघातिनश्च समानेऽपि प्राणातिपाते निवृत्तेऽपि गणितजघनाभिष्टश्रवणोद्भूतपरितोषनिर्भरचेतसः केसरिव्यापादिनः शौर्याभिनिवेशात् प्रदीपिततीव्रभावस्य बहुलं भवति कर्मबन्धः । स चापि तीव्रो भावः कदाचिदधिमात्रः कदाचिदधिमात्रमध्यः कदाचिदधिमात्रमृदुः कदाचिन्मध्याधिमात्रः कदाचिन्मध्यमः कदाचिन्मध्यमृदुः कदाचिन्मृद्वधिमात्रः कदाचिन्मृदुमध्यः कदाचिन्मृदुरिति नानाध्यवसायापेक्षत्वात् । इतरस्य तु सर्वजननिन्द्यस्य धिक्काराद्युपघातकवचनाकर्णनापारचिन्तोद्वृत्तस्य[1] कृतेऽपि कर्मणि मन्दपरिणतेः स्वल्पः कर्मबन्धो भवति । तथा ज्ञातभावादज्ञातभावाच्चेति । ज्ञातस्य भावो ज्ञातभावः । ज्ञातमस्यास्तीति अर्शआदिपाठादेव ज्ञात आत्मा, ज्ञानाद् उपयुक्तस्य तस्य यो भावः–परिणामः स ज्ञातभावः–अभिसन्धाय प्राणातिपातादौ प्रवृत्तिः, अपर एतद्विपरीतः, स खल्वज्ञातभावोऽनभिसन्धाय प्राणातिपातकारीत्यत्रापि पूर्ववदेव कर्मबन्धविशेषो द्रष्टव्यः । यो हि मृगमेवाभिसन्धाय व्यापादयामीति शिलीमुखक्षेपमाचरति, यश्च स्थाणुं विध्यामीति कृताभिसंधि पत्त्रिणममुञ्चद्विनिपातितश्चान्तरालवर्ती तेन पत्त्रिणा मृगः कपोतो वा, तुल्यप्राणातिपातक्रिययोरप्यनयोर्निमित्तविशेषाद् बन्धविशेषोऽवसेयः, प्राच्यस्य प्रकृष्टो बन्धः, पाश्चात्त्यस्यानभिसन्धेः कषायादिप्रमादवशवर्तिनः पूर्वकादल्पः कर्मबन्धः, यस्मान्न विना रागात् क्षेपः शरस्य संभवति, रागश्च प्रमादः । यत एवमाह—अज्ञानसंशयमिथ्याज्ञानरागद्वेषस्मृत्यनवस्थानधर्मानादरयोगदुष्प्रणिधानमित्यष्टप्रकारः प्रमादः प्रकृष्टकषायलेश्याबलाधानाज्ञानप्रभवः पौरुषेयपरिणामसमुत्थानः कटुविपाको नरकपाताहितसंस्कारः तीव्रादिसातिशयः मध्यकषायलेश्योदयबलाधानो मध्यममध्यतरादिभेदः प्रतनुकषायलेश्यापरिणतिप्रमादबलाधिष्ठानवासनावासितत्वान्मन्दमन्दतरादिभेदः । तथा वीर्यविशेषादधिकरणविशेषाच्चेति । वीर्यान्तरायकर्मक्षयोपशमजा लब्धिः वीर्यम्–

---

१ 'चिन्तोद्धतस्य' इति पाठः ।

आत्मनः शक्तिः सामर्थ्यं महाप्राणता । तच्च वज्रर्षभनाराचसंहननीयापेक्षमेव त्रिपृष्ठादीनां संरब्धसिंहपाटनादिलक्षणम् । सिंहादीनां च मदजलावसेकपिच्छिलीकृतगण्डस्थलमुखमहावारणादिविदारणाभिव्यक्तं तस्य विशेषः-अतिशयस्तस्माद् वीर्यविशेषात् कर्मबन्धविशेषः । अत्राप्यधिमात्रादिभेदप्ररूपणा पूर्ववत् कार्या। मन्दप्राणस्य तु कृच्छ्रेण धृतोऽपि न तादृगुत्कर्षविशेषो भवति यादृशो महाप्राणस्य, अतो वीर्यातिशयः कर्मबन्धनिमित्तमस्तीति । अधिक्रियते येनात्मा दुर्गतिप्रस्थानं प्रत्यधिकरणं तन्निर्वर्तनासंयोजनादिभेदं वक्ष्यते । तद्विशेषाच्च तदतिशयात् कर्मबन्धातिशयः । प्रतिदिवसमेव हि निर्घृणमनसो निर्भयाः प्राणिप्राणव्यापत्तये मृषास्तेयादिकृतवक्रश्रुतीः सृजन्ति ते चाधिकरणविशेषाः क्लेशोपादानं प्रति प्रकर्षवर्तिनः कूटगलयन्त्रपात्रपाशदेय इत्यादिकादधिकरणविशेषाच्च विशेषो भवति बन्धस्येति । अज्ञातभावाच्च संचेतयतां भवति कर्मबन्धस्तथा सप्तमेऽध्याये वक्ष्यामः ॥ लघुरित्यादिना तीव्रान्मन्दस्यापकर्षं दर्शयति । तथा ज्ञातभावादज्ञातभावस्य वीर्यातिशयान्मध्यमन्दवीर्ययोरधिकरणातिशयाच्च मध्यमन्दाधिकरणविशेषयोरपकर्षोऽवगन्तव्यः, तथा मध्यमन्दप्रतिद्वन्द्विनः प्रकृष्टस्य प्रदर्शनं तीव्रस्तीव्रतरस्तीव्रतम इति । तीव्रमन्दग्रहणात् मध्यपतितस्य मध्यमभावस्यापि ग्रहणम् । मध्यमो मध्यमतरो मध्यमतमः । एते च तीव्रमध्यमन्दाः प्रकर्षापकर्षवर्तित्वादधिमात्रादिभेदेन भित्त्वा व्याख्येयाः । इतिशब्दः समस्तसाम्परायिककर्महेतुसङ्ग्रहार्थः । तद्विशेषाच्च बन्धविशेषो भवतीति तद्वित्यनेन तीव्रमध्यमन्दाः परामृश्यन्ते । तीव्रादीनां विशेषस्तद्विशेषस्तस्मात् तद्विशेषाद् बन्धविशेष इत्यतः सतीष्वपीन्द्रियकषायाव्रतक्रियासु तीव्रभावाद्यपेक्ष एव कर्मबन्धः सिद्धः ॥ ७ ॥

**भा०—अत्राह-तीव्रमन्दादयो भावा लोकप्रतीताः। वीर्यं च जीवस्य क्षायोपशमिकः क्षायिको वा भाव इत्युक्तं (अ० २, सू० ४-५)। अथाधिकरणं किमिति ? । अत्रोच्यते—**

टी०—अत्राहेत्यादिः सम्बन्धग्रन्थः । अत्रेत्यतिक्रान्तसूत्रव्याख्यानावसाने परः प्रश्नयत्यजानानः--तीव्रमन्दादयो भावाः । आदिग्रहणात् ज्ञाताज्ञातभावपरिग्रहः। एते लोकप्रतीताः । लोक्यत इति लोकः-प्रेक्षापूर्वकारी शिष्टजनः, सामान्येन वा रथ्यापुरुषादिलोकस्तस्य प्रतीतास्तीव्रादयः प्रकर्षापकर्षादिलक्षणा इति, नैषां लक्षणं प्रष्टव्यं वीर्यं चात्मनो वीर्यान्तरायकर्मक्षयोपशमप्रयोजनः क्षयप्रयोजनो वा भावः--आत्मनो भवनं परिणामविशेषः, शक्तिलक्षण इत्युक्तं-निश्चितम् । अथाधिकरणं किं तीव्रादिगोचरत्वाद् विप्रतिपत्तेश्चाधिकरणविषय एव प्रश्नः, प्रथमतरं वाऽतिसंक्षिप्तमुक्तमधिकरणम् , अधुना तद्विस्तरार्थिना तीव्रादिभावपरिज्ञानानन्तरमधिकरणं पृच्छ्यते-किंस्वरूपमधिकरणमिति। अत्रोच्यते इत्याहाचार्यः । अत्र-अधिकरणस्वरूपप्रश्ने अभिधीयते तेषां तीव्रादीनां [द्वि]विधा ।

अधिकरणस्य द्वैविध्यम् **सूत्रम्—अधिकरणं जीवाजीवाः ॥६–८॥**

टी०—अथवा यस्मिन् सति त्रिविधास्रवप्रवृत्तिस्तदधिकरणमनिर्धारितभेदम्, अतस्तद्भेदनिर्दिधारयिषयेदमाचष्टे—अधिकरणं जीवाजीवाः ॥ साम्परायिककर्मबन्धः प्रस्तुतस्तस्य विषय आस्रवोऽधिकरणम्। तीव्रादीनां जीवाजीवविषयत्वात्, जीवानजीवान् वा विषयीकृत्य सत्त्वाः प्रवर्तन्ते तीव्रादिभावेन । ते च जीवा अजीवा वा तीव्रादिभावेन भवितुः परिणन्तुरात्मनो विषयमुपेताः साम्परायिककर्मबन्धहेतवो भवन्तीति दुर्गतिप्रस्थाननिमित्तत्वादधिकरणशब्दवाच्याः । ननु चाधिकरणिकी क्रिया प्रागेवंविधैवोक्ता, किमर्थं पुनरधिकरणमुच्यते ?। चरितार्थत्वादन्यतरोपदेश एव ज्यायानिति, अत्रोच्यते। पूर्वत्र क्रियासहायद्रव्यादानमात्रविवक्षया कीर्तितमाधिकरणिक्यम्, इह पुनरास्रवोत्कर्षापकर्षोपादानसामर्थ्यादनभिहितविशेषकृत्यार्थमिदमुच्यते–जीवाजीवाः। इतरेतरयोगद्वन्द्वः। द्विवचनप्रसङ्ग इति चेत् तन्न। व्यक्त्या पर्यायभेदस्य विवक्षितत्वादिति, जीवाजीवाधिकरणमित्यस्तु सूत्रे लघुत्वादित्युच्यते जीवाजीवावेवाधिकरणमिति समानाधिकरणकल्पस्येत्याशङ्कायां जीवाजीवद्रव्यमात्रसम्प्रतीतेरास्रवविशेषाभावः स्यात्। आस्रवस्य हि क्रियालक्षणस्य जीवाः कारणं–निमित्तमिष्यन्ते ॥ स चैवं सति न सिध्यतीति पुरातन एव पाठः साधीयान्। तस्मादास्रवस्यात्मपरिणामस्य प्रयोगलक्षणस्य बाह्यश्चेतनोऽचेतनो वा पदार्थ उत्पत्तौ निमित्तमिति हिंसादिपरिणामो जीवाधिकरणोऽजीवाधिकरणश्चेत्येनमेवार्थं भाष्येण स्फुटयति—

**भा०—अधिकरणं द्विविधम्—द्रव्याधिकरणं भावाधिकरणं च। तत्र द्रव्याधिकरणं छेदनभेदनादि। शस्त्रं च दशविधम् । भावाधिकरणमष्टोत्तरशतविधम्। एतदुभयं जीवाधिकरणमजीवाधिकरणं च ॥ ८ ॥**

टी०—अधिकरणं द्विविधमित्यादि भाष्यम्। दुर्गत्यधिकारादधिकरणम्। तच्चै(कै)कशो द्विप्रकारं, जीवविषयं जीवा( द्रव्या )धिकरणं भावाधिकरणं च। अजीवविषयमपि द्रव्याधिकरणं भावाधिकरणं च। समुच्चयार्थश्चशब्दः। द्रव्यमेवाधिकरणं द्रव्याधिकरणम्। एवं भावाधिकरणमपि। तत्र द्रव्याधिकरणं छेदनभेदनादि। शस्त्रं च दशविधम्। तत्रेति तयोर्द्रव्यभावाधिकरणयोर्द्रव्याधिकरणं तावदुच्यते । छिद्यते येन परशुवासीव्यधनादिना तत् छेदनम् । भिद्यते येन मुद्गरकोणकादिना तद् भेदनम् । आदिग्रहणात् त्रोटनविशसनोद्बन्धनयन्त्राभिघातादि वक्ष्यमाणं निर्वर्तनादिसूत्रे ॥ ननु चादिग्रहणादेव नानाविधशस्त्रान्तर्भावोऽपि द्रव्यरूपत्वात् किमर्थं भेदेनोपादानं शस्त्रस्येति ? । उच्यते—संख्याविशेषनिर्धारणार्थं दशैव प्रकाराः शस्त्रस्येति। चशब्दोऽवधारणार्थः। द्रव्यशस्त्रं दशविधमेव परश्वधदहनविषलवनस्नेहक्षाराम्लानि अनुपयुक्तस्य च मनोवाक्कायास्त्रयः। एतेन द्रव्याधिकरणेन जीवाजीवौ विषयीकृत्य साम्परायिकं कर्म बध्यते। तद्यथा—पाणिपादशिरोधरादीनां परश्वादिना छेदः। अग्निना दहनं

१ 'करणतायां कस्येत्याशङ्कायां' इति प्रतिभाति। २ 'स्वादिदहन०' इति क-पाठः।

सचेतनानाम्। विषेण मारणम्। लवणेन पृथिव्यादिकायाद्युपघातः। स्नेहेन घृततैलादिना चैषामेवोपघातः। क्षारेण सकलत्वङ्मांसाद्यवकर्तनम्। अम्लेनाप्यारनालादिना पृथिव्यादिकायोपघातः। अनुपयुक्तस्य च कायादयो यां चेष्टामभिनिर्वर्तयन्ति तया तया कर्म बध्यत इति। अथ भावाधिकरणं कतिप्रकारमित्याह—**भावाधिकरणमष्टोत्तरं शतम्**। भावः—तीव्रादिपरिणाम आत्मनः, स एवाधिकरणं तच्चाष्टोत्तरशतभेदमष्टोत्तरशतं भेदानामागाम्यनन्तरं सूत्रेण भावयिष्यत इत्येदुभयमाख्यातं यत् प्राक् पृष्टं परेण जीवाधिकरणमजीवाधिकरणं च, नातः परमन्योऽधिकरणभेदोऽस्तीति ॥ ८॥

## सूत्रम्—तत्र-आद्यं संरम्भसमारम्भारम्भकृतकारितानुमंत-कषायविशेषैस्त्रिस्त्रिस्त्रिश्चतुश्चैकशः ॥ ९ ॥

टी०—तत्रेत्यनेन सम्बन्धं सूचयति, तयोर्जीवाजीवाधिकरणयोरनन्तरसूत्रप्रस्तुतयोर्जीवाधिकरणं तावदुच्यते, आद्यं संरम्भसमारम्भेत्यादि सूत्रम् ॥

भा०—**आद्यमिति सूत्रक्रमप्रामाण्याज्जीवाधिकरणमाह। तत् समासतस्त्रिविधम्। संरम्भः १ समारम्भः २ आरम्भः ३ इति।** एतत् पुनरेकशः कायवाङ्मनोयोगविशेषात् त्रिविधं भवति। तद्यथा—कायसंरम्भः वाक्संरम्भः मनःसंरम्भः; कायसमारम्भः वाक्समारम्भः मनःसमारम्भः; कायारम्भः वागारम्भः मनआरम्भ इति ॥

जीवाधिकरणस्य भेदप्रभेदाः

टी०—आदौ भवमाद्यम्। इतिशब्दः शब्दपदार्थकः। किंकृतं पुनराद्यत्वं किं वा तदाद्यमित्याह—**सूत्रक्रमप्रामाण्याज्जीवाधिकरणमाह**। सूत्रक्रमः—सूत्रानुपूर्वी सूत्रसन्निवेशः तत्प्रामाण्यादाद्यम्। किं तत्? जीवाधिकरणमित्याह सूत्रकारः। तत् जीवाधिकरणं समासतः—संक्षेपतः त्रिविधं—त्रिप्रकारम्। प्रकारत्रयप्रदर्शनायाह—**संरम्भः समारम्भ आरम्भ इति**। तत्र प्राणातिपातादिसंकल्पावेशः संरम्भः। तत्साधनसन्निपातजनितपरितापनादिलक्षणः समारम्भः। प्राणातिपातादिक्रियानिर्वृत्तिरारम्भः। एतदिति जीवाधिकरणं परामृशति। पुनःशब्दः क्रियाव्यावृत्त्यर्थः। सकृद् भिन्नं संरम्भादिभेदेन जीवाधिकरणं भिद्यते। एकश इत्येकैकम्। संरम्भाधिकरणादि कायवाङ्मनोयोगविशेषात् त्रिविधं भवति। कायादयः प्राग् व्याख्यातस्वरूपाः। कायसंरम्भाधिकरणं वाक्संरम्भाधिकरणम्, एवं समारम्भारम्भयोरपि कायादिभेदेन च त्रैविध्यं वाच्यम्। योगभेदेन विकल्प्य संरम्भादीनधुना क्रियाद्वारेण योगान् विकल्पयति—

संरम्भादीनां व्याख्या

भा०—**तदप्येकशः कृतकारितानुमतविशेषात् त्रिविधं भवति। तद्यथा—कृतकायसंरम्भः कारितकायसंरम्भः अनुमतकायसंरम्भः; कृतवाक्संरम्भः कारितवाक्संरम्भः अनुमतवाक्संरम्भः; कृतमनःसंरम्भः कारितमनःसंरम्भः**

१ 'भवति' इत्यपि पाठः।

**अनुमतमनःसंरम्भः इति । एवं समारम्भारम्भावपि । तदपि पुनरेकशः कषाय-विशेषाच्चतुर्विधम् ॥**

टी०—संरम्भं कायेन करोति वाचा करोति मनसा करोतीति । एवं कारयत्यपि विकल्पत्रयं, तथाऽनुमन्यते चेति विकल्पत्रयमेव । कृतवचनं स्वतन्त्रकर्तृप्रतिपादनार्थम् । कारिताभिधानं प्रयोज्यपरतन्त्रप्रदर्शनार्थम् । अनुमतिवचनं प्रयोजकस्य मानसपरिणामप्रद-र्शनार्थम् । एतदेव भाष्यकारो दर्शयति—तद्यथा–कृतकायसंरम्भ इत्यादिवचननवकेन । यथाऽऽदौ कायसंरम्भः कृतकारितानुमतभेदेन विकल्पितः, एवं समारम्भारम्भावपि कृतकारि-तानुमतविकल्पितौ वाच्यौ । समारम्भं करोति समारम्भं कारयति समारम्भमनुमन्यते काये-नेत्यादिर्नवधा विकल्पना । तथाऽऽरम्भं करोति कारयति अनुमोदते चेति नवैव विकल्पा वेदितव्याः । तदपीत्यादिना पुनश्चतुर्धा भिनत्ति । कृतकायसंरम्भादिकरणादि पुनरेकैकं कषायविशेषाच्चतुर्विधं भवति । कषायाः प्रागभिहितलक्षणाः । सामान्येन विशेषो भेदस्त-द्भेदाच्चतुर्विधं भवति ।

**भा०—तद्यथा–क्रोधकृतकायसंरम्भः मानकृतकायसंरम्भः मायाकृतका-यसंरम्भः लोभकृतकायसंरम्भः, क्रोधकारितकायसंरम्भः मानकारितकायसं-रम्भः मायाकारितकायसंरम्भः लोभकारितकायसंरम्भः, क्रोधानुमतकायसंरम्भः मानानुमतकायसंरम्भः मायानुमतकायसंरम्भः लोभानुमतकायसंरम्भः । एवं वाङ्मनोयोगाभ्यामपि वक्तव्यम् । तथा समारम्भारम्भौ ॥**

टी०—तद्यथेत्यादिना दर्शयति यथाभिहितलक्षणान् विकल्पान् क्रोधकृतकायसं-रम्भः । एवं मानमायालोभकृतसंरम्भ इत्यपि वाच्यम् । एवं क्रोधकारितकायसंरम्भः मानमायालोभकारितकायसंरम्भ इत्यपि वाच्यम् । तथा क्रोधानुमतकायसंरम्भः मानमा-यालोभानुमतकायसंरम्भ इत्यपि वाच्यम् । एवं वाङ्मनःसंयोगाभ्यामपि वक्तव्यमित्यति-देशवाक्यम् । एवमित्युक्तप्रकारेण वाग्योगेनापि क्रोधादिविशिष्टेन वाच्यम् । क्रोधकृतवाक्सं-रम्भः मानमायालोभकृतवाक्संरम्भ इत्यपि वाच्यम् । तथा क्रोधकारितवाक्संरम्भः मान-मायालोभकारितवाक्संरम्भ इत्यपि वाच्यम् । तथा क्रोधानुमतवाक्संरम्भः मानमायालो-भानुमतवाक्संरम्भ इत्यपि वाच्यम् । एवं मनोयोगेनापि क्रोधादिविशिष्टेन विकल्पा एतावन्तो वाच्याः । क्रोधकृतमनःसंरम्भः मानमायालोभकृतमनःसंरम्भ इत्यपि वाच्यम् । तथा क्रोध-कारितमनःसंरम्भः मानमायालोभकारितमनःसंरम्भ इत्यपि वाच्यम् । क्रोधानुमतमनःसंरम्भः मानमायालोभानुमतमनःसंरम्भ इत्यपि वाच्यम् । एवमेते षट्त्रिंशद्भेदाः, तद्यथा–क्रोधकृ-तकायसंरम्भ इत्यादिना ग्रन्थेन प्रतिपादिताः । तथा समारम्भारम्भाविति अतिदेशेन समा-रम्भस्य षट्त्रिंशद्भेदत्वं संरम्भवत् प्रतिपादयति । क्रोधकृतकायसमारम्भ इत्येवमतिक्रान्तग्रन्थः

१ '०कल्पेन' इति ग–पाठः ।

पुनरावर्तनीयः। ततश्च द्वितीया षट्त्रिंशत् लभ्यते। तथा क्रोधकारितकायारम्भ इत्यप्यभ्याववर्तमाने ग्रन्थे षट्त्रिंशदेव विकल्पानां प्राप्यते। एवमेषा षट्त्रिंशत् त्रिप्रकाराऽपि पिण्डिताऽष्टोत्तरं परिणामशतं भवतीत्येतदेवोपसंजिहीर्षन् दर्शयति—

जीवाधिकर० स्य विकल्पसङ्ख्या

भा०—तदेवं जीवाधिकरणं समासेनैकशः षट्त्रिंशद्विकल्पं भवति। त्रिविधमप्यष्टोत्तरशतविकल्पं भवतीति॥

संरम्भः संकल्पः, परितापनया भवेत् समारम्भः।
प्राणिवधस्त्वारम्भः, त्रिविधो योगस्ततो ज्ञेयः॥ ९॥

टी०—तदेवं जीवाधिकरणं समासेनेत्यादि यत् प्रस्तुतं जीवाधिकरणं तदेवं समासेन-संक्षेपेण एकैकं संरम्भाधिकरणं समारम्भाधिकरणं आरम्भाधिकरणं च षट्त्रिंशद्विकल्पं भवति। त्रिविधमपीति समुच्चयेऽपिशब्दः। तिस्रोऽपि षट्त्रिंशतः शतमष्टोत्तरं विकल्पानां भवतीति भाष्यानुसारणमवसायैव सूत्र एव स्फुटीकरणाय पुनरुच्यते, संरम्भादीनां कषायावसानानामाहितद्वन्द्वानां विशेषशब्देन समानाधिकरणस्तत्पुरुषः षष्ठीसमासो वा प्रत्येकं वा विशेषशब्देनाभिसंबन्धसामर्थ्यात् संरम्भादिविशेषैरिति तृतीयानुपपत्तिः, क्रियावादिपदार्थान्तराभावात्, न वाक्यशेषोपपत्तेः प्रविश पिण्डीमिति यथा तथेहापि क्रियापदावधारणमेकैकं भिद्यात्, एकमेकं त्रींस्त्रीन् भेदान् कुर्यादिति वा, योगादीनामानुपूर्व्यवचनं पूर्वापरविशेषणत्वात्। तस्मात् क्रोधादिचतुष्टयकृतकारितानुमतभेदात् कायादीनां संरम्भसमारम्भविशेषाः षट्त्रिंशद् विकल्पाः स्फुटीक्रियन्ते यन्त्रेण। उद्भूतक्रोधपरिणाम आत्मा करोति स्वयं कायेन संरम्भमिति प्रथमविकल्पः। तथा आविर्भूतमानपरिणाम आत्मा करोति स्वयं कायेनेति द्वितीयः। तथोपजातमायापरिणतिरात्मा करोति स्वयं कायेन संरम्भमिति तृतीयः। तथा लोभकषायग्रस्तः करोति स्वयं कायेन संरम्भमिति चतुर्थः। एवं कृतेन चत्वारो विकल्पाः। कारितेन चत्वारः। अनुमत्यापि चत्वारः। एते द्वादश कायेन लब्धाः। तथा वाचा द्वादश, मनसाऽपि द्वादश, एते षट्त्रिंशत् संरम्भेण लब्धाः। तथा समारम्भेणापि षट्त्रिंशत्, आरम्भेणापि षट्त्रिंशत्, इत्येवमष्टोत्तरं विकल्पशतं भवति। का पुनर्भावना? योगनिमित्तं हि कर्म बध्यते "कायवाङ्मनःकर्म योगः" (अ० ६, सू० १) इति वचनाद्, बन्धस्थितिः। कोपादिकषायाञ्जनवशीकारात् स्वयं करणपरिणतौ सत्यां कारितानुमतिपरिणामद्वारेण च प्राणातिपातादिसंकल्पपरितापनाव्यापत्तयः साम्परायिककर्मबन्धहेतवो भवन्तीति प्रतिपादितं प्राक्। कायादयो व्यस्ताः समस्ताश्च बन्धहेतवः। समस्तास्तु प्रधानोपसर्जनतया च बन्धहेतव इति प्रतीतम्। एवमेतज्जीवाधिकरणं विकल्प्य भावनीयमिति॥ ९॥

| कृतकारितादि यन्त्रम् | | |
|---|---|---|
| कषाय | कषाय | कषाय |
| कृत | कारित | अनुमत |
| ४ | ४ | ४ |
| काय | वाक् | मनः |
| १२ | १२ | १२ |
| ३६ | ३६ | ३६ |

---

१ 'सकषायः' इति घ-पाठः। २ 'आरम्भः प्राणिवधः' इति घ-पाठः। ३ 'णामद्वारेण' इति ङ-पाठः।

भा०—अत्राह—अथाजीवाधिकरणं किमिति ? । अत्रोच्यते—

टी०—अत्राहेत्यादिना सम्बन्धं प्रतिपादयति । अत्रेति जीवाधिकरणव्याख्यानावसाने परोऽनवबुध्यमान आह—अथाजीवाधिकरणं किमिति । अथेत्यानन्तर्यार्थः । जीवाधिकरणादनन्तरमजीवाधिकरणं प्राक् निरदेशि सूत्रकारेण तत् किमिति—किंस्वरूपं—किंस्वभावं तत् ? । इतिकरणः प्रश्नेयत्ताप्रतिपादनार्थः । एवं प्रश्ने अत्रोच्यते इत्याहाचार्यः । अत्र प्रश्नेऽनुरूपमुत्तरमभिधीयते—

सूत्रम्—निर्वर्तनानिक्षेपसंयोगनिसर्गा द्विचतुर्द्वित्रिभेदाः परम् ॥ १० ॥

टी०—निर्वर्तनादयः कृतद्वन्द्वा यथाक्रमं कृतद्वन्द्वैरेव द्व्यादिभिः समानाधिकरणा द्रष्टव्याः । अधिकरणमित्यनुवर्तते, तत् परमित्यनेनाभिसम्बध्यतेऽजीवाधिकरणं, तन्निर्वर्तनादिभेदाच्चतुर्धा अजीवविषयान् निर्वर्तनानिक्षेपसंयोगनिसर्गान् कुर्वन्[1]

निर्वर्तनादीनां व्याख्या रागद्वेषवानात्मा साम्परायिकं कर्म बध्नाति, निर्वर्त्यमानमजीवद्रव्यम् । निर्वर्तना निर्वर्त्यमानप्रयोजना । निर्वर्त्येति[2] भावसाधनो वा । सा द्विधा मूलोत्तरगुणभेदात् । निक्षिप्यतेऽसाविति निक्षेपः—स्थाप्यः कश्चिदजीव एव । स चतुर्विधोऽप्रत्यवेक्षितादिभेदात् । भावसाधनो वा । संयोजनं संयोगः एकत्वीकरणं वा मिश्रणम् । तद् द्वेधा आहारोपकरणभेदात्, निसर्जनं निसर्गः त्यागः उज्झनम् । तत् त्रिधा कायादिभेदात् । परवचनमनर्थकं पूर्वत्राद्यवचनात् , अस्मिन् वा सति आद्यवचनमनर्थकं अर्थापत्तिसिद्धेरितिचेत् तन्न । अन्तरङ्गत्वाप्रतिपादनार्थत्वात् आद्यशब्दस्य बहिरङ्गत्वाप्रतिपादनार्थत्वाच्च परशब्दस्येति विशिष्टार्थप्रतिपत्तिहेतुत्वादुभयं न्याय्यमित्यमुमेवार्थं भाष्येण स्पष्टयति—

भा०—परमिति सूत्रक्रमप्रामाण्यादजीवाधिकरणमाह । तत् समासतश्चतुर्विधम् । तद्यथा—निर्वर्तना निक्षेपः संयोगो निसर्ग इति ।

टी०—परं बहिरङ्गम्, इतिकरणशब्दः पदार्थकः । प्रतिविशिष्टपुरुषप्रणीतसूत्रक्रमस्य प्रमाणत्वात् परं—बहिरङ्गमप्रधानमजीवाधिकरणमाह । जीवपरिणामोऽभ्यन्तरङ्गस्तदायत्तत्वात् कर्मबन्धस्य, निमित्तमात्रत्वाद् बहिरङ्गमजीवाधिकरणम् । इष्टाभिधायी वा परशब्दः । प्रायोगिका वैस्रसा वा निर्वर्तनादयोऽध्यवसेयाः । आद्यं च जीवविषयत्वाद् भावाधिकरणमुक्तं कर्मबन्धहेतुर्मुख्यतः । इदं तु द्रव्याधिकरणमुच्यते । परम्—अमुख्यं निमित्तमात्रत्वात् । तदजीवाधिकरणं समासतः—संक्षेपतः चतुष्प्रकारं भवति । समासग्रहणान्मूलोत्तरगुणादिभेदःशरीरादिः शस्त्रकल्पश्च व्यासः सूक्ष्मप्रभेद आपादितो भवति ॥ तद्यथेत्यादिना चतुरो विकल्पान् स्वरूपतः पठति—निर्वर्तनेत्यादि । इतिकरणो मूलभेदेयत्ताप्रतिपादनार्थः । प्राग् व्याख्याताः शब्दनिर्भेदद्वारेण निर्वर्तनादयः । अधुना भेदद्वारेण स्वरूपकथनमेषां क्रियते—

---

1 '०षया निर्वर्तनानिक्षेपसंयोगनिसर्गानि कुर्वन्' इति ग-पाठः । २ ' निर्वर्तेति ' इति ग-पाठः ।

भा०—तत्र निर्वर्तनाधिकरणं द्विविधम्—मूलगुणनिर्वर्तनाधिकरणमुत्तरगुणनिर्वर्तनाधिकरणं च। तत्र मूलगुणनिर्वर्तना पञ्च शरीराणि वाङ्मनःप्राणापानाश्च। उत्तरगुणनिर्वर्तना काष्ठपुस्तचित्रकर्मादीनि ॥

टी०—तत्रेत्यादि। तत्र—तेषु निर्वर्तनादिषु निर्वर्तना तावद् व्याख्यायते। निर्वर्तनैवाधिकरणं निर्वर्तनाधिकरणम्। अधिकरणमिति समानाधिकरणः, भावसाधनपक्षे षष्ठीतत्पुरुषः निर्वर्तनाया अधिकरणम्। एवमन्यत्रापि योज्यम्। तद् द्विविधं—द्विप्रकारम्। प्रकारद्वयप्रदर्शनार्थमाह—मूलगुणेत्यादि। चशब्दः समुच्चये। मूलं चासौ गुणश्च मूलगुणः। मूलमाद्यं प्रतिष्ठा संस्थानाख्यो गुणो मूलगुणः स एव निर्वर्तनाधिकरणम्। स हि निर्वृत्तः सन् अधिकरणीभवति कर्मबन्धस्य। तथाऽङ्गोपाङ्गसंस्थानमृद्वादितैक्ष्ण्यादिरुत्तरगुणः सोऽपि निर्वृत्तः सन्नधिकरणीभवति कर्मबन्धस्योत्तरगुण एव निर्वर्तनाधिकरणम्। तत्र मूलगुणनिर्वर्तना—पञ्च शरीराणीत्यत्राधिकरणशब्दो नोदितो भाष्यकृता लाघवैषिणा। अनुक्तोऽपि च प्रत्यासत्तेर्गम्यते, अतो मूलगुणनिर्वर्तनाधिकरणम्। औदारिकादीनि पञ्च शरीराणि। तानि च द्वितीयाध्याये व्याख्यातानि प्रकृतवस्तुनि योज्यन्ते। औदारिकशरीरवर्गणाप्रायोग्यद्रव्यैर्निर्मापितमौदारिकशरीरसंस्थानं प्रथमसमयादारभ्य मूलगुणनिर्वर्तनाधिकरणमात्मनो भवति, बन्धनिमित्तत्वात्। उत्तरगुणनिर्वर्तनाधिकरणमौदारिकस्याङ्गोपाङ्गभृजाकर्णवेधावयवसंस्थानादि। वैक्रियस्यापि वपुषः स्ववर्गणाप्रायोग्यद्रव्यनिर्मापितमादिसमयादारभ्य संस्थानं मूलगुणनिर्वर्तनाधिकरणम्, अस्य तूत्तरगुणनिर्वर्तनाधिकरणमङ्गोपाङ्गकेशदशननखादिकम्, आहारकशरीरस्यापि स्ववर्गणायोग्यपुद्गलद्रव्यनिर्मापितं संस्थानं मूलगुणनिर्वर्तनाधिकरणम्, उत्तरगुणनिर्वर्तनाधिकरणमङ्गोपाङ्गादि, कार्मसङ्घातलक्षणस्य कार्मणस्यापि तद्योग्यद्रव्यनिर्मापितस्वसंस्थानं मूलगुणनिर्वर्तनाधिकरणम्, उत्तरगुणनिर्वर्तनाधिकरणमस्य नास्त्येव, तैजसस्याप्युष्णलक्षणस्याशितपीतपावकशक्तिभाजो लब्धिप्रत्ययस्य च परनिग्रहानुग्रहकारिणः स्ववर्गणानिर्मापितसंस्थानं मूलगुणनिर्वर्तनाधिकरणम्, अस्याप्युत्तरगुणनिर्वर्तना नैवास्तीति ॥ वाङ्मनःप्राणापानाश्चेति। चशब्दान्मूलगुणनिर्वर्तनाभिसंबन्धः। वाङ्मनोवर्गणायोग्यद्रव्यनिर्मापितौ वाङ्मनःसंस्थानविशेषौ मूलगुणनिर्वर्तनाधिकरणम्। तथा प्राणापानवर्गणायोग्यनिर्मापितौ उच्छ्वासनिश्वासाकारौ मूलगुणनिर्वर्तनाधिकरणम्। एषामप्युत्तरगुणनिर्वर्तना न सम्भवत्येवेति। मूलगुणनिर्वर्तनाधिकरणमित्थं व्याख्याय प्रकारान्तरेणोत्तरगुणनिर्वर्तनामाचिख्यासुराह—काष्ठपुस्तचित्रकर्मादीनीति। कर्मशब्दः प्रत्येकमभिसम्बध्यते। तत्र काष्ठकर्म कुट्टिमपुरुषादीनां कृतिः, अत एवोत्तरगुणनिर्वर्तनोच्यते। प्रसिद्धपुरुषाद्याकृतेः प्रतिबिम्बनिर्वर्तनादेव पुस्तचित्रकर्मणी अपि वाच्यम्। पुस्तकर्म सूत्रचीवरकादिग्रथितकृत्रिमपुत्रकादिकं, चित्रकर्मात्यन्तप्रसिद्धम्। आदिग्रहणात् लेप्यपत्र-

निर्वर्तनाधिकरणस्य स्वरूपम्

१ 'परितो मृद्वाङ्ग०' इति ख-ग-पाठः।

च्छेद्यजलकर्मभूकर्मपरिग्रहः । शस्त्रमप्यनेकाकारमाख्यातं कृपाणादि । वधस्थानता मूलगुणनिर्वर्तनाधिकरणं, तीक्ष्णतोज्ज्वलताद्युत्तरगुणाधिकरणमिति ॥

अधुना निक्षेपाधिकरणस्वरूपनिर्धारणायाह—

**भा०—निक्षेपाधिकरणं चतुर्विधम् । तद्यथा—अप्रत्यवेक्षितनिक्षेपाधिकरणं दुष्प्रमार्जितनिक्षेपाधिकरणं सहसानिक्षेपाधिकरणं अनाभोगनिक्षेपाधिकरणमिति ॥**

**टी०—निक्षेपाधिकरणं चतुर्विधमित्यादि ।** तद्यथेत्यादिना चतुरः प्रकारानादर्शयति । अप्रत्यवेक्षिते—चक्षुषाऽनिरीक्षिते भूप्रदेशे निक्षेप्यस्य दण्डकादेः स्थापनमधिकरणं, प्रत्यवेक्षितेऽपि भूप्रदेशे दुष्प्रमार्जिते रजोहरणेनाप्रमार्जिते वा निक्षेपोऽधिकरणं भवति । सुप्रमार्जितं त्वेकतस्त्रिरिति । तद्विपरीतं दुष्प्रमार्जितम् । सहसेति शक्त्यभावाच्चेतयतोऽप्रत्यवेक्षितदुष्प्रमार्जितदेशे निक्षेपोऽधिकरणस्येतरोऽपि सहसा निक्षिपतः, अनाभोगोऽत्यन्तविस्मृतिः, नहीदं स्मरति प्रत्यवेक्षिते सुप्रमार्जिते च देशे निक्षेप्तव्यम्, तथाविधस्य निक्षेपोऽधिकरणमिति ॥

इदानीं संयोगाधिकरणद्वैविध्यमिति प्रदर्शनायाह—

**भा०—संयोगाधिकरणं द्विविधम्—भक्तपानसंयोजनाधिकरणं उपकरणसंयोजनाधिकरणं च ।**

**टी०—संयोगाधिकरणं द्विविधमित्यादि ।** तत्र भक्तमशनखाद्यस्वाद्यभेदात् त्रिधा । तस्य संयोजनं पात्रे मुखे वा व्यञ्जनगुडोपदंशफलशाकादिना सह, तथा द्राक्षादाडिमपानकाद्यपि प्रासुकजलारनालादि च खण्डशर्करामरिचादिभिः, ए[वं]तद्भक्तपानसंयोजनाधिकरणम्, उपकरणसंयोजनाधिकरणम् ।

सम्प्रति निसर्गाधिकरणत्रैविध्यप्रतिपादनायाह—

**भा०—निसर्गाधिकरणं त्रिविधम्—कायनिसर्गाधिकरणं वाङ्निसर्गाधिकरणं मनोनिसर्गाधिकरणमिति ॥ १० ॥**

**टी०—निसर्गाधिकरणमित्यादि ।** कायः—शरीरमौदारिकादिभेदं तस्य निसर्गो—न्यायापेतमुज्झनमविधिना स्वच्छन्दत इतियावत् । शस्त्रपाटनाग्निजलप्रवेशोद्बन्धनादिभिः । वाचोऽपि त्यागः—प्रेरणं शास्त्रोपदेशादृते । मनसश्चेति । अत्र बहिर्व्यापारापेक्षया शरीरादीनामजीवनिसर्गाधिकरणत्वमुक्तम् । जीवाधिकरणे चात्मनः परिस्पन्दोऽन्तःपरिणामो योगः । मूलगुणनिवर्तनाधिकरणेऽवस्थानमात्रमेषामिति विशेषः ॥ १० ॥

---

१ 'देशनिक्षेपा०' इत्यपि पाठः । २ अस्य व्याख्या किं न कृतेति प्रश्नः । ३ 'म संस्थान०' इति ग-पाठः ।

भा०—अत्राह—उक्तं भवता (अ० ६, सू० ५) सकषायाकषाययोर्योगः साम्परायिकेर्यापथयोरास्रव इति । साम्परायिकं चाष्टविधं वक्ष्यते (अ० ६, सू० २८) । तत् किं सर्वस्याविशिष्ट आस्रव आहोस्वित् प्रतिविशेषोऽस्तीति ? । अत्रोच्यते—सत्यपि योगत्वाविशेषे प्रकृतिं प्राप्यास्रवविशेषो भवति । तद्यथा-

टी०—अत्राह-उक्तं भवतेत्यादिना सम्बन्धमाचष्टे । अत्र सामान्यास्रवविचारे भवतोक्तम् । किमुक्तमिति उक्तस्यानुवादं करोति—सकषायाकषाययोर्बन्धकयोर्योगः-कायादिव्यापारो यथासंख्यं साम्परायिकेर्यापथयोः कर्मणोरास्रवो भवति । इतिशब्द एवशब्दार्थे । एवमुक्तं भवतेति । साम्परायिकं चाष्टविधं ज्ञानावरणादिभेदेनाभिधास्यते कर्म जातिभेदेन । एवं सति फलभेददर्शनात् सन्देहबीजसम्भवः । तस्मात् प्रष्टव्यम्-किं सर्वस्य ज्ञानावरणादेरष्टविधस्यापि कस्यापि कायादियोगोऽविशिष्टः-सामान्यलक्षण आस्रव आहोस्वित् प्रतिविशेषो-भेदः कर्म प्रति कश्चिदस्तीति । इतिकरणं प्रश्नेयत्तां दर्शयति । अत्रोच्यते इत्याहाचार्यः । अस्ति भेद इति संगिरामहे । योगसामान्येनाभेदे भवत्यपि योगसामान्येनैकरूपपुद्गलग्रहणे सति वक्ष्यमाणास्रवविशेषैः कर्मजातेः फलभेदः, यथा आहारः कश्चिदेकरूपोऽपि जग्धः प्राप्य जठरं रस-रुधिर-मांस-मेदो-मज्जा-ऽस्थि-शुक्र-मलविशेषभावेन परिणमते, तथैकप्रयोगचितेऽस्य कर्मण आस्रवभेदसम्भवे सति अष्टधा परिणामः प्रकृतिं प्राप्येति । प्रकृतिः-स्वभावः । किञ्चित् कर्म ज्ञानावरणस्वभावं किञ्चिद् दर्शनावरणस्वभावं इत्येवमष्टविधमपि भिन्नस्वभावं वक्ष्यते, अतः प्रकृतिमाश्रित्य आस्रवभेदः । तद्यथेत्यनेन तथास्रवभेदं प्रति प्रकृतिं प्रत्यक्षीकरोति । नाप्यक्रमन्यस्तयोस्तावदाद्ययोः प्रकृत्योरास्रवभेदः ।

## सूत्रम्—तत्प्रदोषनिह्नवमात्सर्यान्तरायासादनोपघाता ज्ञानदर्शनावरणयोः ॥ ६-११ ॥

टी०—प्रदोषादयः कृतद्वन्द्वा अपि तच्छब्देन सह विहितषष्ठीतत्पुरुषसमासाः सूत्रकृता निर्दिष्टाः । तयोः प्रदोषादय इति सामान्येनाभिनिर्वृत्ते समासे पश्चादिदमुच्यते—तयोरिति कयोः प्रदोषादय आस्रवा इत्याह—ज्ञानदर्शनावरणयोरिति । ज्ञानं च दर्शनं च ज्ञानदर्शने, आवरणम्-आच्छादनं ज्ञानदर्शनावरणयोरिति । एनमेवार्थं भाष्येण स्पष्टयति—

ज्ञानावरणीयकर्मण आस्रवाः

भा०—आस्रवो ज्ञानस्य ज्ञानवतां ज्ञानसाधनानां च प्रदोषो निह्नवो मात्सर्यम् अनन्तराय आसादनं उपघात इति ज्ञानावरणास्रवा भवन्ति । एतैर्हि ज्ञानावरणकर्म बध्यते । एवमेव दर्शनावरणस्येति ॥ ११ ॥

१ 'वरणस्यास्रवा' इति घ-पाठः ।

टी०—आस्रवो ज्ञानस्य ज्ञानवतामित्यादि भाष्यम् । उक्तलक्षण आस्रवस्तमभिसम्बध्नन् प्रदोषादिना एकैकेनैकवचनात् । तमेवाह—आस्रव इति । कस्यास्रवः प्रदोषादिः किंविषयो वेति शङ्कायां साम्परायिकाष्टविधकर्मप्रस्तावात् प्रतिविशिष्टानुपूर्वीव्यवस्थातश्चाद्यप्रकृतिमेव सम्बध्नाति—ज्ञानस्येति । ज्ञानस्य सम्बन्धिनः प्रदोषादयो ज्ञानविषयास्तदावरणस्य कर्मण आस्रवा भवन्ति । ज्ञानं चेतना आत्मनः स्वरूपं इति । तज्ज्ञप्तिपिपादयिषयेदमाह—एतैर्हि ज्ञानावरणकर्म बध्यते । यस्मादेतैः करणभूतैः-अध्यवसायविशेषैः प्रदोषादिभिरात्मना स्वपरिणामैः कर्म ज्ञानावरणाख्यं बध्यते उपादीयते गृह्यते तस्मादेव आस्रवा इति । एवं ज्ञानावरणास्रवानाख्याय तत्तुल्यत्वाद् दर्शनावरणस्यातिदेशं करोति—एवमेव दर्शनावरणस्येति । एवमेवेत्यनेनातिदेशं प्रतिपादयति, यथा ज्ञानावरणस्यास्रवाः प्रदोपादयस्तथा दर्शनावरणस्यापि कर्मण एत एवास्रवा बोद्धव्याः । दर्शनं चक्षुरचक्षुरवधिकेवलभेदम् । सामान्यमात्रोपयोगश्चेतनादिविशेषः, तस्यावरणं नवधा, निद्रादयोऽपि हि यथोक्तलक्षणाश्चक्षुर्दर्शनादिविघातकारित्वात् तदावरणम्, अत्राप्युपघात इति । इति-शब्देनाद्यार्थेनालस्यस्वपनशीलतानिद्राप्राणातिपातादयः परिगृह्यन्ते ।

दर्शनावरणीयकर्मण आस्रवाः

इतिशब्दस्तु ज्ञानदर्शनावरणयोरास्रवेयत्ताप्रदर्शनार्थः । एवमुक्तेन प्रकारेण दर्शनस्य दर्शनवतां दर्शनसाधनानां च प्रदोषादय आलस्यादयश्च दर्शनावरणस्य आस्रवा भवन्तीति प्रतिपादितम् ॥ ११ ॥

इदानीमसद्वेद्यसद्वेद्ययोरास्रवाश्चिन्त्यन्ते, यथाऽनयोः कर्मप्रकृत्योर्नियमेनायमास्रवकलापः । तद्यथा—दुःखशोकादिभिर्भूतव्रत्यनुकम्पादिभिश्च यथाक्रममसद्वेद्यसद्वेद्ययोरास्रवकलापोऽवगन्तव्यः सूत्रद्वयेन—

सद्वेद्यस्यास्रवाः

**सूत्रम्—दुःखशोकतापाक्रन्दनवधपरिदेवनान्यात्मपरोभयस्थान्यसद्वेद्यस्य ॥ ६–१२ ॥**

असद्वेद्यस्यास्रवाः

**सूत्रम्—भूतव्रत्यनुकम्पा दानं सरागसंयमादि योगः क्षान्तिः शौचमिति सद्वेद्यस्य ॥ ६–१३ ॥**

टी०—दुःखादयः कृतद्वन्द्वाः षडप्यास्रवा भवन्त्यसद्वेदनीयस्य कर्मणः । भूतव्रत्यनुकम्पादयोऽपि पश्चाद्विहितद्वन्द्वाः सद्वेदनीयस्य कर्मण आस्रवा द्रष्टव्याः । तत्र प्रथमसूत्रभाष्यम्—

भा०—दुःखं शोकः तापः आक्रन्दनं वधः परिदेवनमित्यात्मसंस्थानि परस्य क्रियमाणानि उभयोश्च क्रियमाणानि असद्वेद्यस्यास्रवा भवन्तीति ॥ १२ ॥

टी०—दुःखं शोकस्ताप इत्यादि। तत्र दुःखयतीति दुःखं वधलक्षणं विरोधिद्रव्यान्तरोपनिपातादभिमतवियोगानिष्टश्रवणादसद्वेद्योदयापेन्नः पीडालक्षणः परिणाम आत्मनो दुःखमित्यर्थः। अनुग्राहकस्नेहादिव्यवच्छेदे वैक्लव्यविशेषः शोकः। अभिमतद्रव्यवियोगादिपारिभाव्यादाविलान्तःकरणस्य तीव्रानुशयपरिणामस्तापः। परितापसंयुक्ताश्रुनिपाताङ्गविकारप्रचुरविलापादिव्यक्तम् आक्रन्दनम्। प्राणिप्राणवियोजनं वधः कशाद्यभिघातश्च संक्लेशप्रवणः। स्वपरानुग्रहनाथनमनुकम्पाप्रायं परिदेवनम्। शोकादयस्तु सर्वे दुःखजातीया एव, तथापि पृथगभिधानमकारि सूत्रकारेण, तद्विषयासंख्येयत्वेऽपि कतिपयविशेषसम्बन्धेन तज्जात्याख्यानात्। इतिशब्द आद्यर्थे। आदिग्रहणाच्च निरनुकम्पत्वावाहनविहेठनदमनबन्धाङ्गोपाङ्गवेदनासंक्लेशजननतीव्राशुभपरिणामप्राणिवधादयः परिगृह्यन्ते। आत्मा च परश्चोभयं च तेषु स्थितानि दुःखादीन्यात्मपरोभयस्थानि। तद् विवृणोति—आत्मस्थानीति। स्वात्मनि वर्तमानानि यथोक्तलक्षणानि दुःखादीनि सर्वज्ञप्रणीतागमनिरपेक्षाणि असद्वेद्यस्य कर्मण आस्रवा भवन्ति। विदेश्चेतनकर्मणो ग्रहणम्। असदिति वेद्यते यत् तदेतदसद्वेद्यम्, अप्रशस्तत्वात्। तथा परस्य क्रियमाणानि स्वात्मव्यतिरिक्तस्य चेतनावतः पदार्थस्योत्पाद्यमानानि। एतान्येव दुःखादीनि स्वात्मपरयोरपि क्रियमाणान्यसद्वेद्यस्य कर्मण आस्रवा भवन्तीति पूर्वं स्वात्मन एव दुःखाद्युत्पादयन्ति शस्त्रपाटना-ऽग्निप्रवेश-भृगुप्रपातादिना, परस्यैव वा शस्त्रादिना दुःखाद्युत्पादयन्ति-उभयस्थानि तु अधमर्णसमवाये सत्युत्तमर्णस्य तन्निरोधपरस्य भुजिक्रियानिवृत्तावुभयोः क्षुत्कृत एव दुःखादिः सम्भवति ॥ १२ ॥

(margin: दुःखादीनां लक्षणानि)

एवमसद्वेद्यास्रवान् निरूप्य सद्वेद्यास्रवनिरूपणार्थमाह—

**भा०— सर्वभूतानुकम्पा अगारिष्वनगारिषु च व्रतिष्वनुकम्पाविशेषो दानं सरागसंयमः संयमासंयमः अकामनिर्जरा बालतपोयोगः क्षान्तिः शौचमिति सद्वेद्यस्यास्रवा भवन्ति ॥ १३ ॥**

टी०—सर्वभूतानुकम्पेत्यादि द्वितीयसूत्रभाष्यम्। सर्वाणि च तानि भूतानि चेति सर्वभूतानि, भवन्ति अभूवन् भविष्यन्ति च (इति भूतानि) पृथिव्यप्तेजोवायुवनस्पतिद्वित्रिचतुःपञ्चेन्द्रियाख्यानि तेषु। अनुकम्पा दया घृणेत्यनर्थान्तरम्। अगारं—गेहं खण्डणीपेषणीचुल्लयुदकुम्भमार्जनीव्यापार-

(margin: भाष्यगतशब्दानां व्याख्या)

---

१ 'वाधालक्षणं' इति ङ-पाठः। २ 'दयापेक्षः' इति ङ-पाठः। ३ 'वन्धः' इति ङ-पाठः। ४ 'चेतनमाचरतः' इति ङ-पाठः। ५ '०तपो योग०' इत्यपि संभवति।

६ विचार्यताम्—"खण्डनी पेषणी चुल्ली, जलकुम्भः प्रमार्जनी।
पञ्च सूना गृहस्थस्य, तेन स्वर्गं न गच्छति ॥ १ ॥"

योगः अनिवृत्तानां वा कार्पटिकादीनां गृहस्थलिङ्गभाजामाचारोऽगारशब्दवाच्यः, तद्योगाद्-गारिणस्तेष्वगारिषु, गृहस्थेष्वित्यर्थः। तद्विपरीता अनगाराः कुतश्चित् पापस्थानान्निवृत्ताः कुतश्चिन्न निवृत्ताः सर्वे पाखण्डिनः श्रावकाः सर्वारम्भन्यावृत्तिभाजो वा यतयस्तेषु चानगारिषु प्राणातिपातादिनिवृत्तिव्रतसम्पन्नेषु अनुकम्पाविशेषः–प्रकृष्टानुकम्पा अतिशयवती। यत् तेषु दानं भक्तपानवस्त्रपात्राश्रयादेर्दीनानाथवनीयकादिषु अगारिष्वनगारेषु च, ज्ञानदर्शनाचर-णसम्पन्नेषु त्वेकान्तकर्मनिर्जराफलं च भवति। अथवाऽनुग्रहबुद्ध्याऽऽर्द्रीकृतचेतसः परपीडा-मात्मसंस्थामिव कुर्वतोऽनुकम्पनमनुकम्पा। स्वस्य परानुग्रहाभिप्रायेणातिसर्गो दानम्। रञ्ज-नाद् रागः–संज्वलनलोभादिकषायाः तत्सहवर्ती सरागः। संयमनं संयमः–प्राणिवधाद्युप-रतिः। सरागस्य संयमः **सरागसंयमः**। मूलगुणोत्तरगुणसम्पल्लोभाद्युभयभाज इतिया-वत्। **संयमासंयमः** स्थूलप्राणातिपातादिनिवृत्तिः अणुव्रतगुणव्रतशिक्षाव्रतविकल्पा। विषया-नर्थनिवृत्तिमात्माभिप्रायेणाकुर्वतः पारतन्त्र्यादुपभोगादिनिरोधः अकामनिर्जरा, अका-मस्य–अनिच्छतो निर्जरणं–पापपरिशाटः पुण्यपुद्गलोपचयश्च, परवशस्य चामरणमकामनिर्ज-रायुषः परिक्षयः। मिथ्याज्ञानोपरक्ताशया बालाः शिशव इव हिताहितप्राप्तिपरिहारवि-मुखाः तपो जलानलप्रवेशहिनीसाधनगिरिशिखरभृगुप्रपातादिलक्षणं तेन तादृशा तपसा बालानां योगो बालसम्बन्धित्वाद् वा तपोऽपि बालं तेन बालतपसा योगो बालतपो-योगः। अथवा बालं तपो येषां ते बालतपसः। लोकाभिमतनिरवद्यक्रियानुष्ठानं योगः। दण्डभावनिवृत्त्यर्थं योगाभिधानम्। धर्मप्रणिधानात् क्रोधनिवृत्तिर्मनोवाक्कायैः क्षान्तिः, क्रोधकषायोदयनिरोधः उदितस्य वा कथञ्चिद् वैफल्यापादनम्। क्षमा सहनं, क्षमेरुदितो देवादि-कस्य क्षान्तिः, अन्यस्य तु क्षमैव। लोभकषायविशेषाणामुपरमः शौचम्। स हि कषायस्तृष्णा-लक्षण आन्तरो मलस्तत्प्रक्षालने शौचं, रक्तस्यात्मवाससः सन्तोषवारिणा विमलतापादनं, निरु-द्धवाक्कायमनोऽकुशलप्रवृत्तेश्चरणं तपोऽनुष्ठायिनः प्रायो निर्जराफलम्, तदेकदेशानुष्ठायिनस्तु सद्वेद्यास्रवः। तथा द्रव्यशौचं स्नेहगन्धलेपापकर्षलक्षणं प्रासुकजलादिना क्रियमाणमास्रवः सद्वेद्यस्य भूयसा जायते। इतिशब्दः प्रकारार्थ आद्यर्थो वा। धर्मानुरागः

सद्वेद्यस्यान्येऽप्यास्रवाः

धर्मनिषेवणशीलव्रतपौषधोपवासरतितपोऽनुष्ठानबालवृद्धतपस्विग्लानवैया-वृत्त्यानुष्ठानधर्माचार्यमातृपितृभक्तिसिद्धचैत्यपूजाशुभपरिणामाश्च सद्वेद्य-स्यास्रवा भवन्तीति ॥ १२ ॥

एवमभिधाय सदसत्प्रकारस्य वेदनीयकर्मण उपादानहेतूनधुना दर्शनचारित्रमोहभाजो मोहनीयस्य संसारपद्धतिलताबीजस्यात्मलाभहेतव उच्यन्ते—

---

१ 'दर्शनचरण' इति ङ-पाठः। २ 'प्रवेशेऽग्निनीसाधनगिरि०' इति ङ-पाठः।

सूत्रम्—केवलिश्रुतसङ्घधर्मदेवावर्णवादो दर्शनमोहस्य ॥ ६-१४ ॥

दर्शनमोहस्यास्रवाः भा०—भगवतां परमर्षीणां केवलिनामर्हत्प्रोक्तस्य च साङ्गोपाङ्गस्य श्रुतस्य चातुर्वर्णस्य सङ्घस्य पञ्चमहाव्रतसाधनस्य धर्मस्य चतुर्विधानां च देवानामवर्णवादो दर्शनमोहस्यास्रवा इति ॥ १४ ॥

टी०—भगवतामित्यादि भाष्यम् । षण्णामर्थादीनां भगाभिधानात् तद्योगाद् भगवन्तः तेषां भगवतामिति । अर्थादयो नृपैरपि सम्भवन्तीति तद् व्यवच्छेदायाह—परमर्षीणामिति । प्रकृष्टा ऋषयः सम्यग्दर्शनज्ञानाचरणसम्पन्नाः ते चाकेवलिनोऽपि भवन्तीति, अतः केवलिनामित्याह । सकलज्ञानावरणक्षयसमुद्भूतः समस्तज्ञेयविषयोऽवबोधः साक्षात्परिच्छेदी चेतनापर्यायः केवलं तल्लाभात् केवलिनस्तेषामवर्णः रागद्वेषमोहसमावेशादसद्भूतदोषोद्भावनं सत्यवाक्प्रयोगो वा निन्दाप्रख्यापनं वा वदनं वा दोषभाषणमवर्णस्य केवलिनोऽवर्णवादः वादोऽवर्णवादः । तद्यथा—दिगम्बरत्वाद् विगतत्रपाः क्रमोपयोगभाजः समवसरणभूमावप्कायभूम्यारम्भानुमोदिनः सर्वोपायनिपुणा अपि दुष्करदुरुपचारमार्गोपदर्शिन इत्याद्यवर्णोद्भासनम् । तत्त्वार्थश्रद्धानलक्षणं दर्शनं तत् मोहयति-आच्छादयतीति दर्शनमोहस्तस्यास्रवो भवति, मिथ्यात्वादेरित्यर्थः । आर्हन्त्यनामकर्मोदयादर्हन्तः—तीर्थकरास्तैः प्रोक्तं-प्रकर्षेणोपदिष्टं अविपरीतं यथावस्थितज्ञेयानुसारि श्रुतम् । कारणे कार्योपचारं कृत्वा प्रोक्तमित्युक्तम् । चशब्दः समुच्चये । अङ्गानि द्वादशाचारादीनि दृष्टिवादान्तानि उपाङ्गान्यौपपातिकप्रभृतीन्यङ्गार्थानुवादीनि । सहाङ्गोपाङ्गैर्वर्तत इति साङ्गोपाङ्गम् ।

श्रुतस्यावर्णवादः तस्य च श्रुतस्य-प्रवचनस्यावर्णप्रख्यापनं अविदग्धप्राकृतभाषानिबद्धं व्रतकायप्रायश्चित्तप्रमादोपदेशपुनरुक्तताबहुलं कुत्सितापवादप्रायमित्येवमाद्यवर्णोद्भासनं श्रुतज्ञानस्येति । चत्वारो वर्णाः साधुसंयती(साध्वी)-श्रावकश्राविकाख्याः । वर्ण्यन्त इति वर्णा-भेदास्तेषु चतुर्षु वर्णेषु भवश्चातुर्वर्णः सङ्घो-गणः । अथवा सम्यक्त्व-ज्ञान-संवर-तपांसि चत्वारो वर्णा-गुणास्तद्भवश्चातुर्वर्णः, चतुर्णां वर्णानामयं चातुर्वर्णः सङ्घः, न तु सुगतशिष्याणां मौतानां वा । तस्य चतुर्विधस्य सङ्घस्यावर्णः । साधवस्तावत् सचित्ताद्याभवव्यवहारपरायणाः परिपेलवचासंयतादीनामवर्णवादः ह्यशौचाचाराः जन्मान्तरकृतकर्मोदयजनितकेशोल्लुञ्चनातापनदुःखानुभविनः कलहकारिणोऽसहिष्णवः प्रागदत्तदानाः भूयोऽपि दुःखिता एव भविष्यन्तीत्यवर्णोद्भावनम् । एवमेव च संयतीनामवर्णभाषणम् । तथा श्रावकश्राविकाणामपि निन्दनमनेकप्रकारम्-न स्नानं धर्मार्थमेषाम्, न च द्विजातिभ्यो दानम्, न प्रपादिकरणम्, हरिकेशकल्पाः खल्वेते, गोशृङ्गमेषां गेहाङ्गणद्वारि निखायतामित्याद्यवर्णप्रकाशनम् ।

सामान्येन वा सङ्घस्यावर्णख्यापनम् । काकशृगालसारमेयानामपि समुदायः सङ्घ एवोच्यते । तेन सङ्घोऽगौरवास्पदम् । यच्चाभिधीयते—तीर्थंकरानन्तरत्वात् सङ्घः सपर्यार्हस्तदपि स्वमनीषापरिकल्पनमात्रमित्याद्यवर्णोद्भावनम् । तथा पञ्चमहाव्रतसाधनस्य धर्मस्यावर्णभाषणं, पञ्चसंख्यापरिच्छिन्नानि महान्ति व्रतान्यणुव्रतापेक्षया जायन्ते तानि साधनमस्य धर्मस्य पञ्चमहाव्रतसाधनः, मनोवाक्कायैः कृतकारितानुमतिभिश्च प्राणिवधादिनिवृत्तयो महाव्रतानि, रजनिभोजनाधाकर्माद्यशेषोत्तरगुणाक्षेपो महाव्रतैरेव, अतः क्षमादेर्दशलक्षणकस्य धर्मस्यावर्णवादो दर्शनमोहस्यास्रवः, न पशुविशसनादेर्धर्माभासस्य, मायासूनुप्रणीतस्य चारम्भकस्य । कः पुनस्तस्यापवादः अभ्युदयापवर्गहेतुर्धर्मो न प्रत्यक्षादिना प्रमाणेन विषयीक्रियते । न चाऽप्रमाणकोऽस्तीति वक्तुं पार्यते । न च पुद्गला धर्मशब्दवाच्याः पुद्गलत्वादेव । नाप्यात्मपरिणामो धर्मः आत्मशब्दपरिणामवाच्यत्वात् क्रोधादिपरिणामवदित्याद्यवर्णभाषणम् । चतुर्विधानां च देवानामवर्णवादः । चतस्रो विधा येषां ते चतुर्विधाः—भवनपति-व्यन्तर-ज्योतिषिक-वैमानिकाः । चशब्दः समुच्चयार्थः । तेषां चावर्णवादो दर्शनमोहस्यास्रवः । परस्परप्रवीचाराः

देवानामवर्णवादः

खलु देवाः षण्ढवत् । अपरे बलवन्तोऽल्पबलं देवमप्यभियुज्य मैथुनमासेवन्ते स्तब्धलोचनपुटास्तथाऽत्यन्तासद्भूतदोषप्रख्यापनशुक्रशोणितबल्युपहाराशिनो देवाः । अहल्यायै जार इन्द्रः कृतभगसहस्रः छात्रैर्धर्षित इत्याद्यशिष्टव्यवहारावघोषणं देवानामवर्णवादः । इतिशब्देनाद्यर्थेन तीव्रमिथ्यात्वपरिणामोन्मार्गदेशनधार्मिकजनतासंदूषणसर्वत्रसिद्धदेवानर्थाभिनिवेशासमीक्षितकारितासंयतपूजाप्रयोगा दर्शनमोहस्य संसारपरिवृद्धिमूलनिमित्तस्यानन्तसंसारानुबन्धिनो मिथ्यात्वस्यास्रवा द्रष्टव्याः ॥ १४ ॥

अथ चारित्रमोहनीयस्य क आस्रव इत्युच्यते—

## सूत्रम्—कषायोदयात् तीव्रात्मपरिणामश्चारित्रमोहस्य ॥ ६-१५ ॥

**भा०—कषायोदयात् तीव्रात्मपरिणामश्चारित्रमोहस्यास्रवो भवति ॥ १५ ॥**

**टी०**—कषायाः-कोपादयः तेषामुदितिः उदयः स निमित्तत्वेनापदिश्यते । अस्य कोपादेः कषायस्य तीव्राः-प्रकृष्टाः परिणामा-आत्मनोऽवस्थाविशेषाः शब्दादिविषयेषु गार्ध्यमीर्ष्यालु-

स्त्रीवेदादिनवनोकषायबन्धनहेतवः

त्वमनृतवादित्वं वक्रता परदाररतिप्रियता स्त्रीवेदबन्धहेतवः, ऋजुसमाचारता मदक्रोधकषायादिना स्वदाररतिप्रियता अनीर्ष्यालुत्वं पुरुषवेदबन्धहेतवः, तीव्रक्रोधादिना पशूनां वधक्षणनमुण्डनरतित्वं स्त्रीपुरुषेष्वनङ्गसेवनशीलता शीलव्रतगुणधारिणः पाषण्डयोषित्सव्यभिचारकारिता तीव्रविषयानुबन्धिता च नपुंसकबन्धहेतवः, उत्प्रासनदीनाभिलाषिताकन्दर्पोपहासनबहुप्रलापहासशीलता हास्य-

---

१ 'यच्चाऽभि०' इति क-पाठः । २ 'तथा' इति ङ-पाठः । ३ 'स्नात्रैर्दूषित' इति क-ख-पाठः ।
४ 'अन्यकोपादेः' इति ङ-पाठः ।

वेदनीयस्यास्रवः, स्वशोकोत्पादशोचनपरदुःखनिष्कारणशोकमूकताभिनन्दिता शोकवेदनीयस्य, विचित्रपरिक्रीडनपरचित्तावर्जनबहुविधरमणपीडाभावदेशाद्यौत्सुक्यप्रीतिसञ्जननादीनि रतिवेदनीयस्य, परराजप्रादुर्भावनरतिविनाशपापशीलताकुशलक्रियाप्रोत्साहनास्तेयादयस्त्वरतिवेदनीयस्य, स्वयंभयपरिणामभयोत्पादननिर्दयत्वत्रासनादीनि भयस्य, सद्धर्मप्रसक्तचतुर्वर्णकुशलक्रियाचारप्रवणजुगुप्सापरिवादनशीलत्वादयो जुगुप्साया आस्रवा भवन्ति ॥

कषायोदयादित्यादि भाष्यम् । कषः-संसारः कर्म वा तस्य आयास्तेषामुदयो-विपाकस्तस्मात् कारणभूताद् यस्तीव्रः-प्रकर्षप्राप्त आत्मनो-भवितुः परिणामश्चारित्रमोहस्यास्रवो भवति । तद्यथा—परमधार्मिकाणां साधूनां गर्हणया धर्माभिमुखानां च विघ्नकारितया देशविरतिजनान्तरायकरणेन मधुमद्यमांसाविरतिगुणदर्शनेन चारित्रगुणसन्दूषणेनाचारित्रदर्शनेन परस्य कषायनोकषायोदीरणेन चरणगुणोपघातकारिकषायनोकषायवेदनीयं चारित्रमोहं बध्नातीति ॥ १५ ॥

अथायुश्चतुष्टयस्य यथायथं क आस्रवक्रम इति पृष्टे ब्रूमः—चतुर्णामाद्यस्य नियतकालपाकस्य—

## सूत्रम्—बह्वारम्भपरिग्रहत्वं च नारकस्यायुषः ॥ ६–१६ ॥

**भा०—बह्वारम्भता बहुपरिग्रहता च नारकस्यायुष आस्रवो भवति ॥१६॥**

टी०—बहुः-विपुलः-प्रभूतः आरम्भणमारम्भः-प्राणिप्राणव्यपरोपणं अनवरतखण्डनीपेषणीचुल्ल्युदकुम्भप्रमार्जनीव्यापारो वा । बहुश्चासावारम्भश्च बह्वारम्भः । परिग्रहणं परिग्रहः-मूर्च्छा-गार्ध्य-ममत्वमान्तरेषु शरीरादिषु बाह्येषु च वस्तुषु क्षेत्रवास्तुहिरण्यसुवर्णादिषु स्नेहः । बहुश्चासौ परिग्रहश्च बहुपरिग्रहः तयोर्बह्वारम्भपरिग्रहयोर्भावो बह्वारम्भपरिग्रहत्वम् तथा परिणाम आत्मनः । चशब्दः समुच्चितौ । तामेव भाष्येण दर्शयति । भावप्रत्ययं च प्रत्येकमभिसम्बध्नाति—बह्वारम्भता बहुपरिग्रहता चेति । नरकाः पापकर्मणां सत्त्वानामधिवासा अनादिकालप्रसिद्धास्तेषु भवा नारकास्तेषां नारकाणां यदायुः-जीवनं तस्यास्रवो भवति । तेषु नारकेषु वा भवे यदायुरिति सम्बन्धः । अपरे ब्रुवते—बह्वारम्भाः परिग्रहा यस्यासौ बह्वारम्भपरिग्रहस्तद्भावो बह्वारम्भपरिग्रहत्वम् । चशब्दादागमोक्तं च कारणद्वयमभिसम्बध्नाति । कुणपाहाराभ्यवहारित्वमसकृत्पञ्चेन्द्रियसत्त्वव्यापादश्चेत्यस्मिन् पक्षे भाष्यं न सम्यग् गमितं स्यात् । अपरे व्याचक्षते—बह्वारम्भपरिग्रहत्वं चशब्दात् कषायोदयात् तीव्रपरिणामश्चानुकृष्यते । एवमेव बह्वारम्भपरिग्रहकुणपाहारपञ्चेन्द्रियवधा आसेविता भा-

बह्वारम्भपरिग्रहताया व्याख्यान्तरम्

१ 'आश्रवा इति' इति ङ-पाठः । २ 'सम्बध्यते' इति ङ-पाठः ।

वतो बहुलीकृता नारकायुष आस्रवाः । एत एव प्रपञ्च्यमाना भेदमनेकं प्रतिपद्यन्ते, मिथ्यादृष्ट्या श्रेष्ठाचारता गिरिराजिशैलस्तम्भकीचकडङ्ग्रन्थिकृमिरागसदृशकोपादिकषायता परपरितापकरप्रणिधानवधबन्धनाभिनिवेशानृतवचनप्रस्वादनाविरतानिरतमैथुनोपसेवास्थिरवैरावशेन्द्रियनिरनुग्रहस्वाभाव्यकृष्णलेश्यापरिणामरौद्रध्यानान्यास्रवप्रपञ्चो नारकस्यायुषः ॥ १६ ॥

उक्तो नारकस्यायुषो हेतुस्तत्समनन्तरं तैर्यग्योन्यायुष उच्यते—

## सूत्रम्—माया तैर्यग्योनस्य ॥ ६-१७ ॥

**भा०—माया तैर्यग्योनस्यायुष आस्रवो भवति ॥ १७ ॥**

टी०—माया शाठ्यं वक्रता मनोवाक्कायिकी च केकुणग्रन्थितुल्या । तिर्यञ्चः-पृथिव्यप्तेजोवायुवनस्पतिद्वित्रिचतुःपञ्चेन्द्रियाः नारकमनुष्यदेववर्जास्तेषां योनिस्तिर्यग्योनिः, योनिः-उत्पत्तिस्थानं,तत्र भवं तैर्यग्योनमायुस्तस्यास्रवो जायते । माया मिथ्यात्वावष्टम्भाधर्मदेशनारम्भपरिग्रहकूटकर्मनीलकापोतलेश्यापरिणामार्तध्यानोन्मार्गप्रज्ञापनामार्गप्रणाशसातिचारव्रतशीलता च वसुधाराजिसदृशकोपाद्यल्पारम्भसहाया, प्राधान्यख्यापनायैकाकिन्याः खलु मायायाः कृतं ग्रहणं सूत्रकारेण, स्पष्टीकृतमेवमाचक्षाणेनेति ॥ १७ ॥

उक्तस्तैर्यग्योनायुष आस्रवः । अथ मनुजायुष आस्रवः क इत्यत्रोच्यते—

## सूत्रम्—अल्पारम्भपरिग्रहत्वं स्वभावमार्दवार्जवं च मानुषस्य ॥ ६-१८ ॥

**भा०—अल्पारम्भपरिग्रहत्वं स्वभावमार्दवार्जवं च मानुषस्यायुष आस्रवो भवति ॥ १८ ॥**

टी०—आरम्भपरिग्रहावुक्तलक्षणौ । अल्पः-स्तोकः । अल्पारम्भपरिग्रहयोर्भावः **अल्पारम्भपरिग्रहत्वम्** । आत्मनो मन्दपरिणामता आरम्भे परिग्रहे च, स्वभावः-सहजो धर्मः सहजं मार्दवं न तु कृत्रिमम् । प्रकृत्यैव जातिकुलरूपबललाभबुद्धिवाल्लभ्यकश्रुतस्थानेषु गर्वरहितः मृदोर्भावः मार्दवं-मृदुता । तथा सहजमार्जवमृजोर्भावो यथावस्थितमनोवाक्कायविषयवक्रतात्यागः । चशब्दः कारणान्तरसमुच्चितौ । एतदेव भाष्येण स्पष्टयति—**अल्पारम्भपरिग्रहत्वमित्यादिना** । अल्पारम्भत्वम्-अल्पप्राणातिपाताद्यनुष्ठायित्वम्, अल्पपरिग्रहत्वम्-अल्पेच्छता, शब्दादिविषया वाऽल्परागता, स्वभावमार्दवं स्वभावजैव भद्रता, स्वभावार्जवं प्रकृत्यैवर्जुता । चशब्दान्मिथ्यादर्शनातिविनीतत्वं, सुखप्रज्ञापनीयता वालुकाराजिसदृशरोषता स्वागताद्यभिलापिता स्वभावमधुरता लोकयात्रानुग्रहौदासीन्यगुरुदेवताभिपूजा संविभागशीलता कापोतलेश्यापरिणामः धर्मध्यानध्यायिता मध्यमपरिणामता च मनुष्यस्यायुष आस्रवो भवतीति ॥ १८ ॥

---

१ 'दृष्ट्याऽश्रेष्ठाचारता' इति ग-पाठः ।　२ 'कुणग्गं (?) विकल्पा' इति ङ-पाठः ।

किमेत एवास्रवा नारकादीनामप्यन्येऽपि सन्ति ?। सन्तीत्याह—

सूत्रम्—निःशीलव्रतत्वं सर्वेषाम् ॥ ६–१९ ॥

भा०—निःशीलव्रतत्वं च सर्वेषां नारकतैर्यग्योनमानुषाणामायुषामास्रवो भवति । यथोक्तानि च ॥ १९ ॥

टी०—निर् अभाववचनः, शीलम्-उत्तरगुणसम्पत् तदभावान्निःशीलः,प्राणातिपातादिनिवृत्तिर्व्रतानि तद्रहितो निर्व्रतः । भावप्रत्ययः प्रत्येकमभिसम्बध्यते । निःशीलत्वं निर्व्रतत्वं च सर्वेषां नारकतैर्यग्योनमानुषाणां यदायुस्तस्यास्रवो भवति । चशब्दात् पूर्वोक्तहेतुकलापोऽपेक्ष्यते । एतदेव भाष्येण स्फुटयति—निःशीलव्रतत्वं चेत्यादिना । शीलव्रतयोर्भावः शीलव्रतत्वम्–आत्मनस्तथाविधः परिणामः तदभावो निःशीलव्रतत्वम् । सर्वेषामित्यविशेषप्रसङ्गेऽभिहितान्येव सम्बध्नन्नाह । नारकतैर्यग्योनिमानुषाणामायुषामास्रवो भवति । नारकादित्रयायुषामेष चास्रवः, यथोक्तानि चेति चशब्दं व्याचष्टे–यथा यस्य नारकादित्र्यायुषस्य पेदम् (?) उक्तानि बह्वारम्भपरिग्रहा मायाऽल्पारम्भपरिग्रहस्वभावमार्दवार्जवकारणानीति ॥ १९ ॥

अथ दैवमप्यायुः सर्वशब्देन किं नाक्षिप्यते ?। भोगभूमिजास्तु मनुजा योषितो वा मिथ्यादृष्टयो निःशीलव्रता अपि मृत्वा देवेषूत्पद्यन्ते, न खलु तेषामणुव्रतमहाव्रतबालतपोऽकामनिर्जरासम्यग्दर्शनानां कश्चिद्देवायुषो हेतुरस्ति, अथ च मरणानन्तरं देवभूयमासादयन्तीत्यवश्यंतया कश्चिद् देवायुष आस्रवो वाच्यः । स च नान्यो निःशीलव्रतत्वादिति । ते हि शीलव्रतरहिताः प्राणातिपातादिषु न प्रवृत्ता न निवृत्तास्ततो मध्यवर्तिना सूत्रेणावश्यं देवायुरपेक्ष्यमेव, एवंविधं च भाष्यं नास्ति, अतो विदुषोपैकल्पव्याख्या यथागमं कार्येति ॥

भा०—अथ दैवस्यायुषः क आस्रव इति ?। अत्रोच्यते—

टी०—अथेत्यादि सम्बन्धग्रन्थः । आस्रवोऽधिकृतसूत्रनारकतैर्यग्योनमानुषायुषामास्रवोऽभिहितः, अनन्तरं दैवस्यायुषो वाच्यः, तत्रानन्तर्यमथशब्देन प्रतिपादयति—देवानामिदं दैवमायुस्तस्य क आस्रवः ? इतिकरणः प्रश्नपरिसमाप्तेरवद्योतकः । अत्र–पृष्टेऽभिधीयते—

सूत्रम्–सरागसंयमसंयमासंयमाकामनिर्जराबालतपांसि दैवस्य ॥ ६–२० ॥

भा०—संयमो विरतिर्व्रतमित्यनर्थान्तरम् । हिंसानृतस्तेयाब्रह्मपरिग्रहेभ्यो विरतिर्व्रतमिति वक्ष्यते ( अ० ७, सू० १ ) ॥

१ 'स्पष्टयति' इति ङ-पाठः । २ 'प्रदं' इति क-पाठः । ३ '०पयुज्य व्याख्या' इति ङ-पाठः ।

टी०—सरागसंयमादयश्चत्वारः कृतद्वन्द्वाः सूत्रेणोपात्तास्ते खल्वमी दैवस्यायुष आस्रवा भवन्ति, प्राक् तेन भाष्यकारेणोपन्यस्ता एव, न व्याख्याताः सद्वेद्यास्रवप्रस्तावे। अधुना तु स्वयमेव प्रपञ्चतो व्याचष्टे--संयमो विरतिर्व्रतमित्यादिना भाष्येण। सम्पूर्वो यमे र्भावसाधनम्। संयमनं संयमः—सम्यग्ज्ञानपूर्विका विरतिः—प्राणातिपातादिपापस्थानेभ्यो निवृत्तिः। नियमो व्रतमित्यनर्थान्तरम्। रागः—संज्वलनकषायस्तत्सहवर्ती सरागस्तस्य संयमः सरागसंयमः। इतिकरणो नियमनिवृत्त्याद्यनेकपर्यायोपलक्षणार्थः। अनर्थान्तरमित्यनेनैकार्थाभिधायित्वं सूचयति पर्यायशब्दानाम्। कतिप्रकारं पुनस्तद् व्रतं किंलक्षणं चेति पृष्टे इदमाह—हिंसानृतेत्यादि। हिंसादयः पञ्च कृतद्वन्द्वाः पञ्चमीबहुवचनेन निर्दिष्टाः। पञ्चमी च विरामार्थानां प्रयोगेऽभिहिता। हिंसादिभ्यो विरमणं यत् तद् व्रतमित्येवं वक्ष्यते—व्याख्यास्यते सप्तमाध्यायादौ। इतिशब्द एवमित्यस्यार्थे। एवमेष सरागसंयमो दैवस्यायुष आस्रवो भवति॥

भा०—संयमासंयमो देशविरतिरणुव्रतमित्यनर्थान्तरम्। देशसर्वतोऽणुमहती इत्यपि वक्ष्यते ( अ० ७, सू० २ )॥ अकामनिर्जरा पराधीनतयाऽनुरोधाच्चाकुशलनिवृत्तिराहारादिनिरोधश्च॥ बालतपः। बालो मूढ इत्यनर्थान्तरम्। तस्य तपो बालतपः। तच्चाग्निप्रवेशमरुत्प्रपातजलप्रवेशादि। तदेवं सरागसंयमसंयमासंयमादीनि च दैवस्यायुष आस्रवा भवन्तीति॥ २०॥

टी०—संयमासंयमः कुतश्चित् केनचिदाकारेण निवृत्तिः क्वचित् प्रवृत्तिः, स्थूलप्राणिविषयसंकल्पकृतप्राणव्यपरोपणनिवृत्तिमेव प्रतिजानीते गेही, न त्वारम्भजप्राणिप्राणव्यपरोपणविरमेऽपि संगिरते। तस्यैवंविधस्य संयमासंयमस्य पर्यायानाचष्टे—देशविरतिरणुव्रतमित्यनर्थान्तरम्। सम्पूर्णप्राणातिपाताद्येकदेशो देशः स्थूलात् प्राणातिपाताद् विरमणे सति। एवमन्यत्रापि द्रष्टव्यम्। प्रपञ्चस्तु वक्ष्यते सप्तमाध्याये। अणु च तद् व्रतं च अणुव्रतम्। अणु-स्तोकं देशनिवृत्तिर्व्रतम्। इतिकरणेनागारिधर्मादिपर्यायाक्षेपः। एतच्च किमिहैव सकलं व्याख्यायते ? नेत्याह—देशसर्वत इत्यादि। देशतो विरतिरणुव्रतं सर्वतो विरतिर्महाव्रतम्। एवं वक्ष्यते-भणिष्यते सप्तमेऽध्याये एव। संक्षेपतश्चैत्र दैवायुषः संयमासंयम आस्रवः। काम इच्छा प्रेक्षापूर्वकारिता तदर्थोपयोगभाजो या निर्जरा सा कामनिर्जरा। निर्जरा—कर्मपुद्गलपरिहाणिः, न कामनिर्जरा अकामनिर्जरा, अनभिलपतोऽचिन्तयत एव कर्मपुद्गलपरिशाटः। सा च पराधीनतयाऽनुरोधाच्चाकुशलनिवृत्तिराहारादिनिरोधश्च। अकुशलं धावनवल्गनप्लवनलङ्घनावरोहणकूर्दनस्फोटनादि, तत् तु बलवता गृहीतो निगडादिसंयतः कर्तुमसमर्थः, न च रौद्राध्यवसायी, न च प्राणातिपातादिभ्यो निवृत्त्या, नापि तेषु प्रवृत्तः, परवशत्वादनास्वादितचतुर्विधाहारः। आदिशब्दाच्छिशिरकाले निरावरणदेशव्यवस्थापितोऽपहृतप्रावरणः शीत-

१ '०यमेतस्राव०' इति क-पाठः। २ 'विरमणं' इति प्रतिभाति। ३ 'आदिग्रहणात्' इति ङ-पाठः।

सम्पातव्यथितविग्रहः, ग्रीष्मेऽपि तीव्रतिग्मांशुगभस्तिव्यूहसंस्पृश्यमानसर्वाङ्गोऽपनीतातपत्राणः। चशब्दः समुच्चितौ। अनुरोधाच्चेति। अनुरोधात् दाक्षिण्यं प्रीतिर्वोच्यते। मित्रस्वजनादेरापदि जातायामपरो यदा तदनुरोधात् प्रीतेर्वा सीददङ्गयष्टिर्विवशोऽकुशलनिरोधमातिष्ठते अरतिपरिगतवपुष्कचतुर्विधाहारविरुचिपरिणामो दैवस्यायुष आस्रवो वर्तत इति, द्वाभ्यां रागद्वेषाभ्यां मिथ्यादर्शनसहवर्तिभ्यामाकलितो बालः सत्त्वात्त्रबोधपराङ्मुखः। तस्य पर्यायकथनं करोति–बालो मूढ इत्यनर्थान्तरम्। मूढो विचित्तः। अतत्त्वे तत्त्वाभिनिवेशप्रवृत्तिर्यथावस्थितज्ञेयाननुकूलज्ञानः। शेषमितिशब्दादि प्राग् व्याख्यातम्। तस्य तपो बालतपः इति। अनेन षष्ठीसमासप्रदर्शनेन समानाधिकरणनियमाभावं दर्शयति। बालं च तत् तपश्चेति बालतपः। बालं–असमर्थं सन्मार्गप्रतिपादने सकलकर्मक्षये वा। तथा बालस्यापि मूढस्य यत् तपस्तद् बालतप इति। कीदृक् पुनस्तदित्याह–तच्चाग्निप्रवेशेत्यादि। अग्निप्रवेशः–अग्नौ धर्माय पतनम्। मरुर्भृगुः नदीगिरितटाद्यधोदेशो वा तत्र पतनं प्रपातः। जलप्रवेशो -जले निमज्जनम्। आदिग्रहणात् बलायवशार्तसशल्योल्लङ्घनगृध्रभक्षणशस्त्रपाटनविषगरमरणादिपरिग्रहः। तदेवमित्यादिना समस्तमेव सूत्रार्थमुपसंहरति। तदिति तस्मात्। एवम्–उक्तेन प्रकारेण सरागसंयमसंयमासंयमादीनि चेति। सरागसंयमस्य प्राधान्यख्यापनार्थं भेदेनोपादानम्। इतरेषां निकृष्टत्वाद् यथाक्रमं समस्योपादानम्। आदिग्रहणादकामनिर्जराबालतपसी ग्राह्ये। चशब्दः समुच्चयार्थः। दैवस्यायुष आस्रवा भवन्तीति पर्यन्तवर्तिनेतिकरणेन देवायुरास्रवविस्तारो द्रष्टव्यः। कल्याणमित्रसम्पर्कधर्मश्रवणगौरवतपोभावनापात्रदानमरणप्रत्यासन्नवर्तिशीततपनलेश्यापरिणामाव्यक्तसामायिकविराधितसम्यग्दर्शनादि च दैवायुष आस्रवा इति ॥ २० ॥

**भा०—अथ नाम्नः क आस्रव इति? । अत्रोच्यते—**

टी०—एवं ज्ञानदर्शनावरणवेद्यमोहायुषां यथास्वमास्रवाभिधानमवसायानन्तरं पर आह–अथ नाम्नः क आस्रवः?। इतिकरणः प्रश्नपरिसमाप्तौ। अत्र प्रश्ने यथावसरविरचितेऽभिधीयते तस्य प्रकारद्वैविध्यात्स्थानादशुभनामकर्मास्रवस्तावदभिधीयते ॥

## सूत्रम्—योगवक्रता विसंवादनं चाशुभस्य नाम्नः ॥ ६–२१ ॥

टी०—योगः प्राग् व्याख्यातः। शक्तिरूप आत्मनः करणविशेषः कायवाङ्मनोलक्षणस्तद्वता कौटिल्यप्रवृत्तिः स्वयमेव योगवक्रताऽनार्जवप्रणिधानं मायाचित्तं योगविपर्यास इत्यनर्थान्तरम्। विसंवादनं सत्यवदभ्युपगमे तदपह्नवोपाये व्युत्थापनम्। चशब्द उभयविशेषसमुच्चयार्थः। अशुभं यन्नामकर्म नरकगत्यादि चतुस्त्रिंशद्भेदं च तस्यास्रवो भवति। भाष्येण तदेव स्फुटयति—

**भा०—कायवाङ्मनोयोगवक्रता विसंवादनं चाशुभस्य नाम्न आस्रवो भवतीति ॥ २१ ॥**

१ ' धायावसाया० ' इति ख-पाठः।

५

टी०—कायवाङ्मनोयोगवक्रतेत्यादिना । कायादयः कृतद्वन्द्वास्तेषां वक्रता-कायादिगतो मायाव्यवहारः । सम्यक् प्रतिपत्तौ तद्विपरीतप्रतिज्ञापनव्यापारो विसंवादनमशुभनामकर्मण आस्रवः । कायस्य तावत् कुब्जवामनविक(कृ)ष्टाङ्गप्रत्यङ्गावयवाक्षिनिकोचननासाभङ्गमलव्याधिविदूपकस्त्रीपुरुषभृत्यभूतस्कन्दरुद्रराजर्षिविशेषावतारैरसद्भावोद्भावनं वक्रता । वाग्वक्रता यथा लाटः स्वभाववाग्विषयोपगतभावः गौडमालवार्णवविषयवासिनामार्याणामनार्याणां च तद्भावो विडम्बनापरता । मनोवक्रताऽन्यदेव मनसि व्यवस्थाप्य लोकपङ्क्तिपूजासत्काराद्याजिहीर्षा बिभ्राणोऽन्यद् वाचा समाचरत्यन्यत् कायेन चेष्टते । एवं स्वविषयैव योगवक्रता । विसंवादनं तु परविषयम् । तच्च विसंवादनं निदिदिक्षितस्यार्थस्यावस्थितस्वभावस्यान्यथाकरणं पितापुत्रयोर्वा प्रीतिभाजोः परस्परं प्रीतिभेदकरणं वा विसंवादनम् । एवमेते कायादिविकल्पा नाम्नोऽशुभस्यास्रवा भवन्ति । अनुक्तसमुच्चयार्थो वा चशब्दः । मिथ्यादर्शनमायाप्रयोगपिशुनास्थिरचित्तताकूटमानतुलाकरणसुवर्णादिप्रतिरूपकत्वानुष्ठानकूटसाक्ष्यदानाङ्गोपाङ्गच्यावनवर्णगन्धरसस्पर्शाद्यन्यथापादनयन्त्रपञ्जरक्रियानिकृतिभूयिष्ठतापरनिन्दात्मप्रशंसासारणानृतवचनपरद्रव्यादानमहारम्भपरिग्रहोज्ज्वलवेषरूपमदपरुषासभ्यप्रलापाक्रोशमौखर्यसौभाग्योपघातवशीकरणप्रयोगपरकुतूहलोत्पादनालङ्कारदानचैत्यव्यपदेशगन्धमाल्यधूपादिचार्यविडम्बनोपहासेष्टकापाकदावाग्निप्रयोगप्रतिमायतनप्रतिश्रयारामोद्यानविनाशनतीव्रकषायपापकर्मोपजीवनादीनि चाशुभस्य नाम्न आस्रवा इति ॥ २१ ॥

अशुभनाम्न आस्रवाः

अथ शुभनामकर्मणः क आस्रव इत्युच्यते—

## सूत्रम्—विपरीतं शुभस्य ॥ ६–२२ ॥

भा०—एतदुभयं विपरीतं शुभस्य नाम्न आस्रवो भवतीति ॥ २२ ॥

किञ्चान्यत्—

टी०—विपरीतमिति । एतदेवोभयमनन्तरसूत्रोक्तमास्रवद्वयं विपरीतं सदवक्रता योगानां सम्यक् प्रयोग आर्जवयुजस्त्वयं, अविसंवादनं वाऽविप्रलम्भनम्—अविप्रतारणं परस्परविपरीतग्रहणवदेव । चशब्दः समुच्चितौ । वैपरीत्यग्रहणमपि धार्मिकदर्शनसम्भ्रमसंसारभीरुताप्रमादवर्जनसद्भावार्पणासम्यक्त्वार्जवादयः शुभस्य नामकर्मणो मनुष्यगत्यादेः सप्त त्रिंशदुदयस्यास्रवा भवन्तीति ॥ २२ ॥

किञ्चान्यदित्यनेन सम्बन्धमाचष्टे । अन्यच्चानुक्तं विशेषेण तीर्थकरनाम, सामान्येन शुभनामकर्मण आस्रवे प्रतिपादितेऽप्यचिन्त्याद्युपमशक्तिप्रभावस्य त्रिप्रकारातिशयविशेषत्रैलोक्यविभूतिविजयिनस्तीर्थकरनाम्न इमे आस्रवा वेदितव्याः—

१ 'रसद्भावनं' इति ङ-पाठः । २ 'गोपिनास्थिर०' इति ख-ग-पाठः । ३ 'ग्रहात् जलवेषः,' इति ङ-पाठः ।

सूत्रम्—दर्शनविशुद्धिर्विनयसम्पन्नता शीलव्रतेष्वनतिचारोऽभीक्ष्णं ज्ञानोपयोगसंवेगौ शक्तितस्त्यागतपसी सङ्घसाधुसमाधिवैयावृत्त्यकरणमर्हदाचार्यबहुश्रुतप्रवचनभक्तिरावश्यकापरिहाणिमार्गप्रभावना प्रवचनवत्सलत्वमिति तीर्थकृत्त्वस्य ॥ ६–२३ ॥

तीर्थकरनामकर्मण आस्रवाः

भा०—परमप्रकृष्टा दर्शनविशुद्धिः । विनयसम्पन्नता च । शीलव्रतेष्वात्यन्तिको भृशमप्रमादोऽनतिचारः । अभीक्ष्णं ज्ञानोपयोगः ।

टी०—परमप्रकृष्टा दर्शनविशुद्धिरित्यादि भाष्यम् । परममित्यतिशयेन सुष्ठु प्रकृष्टा–प्रकर्षपर्यन्तवर्तिनी परित्यक्तशङ्कादिदोषा । शङ्कादयश्च वक्ष्यमाणाः (अ० ७, सू० १८) सम्यग्दर्शनमलाः । का पुनरसौ परमप्रकृष्टेत्याह—दर्शनविशुद्धिरिति । "तत्त्वार्थश्रद्धानं सम्यग्दर्शनं" (अ० १, सू० २) उक्तलक्षणविधानं दृष्टिः–दर्शनं तत्त्वविषया रुचिः-प्रीतिः जीवादिषु प्रत्ययावधारणं तस्य दर्शनस्य नाना(वि)शुद्धिः–निर्मलता यथा नाना चित्रं विचित्रमिति, क्षायोपशमिकौपशमिकक्षायिकाणां सम्यग्दर्शनानां यथास्वं नाना शुद्धिर्विशुद्धिस्तीर्थकरनामकर्मण आस्रवः। विनयसम्पन्नता चेति । विनीयतेऽनेनाष्टप्रकारं कर्मेति विनयः । स च ज्ञानदर्शनचारित्रोपचारभेदेन चतुर्धा । तत्र ज्ञानविनयः कालविनयबहुमानोपधानादिः । दर्शनविनयो निःशङ्कनिःकाङ्क्षादिभेदः । चरणविनयः समितिगुप्तिप्रधानः । उपचारविनयोऽभ्युत्थानासनप्रदानाञ्जलिप्रग्रहादिभेदः । एवंविधेन विनयपरिणामेन परिणतः कर्ता विनयसम्पन्न उच्यते, तद्भावो विनयसम्पन्नता । सा च तीर्थकरनामकर्मण आस्रवः । चशब्दः समुच्चयार्थः । तथा शीलव्रतेष्वात्यन्तिको भृशमप्रमादोऽनतिचारः । शीलमुत्तरगुणाः पिण्डविशुद्धिसमितिभावना[दयः] प्रतिमाभिग्रहलक्षणा मुमुक्षोः समाधिहेतुत्वात् शीलशब्दाभिधेयाः । व्रतग्रहणात् पञ्च महाव्रतानि रजनीभक्तविरतिपर्यवसानान्याक्षिप्तानि । शीलानि च व्रतानि च शीलव्रतानि । तेष्विति तद्विषयः । आत्यन्तिकः–अत्यन्तभवः संयमप्रतिपत्तिकालादारभ्य यावदायुषः क्षयस्तावदविश्रान्त्या भवत्यात्यन्तिकोऽप्रमादः सम्बध्यः । भृशमिति प्रकर्षवचनः । प्रकृष्टोऽप्रमादो भृशमप्रमादः । विकटेन्द्रिय-विकथा-कषाय-निद्रालक्षणः पञ्चधा प्रमादः । अनेन ह्याविष्टो जीवः कार्याकार्यविमुखत्वादाधाकर्मादि प्राणातिपातादि वा परिहर्तुमक्षमो भवति । न प्रमादोऽप्रमादः । प्रमादपरिवर्जनमप्रमत्तता । अनतिचार उच्यते–अतिचरणमतिचारः–स्वकीयागमातिक्रमः । नातिचारोऽनतिचारः । उत्सर्गापवादात्मकसर्वज्ञप्रणीतसिद्धान्तानुसारितया शीलव्रतविषयमनुष्ठानमित्यर्थः । एतच्च तीर्थकरनामकर्मण आस्रवः । अभीक्ष्णं ज्ञानोपयोग इति । अभीक्ष्णं मुहुर्मुहुः–प्रतिक्षणं ज्ञानं–द्वादशाङ्गं-प्रवचनं प्रदीपाङ्कुशप्रासादप्लवस्थानीयं तत्रोपयोगः–प्रणिधानम् । सूत्रार्थोभयविषय आत्मनो

विनयस्य भेदप्रभेदाः

व्यापारः । तत्परिणामितेतियावत् । वाचनाप्रच्छनाऽनुप्रेक्षाऽऽम्नायधर्मोपदेशैरभ्यसनं तीर्थकरनामकर्मण आस्रवः ॥

भा०—संवेगश्च । यथाशक्तिस्त्यागस्तपश्च । सङ्घस्य साधूनां च समाधिवैयावृत्त्यकरणम् । अर्हत्स्वाचार्येषु बहुश्रुतेषु प्रवचने च परमभावविशुद्धियुक्ता भक्तिः ।

टी०—संवेगश्चेति । अभीक्ष्णमिति सम्बध्यते । चशब्दः समुच्चितौ । संवेजनं संवेगो भीतिर्विचलनं वा संसारदुःखाज्जातिजरामरणस्वभावात् प्रियविप्रयोगादेश्च भयपरिणामः प्रतिक्षणं जगत्कायानित्याशुचित्वादिचिन्तनाच्च सांसारिकसुखेष्वनभिलापस्तत्प्रवणपरिणामाद् विचलनं संवेगः । स चाभीक्ष्णं तादृशः परिणामः समुपजायमानस्तीर्थकरनामकर्मण आस्रवः । यथाशक्तिः—सामर्थ्य—सत्त्वोत्कर्षः, यथा स्वानुरूपा शक्तिर्यथाशक्तिः तत्पूर्वकस्त्यागः स्वानुरूपशक्त्यपेक्षः, स्वस्य न्यायार्जितस्यानुकम्पानिर्जितात्मानुग्रहालम्बनं भूतेभ्यो विशेषतस्तु विधिना यतिजनाय दानं—त्यागस्तीर्थकरनामकर्मण आस्रवः । तपश्चेति । यथाशक्तिरित्यभिसम्बध्यते । कर्मणस्तापनाच्छोषणात् तपः । तद् द्विधा, अन्तर्बहिर्भेदात् । पुनरेकैकं षोढा प्रायश्चित्तादिभेदादनशनादिभेदाच्च । तत् स्वसामर्थ्यापेक्षमनुष्ठीयमानं लोकपङ्क्तिपूजाभिलापतृष्णानिरपेक्षेण चेतसा तीर्थकरनामकर्मण आस्रवः । सङ्घः—समूहः सम्यक्त्वज्ञानचरणानां तदाधारश्च साध्वादिश्चतुर्विधस्तस्य समाधानं—स्वस्थता—निरुपद्रवत्वं समाधिस्तस्य करणं—जननम्—उत्पादनं तत् करोति येन ज्ञानदर्शनचरणानां वृद्धिर्भवति दिवसमनाबाधाश्च साधुसंयती, देशयतिपुरुषयोषितः । ज्ञानदर्शनचारित्रलक्षणाभिः पौरुषेयीभिः शक्तिभिर्मोक्षं साधयन्तीति साधवः । तेषां च वैयावृत्त्यकरणं व्यावृत्तः—तत्कार्यानुष्ठानप्रवणस्तस्य व्यावृत्तस्य भावो वैयावृत्त्यं, साधूनां मुमुक्षूणां प्रासुकाहारोपधिशय्यास्तथा भेषजविश्रामणादिषु पूर्वत्र च व्यावृत्तस्य मनोवाक्कायैः शुद्धः परिणामो वैयावृत्त्यमुच्यते । चशब्दः समुच्चये । अथवा सङ्घभट्टारकस्य समाध्युत्पादनं भावः—चित्तपरिणामः परमार्थभावस्तस्य विशुद्धिः—निर्मलता । अथवा परमा चासौ भावविशुद्धिश्च तद्युक्ता भक्तिः स्वगुणदोषाकृष्टसमस्तसुरासुरपुरुषेश्वरेष्वचिन्त्यसामर्थ्येषु सन्मार्गोपदेशात् परमोपकारिषु प्रकृष्टमनःपरिणामशुद्धिपूर्विका भक्तिः सद्भूतातिशयोत्कीर्तनवन्दनसेवापुष्पधूपगन्धाभ्यर्चनायतनप्रतिमाप्रतिष्ठापनस्नपनविधिरूपा तीर्थकरनामकर्मण आस्रवः । पञ्चविधाचारानुष्ठानाद् यतिजनाचरणीयोपदेशाद् वाऽऽचार्या धर्मोपदेशदीक्षाव्रतोपदेशदिग्वाचका वा भवन्त्याचार्याः । अत्रैव श्रुतवाचनाचार्यत्वादुपाध्यायग्रहणम् । अङ्गानङ्गप्रकीर्णकाद्यनेकश्रुततदर्थोभययोगाद् बहुश्रुताः । प्रोच्यन्तेऽनेन जीवादयः पदार्था इति प्रवचनम्—आगमः—श्रुतज्ञानम् । चशब्दः समु-

१ 'शक्तितस्त्यागः' इति क-पाठः । २ 'निर्जरात्मा' इति ङ-पाठः ।

ख्ये । एतेषु परमा भावविशुद्धा भक्तिर्यथासम्भवमभिगमनवन्दनपर्युपासनयथाविहितक्रमपूर्वकाध्ययनश्रवणश्रद्धानलक्षणा तीर्थकरनामकर्मण आस्रवः ।

**भा०—सामायिकादीनामावश्यकानां भावतोऽनुष्ठानस्यापरिहाणिः । सम्यग्दर्शनादेर्मोक्षमार्गस्य निहत्य मानं करणोपदेशाभ्यां प्रभावना ।**

टी०—सामायिकादीनामित्यादि। अरक्तद्विष्टः समः तस्य आयो—लाभः—चरणदर्शनप्राप्तिः स प्रयोजनमस्येति सामायिकं सकलसावद्यविरतिलक्षणं प्रतिक्रमणकादि(?)तदादिर्येषां आवश्यकानां (चतुर्विंशतिस्तवादीनां) तानि सामायिकादीनि तेषां सामायिकादीनां आवश्यकानां अवश्यमहोरात्राभ्यन्तरे कर्तव्यान्यावश्यकानि—अवश्यतयाऽनुष्ठेयानि। तानि च सप्तदशविधानसंयमविषयव्यापाररूपत्वादनेकप्रकाराणि इच्छामिथ्यातथाकारादीनि तेषां भावतोऽनुष्ठानस्यापरिहाणिः।भावत इति तदुपयोगानन्यत्रकथनम्। अनुपयुक्तस्य हि सर्वक्रियानुष्ठानं द्रव्यमात्रत्वात्तुच्छमनल्पनिर्जराफलशून्यमेव प्रवचने च घुष्यते ततः सद्भावावहितचेतसो यदनुष्ठानकरणं तस्यापरिहाणिर्यथाविहितकालासेवनमन्यूनानतिरिक्ततयेत्येवमेषा आवश्यकापरिहाणिस्तीर्थकरनामकर्मण आस्रवो भवति । सम्यग्दर्शनेत्यादि । तत्त्वार्थश्रद्धानलक्षणं सम्यग्दर्शनं सकलगुणाधारस्तदादिर्यस्यासौ तदादिस्तस्य सम्यग्दर्शनादेर्मोक्षमार्गस्य सकलकर्मक्षयोत्तरकालमात्मनः स्वात्मन्यवस्थानं मोक्षस्तस्य मार्गः—पन्थाः प्राप्त्युपायो ज्ञानक्रियालक्षणस्तस्य प्रभावना—प्रख्यापनं—प्रकाशनं। केन प्रकारेणेत्याह—निहत्य मानं करणोपदेशाभ्यामिति । मानः—अहङ्कारः । स च जात्यादिस्थानोद्भूतः श्रेयोविघातकारी, यथाऽऽह (प्रशमरत्यां श्लो० २७)—

"श्रुतशीलविनयसं-दूषणस्य धर्मार्थकामविघ्नस्य ।
मानस्य कोऽवकाशं, मुहूर्तमपि पण्डितो दद्यात् ॥ १ ॥"

तमेवंविधं मानं न्यक्कृत्य करणं—स्वयमनुष्ठानं श्रद्दधतः कालविनयबहुमानाद्यासेवनं मूलोत्तरगुणप्रपञ्चानुष्ठानं चेति । उपदेशोऽन्यस्मै प्रतिपादनं बहुविधविद्वज्जनसमितिषु स्याद्वादादिन्यायावष्टम्भेन प्रसभमपहृत्य प्रतिभामेकान्तवादिनामर्हत्प्रणीतस्यानवद्यस्य सर्वतोभद्रस्य मार्गस्यैकान्तिकात्यन्तिकनिरतिशयाबाधकल्याणफलस्योच्चैः प्रकाशनं प्रभावना । सा खल्वेषा तीर्थङ्करनामकर्मण आस्रवः ।

**भा०—अर्हच्छासनानुष्ठायिनां श्रुतधराणां बालवृद्धतपस्विशैक्षकग्लानादीनां[1] च सङ्ग्रहोपग्रहानुग्रहकारित्वं प्रवचनवत्सलत्वमिति । एते गुणाः समस्ता व्यस्ता वा तीर्थकरनाम्न आस्रवा भवन्तीति ॥ २३ ॥**

टी०—अर्हदित्यादि। वन्दननमस्कारपूजासत्काराहीः अर्हन्तस्तेषां शासनम्—उपदेश आगमाख्यस्तदनुष्ठायिनाम्—आगमविहितक्रियानुष्ठायिनां, श्रुतधराणामित्यनेन स्वयमधिगतज्ञानानामिति प्रतिपादयति, परप्रत्ययानुष्ठायित्वं निषेधयति, अधीतप्रवचनार्थो विदितो-

1 '०क्षग्लानादीनां' इति घ-पाठः ।

त्सर्गापवादप्रपञ्चः स्वातन्त्र्यात् क्रियाप्रवृत्तौ न व्याहन्यते । बालः-क्षुल्लकः कारणप्रव्राजितो जघन्यादिभेदः। जातिश्रुतपर्यायस्थविरास्त्रयः, षष्टिवर्षः समवायधरो व्रतारोपणोत्तरकालं विंशतिवर्षश्च यथाक्रमं वृद्धः । तपो बाह्यमनशनादि, आन्तरं च प्रायश्चित्तादि, तदस्यास्तीति तपस्वी, विचित्रं वा तपः कनकरत्नावल्यादिभेदं वक्ष्यमाणं तद्योगात् तपस्वी। शिक्ष्यत इति शिष्यः(क्षः?), शिक्ष एव शैक्षः, स्वार्थे(ऽण्) प्राज्ञादिवत्। शिक्षणशीलो वा । छात्रादिपाठात् सप्रत्ययः । शैक्षः । सूत्रार्थाधिगमेऽभियुक्तो यथाविहितकालमध्येतव्ये श्रोतव्ये चाभ्युद्यत इत्यर्थः । ग्लानो-मन्दपाटवः सव्याधिकत्वाद् भक्तपानाद्यन्वेषणे न प्रत्यलः। आदिग्रहणात् कुलगणसमनोज्ञपरिग्रहः । चशब्दः समुच्चये । श्रुतधराणां बालादीनां च सङ्ग्रहादिकारित्वम् । तत्र सङ्ग्रहः-परिग्रहणमुपसम्पदालोचनापूर्वकं संयमानुष्ठानश्रुताध्ययनचोदनाप्रतिचोदनार्थम्। उपग्रहो वस्त्रपात्रोत्पादनबहुगुणक्षेत्राक्रान्तिलक्षणः । अनुग्रहो भक्तपानयथायोग्यविहितप्रदानादिलक्षणः, एतत् करोति तच्छीलश्च तद्भावः सङ्ग्रहोपग्रहानुग्रहकारित्वं तत्परिणामितेतियावत् । प्रवक्तीति प्रवचनम् । एत एव श्रुतधरादयो भगवद्भाषितार्थप्रतिपादनपरिणताः प्रवचनशब्दवाच्यास्तेषु वात्सल्यम् ।-उक्तं *ङ्ग्रहोपग्रहानुग्रहलक्षणम्। इतिशब्द आद्यर्थः । विंशतेः कारणानां सूत्रकारेण किञ्चित् सूत्रे किञ्चिद् भाष्ये किञ्चित् आदिग्रहणात् सिद्धपूजाक्षणलवध्यानभावनाख्यमुपात्तम्, उपयुज्य च प्रवक्त्रा व्याख्येयम् । इदानीमुपसंहरति-एते गुणा इत्यादिना। एते यथोद्दिष्टा गुणा दर्शनविशुद्ध्यादय आत्मनः परिणामाः समुदिताः प्रत्येकं च तीर्थकरनामकर्मण आस्रवा भवन्ति, न पुनर्नियमोऽस्ति समस्ता एव व्यस्ता एव वा। विकल्पार्थो वाशब्दः । इतिशब्दस्तीर्थकरनामकर्मास्रवेयत्ताप्रतिपादनार्थ इति ॥ २३ ॥

नामानन्तरनिर्देशभाजो गोत्रस्योपादाने किं निबन्धनमिति, एतद् द्विधा गोत्रं-नीचैरुच्चैश्च । तत्र तावन्नीचैर्गोत्रास्रवप्रसिद्ध्यर्थमिदमाह—

नीचैर्गोत्रस्यास्रवाः **सूत्रम्—परात्मनिन्दाप्रशंसे सदसद्गुणाच्छादनोद्भावने च नीचैर्गोत्रस्य ॥ ६–२४ ॥**

भा०—परनिन्दा आत्मप्रशंसा सद्गुणाच्छादनमसद्गुणोद्भावनं चात्मपरोभयस्थं नीचैर्गोत्रस्यास्रवा भवन्ति ॥ २४ ॥

टी०—परनिन्देत्यादि भाष्यम् । परश्चात्मा च परात्मा निन्दा च प्रशंसा च निन्दाप्रशंसे परात्मनो निन्दाप्रशंसे यथाक्रममभिसम्बन्धः परात्मनिन्दाप्रशंसे। सन्तोऽसन्तश्च सदसन्तः-विद्यमानाविद्यमानाः ते च ते गुणाश्च सदसद्गुणाः, छादनं चोद्भावना च छादनोद्भावने, अत्रापि क्रमेणाभिसम्बन्धः सदसद्गुणाच्छादनोद्भावने । चशब्दात् परात्मनिन्दाप्रशंसे समुच्चीयेते ।

१ 'प्रज्ञादित्वात्' इति क-पाठः ।

नीचैर्गोत्रस्य कर्मण आस्रवा भवन्ति । तत्र स्वात्मव्यतिरिक्तः परस्तस्य गुणवतोऽपि गुणापह्नवद्वारेण निन्दा-अपवदनमभूतानां भूतानां च दोषाणामुद्भावनं, स्वात्मनः प्रशंसनं-स्तुतिर्गुणोद्भावनम् अभूतानां भूतानां च गुणानामात्मनैव प्रख्यापनम् । सन्तो गुणा विद्यमानास्तेषां छादनं-संवरणं स्थगनं, द्वेषात् पृष्टोऽपृष्टो वा नाचष्टे गुणान् सतोऽपि, प्रस्तुतत्वात् परसम्बन्धिगुणगणच्छादनमेव सम्बन्ध्यम्, आत्माभिसम्बन्धेनासताम्-अभूतानामेव गुणानामुद्भावनं करोत्यपृष्टः पृष्टो वा प्रख्यापयतीतियावत् । एतदेव च स्फुटतरं विभजते-आत्मपरोभयस्थमिति । आत्मस्थमसद्गुणोद्भावनं परस्थं सद्गुणच्छादनमात्मपरावेवोभयं तत्र स्थितं-वर्तमानम् । नीचैरिति । नीचं-जघन्यं-हीनम् । गोत्रमिति गूयते-अभिधीयते आहूयते वाऽनेनेति गोत्रम् । यत् कर्माशुभं तन्निमित्तीकृत्याभिधा प्रवर्तते चण्डालश्वपचमत्स्यबन्धादि तन्नीचैर्गोत्रं कर्म अभिसम्बन्धात् चशब्दोऽपि कुत्साहेतुष्वेव प्रयुज्यते । एवमेते परनिन्दादयो जातिकुलरूपबलश्रुताज्ञैश्वर्यतपोमदपरावज्ञानोत्प्रासनकुत्सनादयश्च नीचैर्गोत्रस्यास्रवा भवन्तीति ॥ २४ ॥

इदानीमुच्चैर्गोत्रस्यास्रवाभिधित्सयेदमाह—

उच्चैर्गोत्रस्यास्रवाः **सूत्रम्—तद्विपर्ययो नीचैर्वृत्त्यनुत्सेकौ चोत्तरस्य ॥२५॥**

**भा०—उत्तरस्येति सूत्रक्रमप्रामाण्यादुच्चैर्गोत्रस्याह । नीचैर्गोत्रास्रवविपर्ययो नीचैर्वृत्तिरनुत्सेकश्चोच्चैर्गोत्रस्यास्रवा भवन्ति ॥ ६-२५ ॥**

टी०-तदिति सर्वनाम पूर्वप्रकृतापेक्षं प्राक् प्रकृता नीचैर्गोत्रास्रवास्तेषां विपर्ययो—यथाभिहितवैपरीत्यं परगुणप्रशंसा आत्मनिन्दा च सद्गुणप्रकाशनमसद्गुणच्छादनं च परत्र, आत्मनि तु सद्गुणच्छादनमप्यात्मोत्कर्षपरिहारार्थं, तथा नीचैर्वृत्तिः-नीचैर्वर्तनं विनयप्रवणवाक्कायचित्तता । उत्सेको-गर्वः श्रुतजात्यादिजनितः नोत्सेकेऽनुत्सेको-विजितगर्वता । एतौ नीचैर्वृत्त्यनुत्सेकौ चशब्दात् तद्विपर्ययश्च उत्तरस्येति सूत्रक्रमप्रामाण्यादुच्चैर्गोत्रस्याह । इतिशब्दः पदार्थकः । नीचैर्गोत्रमुक्तलक्षणं तस्यास्रवविपर्ययः परगुणप्रशंसादिरपरं चास्रवद्वयं नीचैर्वृत्तिरनुत्सेकश्चोच्चैर्गोत्रस्यास्रवा भवन्ति । उच्चैरिति । उच्चम्-उत्कृष्टमिक्ष्वाकुहरिभोजराजन्यादीति ॥ २५ ॥

उक्तं गोत्रम् । आस्रवाधिकार एवायमनुप्रवृत्तस्तत्र समस्तकर्मप्रत्यवसाननिर्दिष्टस्यानुग्राहकसुखव्यवच्छेदकृतोऽन्तरायस्य क आस्रव इत्युच्यते—

अन्तरायस्यास्रवाः **सूत्रम्—विघ्नकरणमन्तरायस्य ॥ ६-२६ ॥**

**भा०—दानादीनां विघ्नकरणमन्तरायस्यास्रवो भवतीति ॥ एते साम्परायिकस्याष्टविधस्य पृथक् पृथगास्रवविशेषा भवन्तीति ॥ २६ ॥**

टी०—विघ्नो-विघातः-प्रतिषेधः सव्याजो निर्व्याजश्च तस्य करणम्-अनुष्ठानं तत्परि-

१ '०गुणाच्छादनमेव' इति प्रतिभाति ।

णामयोगिनोऽन्तरायाभिधानस्य कर्मण आस्रवो भवति । एतदेव भाष्येण स्पष्टयति–दानादीनामित्यादि । दानमादिर्येषां ते दानादयो–दानलाभभोगोपभोगवीर्याख्याः । तत्र दानं विशिष्टपरिणामपूर्वकं स्वस्य परस्वत्वापादनम् । तदेव गृह्यमाणं प्रतिग्रहीत्राऽऽदेयं लाभ उच्यते । भोगो मनोहारिशब्दादिविषयानुभवनम् । उपभोगोऽन्नपानवसनाद्यासेवनम् । वीर्यमात्मपरिणामो विशिष्टचेष्टालक्षणः । एषां दानादीनां विघ्नकरणं येन येनोपायेन न दत्ते तं तमुपायमापादयति दातुः, एवं येन येनोपायेन न लभते लिप्सुस्तथा भोगोपभोगानुभवनसमर्थो येन येनोपायेन न भवति यथा चास्य-वीर्यम्–उत्साहः–पराक्रमो न भवति तथा तथाऽनुतिष्ठतेऽन्तरायस्य कर्मण आस्रवो भवति । इतिशब्दो विघ्नकरणविशेषप्रदर्शनार्थः ॥

दानलाभादीनां व्याख्या

अधुना सकलास्रवप्रकरणपरामर्शद्वारेणोपसंहरत्यध्यायार्थम्–एते साम्परायिकस्येत्यादिना । एते तत्प्रदोषनिह्नवादयः संसारभ्रमणकारणस्याष्टविधस्य ज्ञानावरणादेरन्तरायपर्यवसानस्य कर्मणः पृथक् पृथग् विवेकिना पुनरु(पृथगु?)क्तया आस्रवविशेषाः सामान्यास्रवापेक्षया विशेषा भवन्ति । इतिशब्दोऽत्राभिधित्सितसंक्षिप्तार्थपरिसमाप्ताविति ॥ २६ ॥

अध्यायोपसंहारः

॥ इति श्रीतत्त्वार्थसूत्रे भाष्यसंयुक्ते भाष्यानुसारिण्यां तत्त्वार्थटीकायाम् आस्रवप्रतिपादनपरः षष्ठोऽध्यायः समाप्तः ॥ ६ ॥



# सप्तमोऽध्यायः ७



तत्रादिमं भाष्यम्—

भा०—अत्राह–उक्तं भवता सातावेद्यस्यास्रवेषु ( अ० ६ सू० १३ ) भूतव्रत्यनुकम्पेति। तत्र किं व्रतं को वा व्रतीति ? । अत्रोच्यते—

टी०—अत्राहोक्तं भवतेत्यादिना सम्बध्नाति भाष्यकारः। सूत्रेषूक्तं षष्ठाध्याये सद्वेद्नीयकर्मास्रवेषु भूतव्रत्यनुकम्पेति सकलसूत्रोपलक्षणम्।अथवा यावत् सम्बन्धोपयोगि तावत एवोपादानं, व्रतीति श्रूयते मत्वर्थीयप्रत्ययान्तः। तत्र किं व्रतं को वा व्रतीति प्रश्नेनोपक्रम्यते ॥ ननु च व्रतप्रश्न एव न्याय्यः तत्प्रस्तावात्, तत्परिज्ञानात् तु तत्सम्बन्धे व्रती सुज्ञान एवेति। उच्यते–विशिष्टसम्बन्धख्यापनार्थं व्रतिग्रहणं, वक्ष्यत्युपरिष्टात् "निःशल्यो व्रती" (अ० ७, सू० १३) इति। प्राणातिपातादिविरतयो मायादिशल्यविविक्ता व्रतव्यपदेशमश्नुवते, तथाविधव्रतसम्बन्धाच्च व्रतीति। अत्रोच्यत इति व्रतस्वरूपनिर्णयार्थमाह—

व्रतव्याख्या **सूत्रम्—हिंसानृतस्तेयाब्रह्मपरिग्रहेभ्यो विरतिर्व्रतम् ॥ ७–१ ॥**

टी०—व्रतिस्वरूपं त्विदमेव भाष्यमनूद्योपरिष्टात् प्रतिपादयिष्यते। गृह्णीमस्तावद् व्रतान्यथ व्रती क इत्यत्रेति। हिंसादयः कृतद्वन्द्वाः पञ्चम्यन्ताः। पञ्चमी च जुगुप्साविरामप्रमादार्थानामुपसङ्ख्यानादपादानलक्षणा, तां च प्रत्येकं हिंसाया इत्यादिना भाष्येण दर्शयति—

भा०—हिंसाया अनृतवचनात् स्तेयादब्रह्मतः परिग्रहाच्च कायवाङ्मनोभिर्विरतिर्व्रतम्।

टी०—हिंसादयश्च वक्ष्यमाणलक्षणाः। तत्र कषायादिप्रमादपरिणतस्यात्मनः कर्तुः कायादिकरणव्यापाराद् द्रव्यभावभेदेन प्राणव्यपरोपणं हिंसा। प्रागभिहित-

हिंसादीनां व्याख्या सामान्यलक्षणयोगे सति सद्भूतनिह्नवासद्भूतोद्भावनविपरीतकसावद्यादि मृषावचनम्। परपरिगृहीतस्य स्वीकरणमाक्रान्त्या चौर्येण शास्त्रनिषिद्धस्य वा स्तेयम्। पूर्वलक्षणयोगान्मोहोदये सति चेतनाचेतनस्रोतसोरासेवनमब्रह्म। सचित्ताचित्तमिश्रेषु द्रव्यादिषु शास्त्राननुमतेषु ममत्वं परिग्रहः। चशब्दः समुच्चयार्थः। एभ्यो हिंसादिभ्यः कायवाङ्मनोभिर्विरतिर्व्रतम्। विरतिः–निवृत्तिः ॥ ननु चासूत्रितत्वात् कायादित्रयमनुपादेयं भाष्येण। नायं दोषः। आत्मना हि विरतिः। सा च करणमवश्यंतयाऽपेक्षते। तच्च कायाद्येव योग्यम्। अथवा प्रमत्तयोगादित्यत्र योगग्रहणलक्षणसूत्रे सर्वव्रतविशेषणार्थं

---

१ 'सद्वेद्य०' इति घ-पाठः। २ 'हिंसादय' इति ग-ङ-पाठः। ३ 'शास्त्रप्रतिषिद्धस्य' इति ङ-पाठः। ४ 'करणावश्यतया' इति ग-पाठः।

यत् तच्चेतसि सन्निवेश्य विवृतं भाष्यकारेण । आस्रवाध्यायवक्तव्यशेषमेव वाऽधिकृत्य सप्तमाध्यायमाह । व्रतशब्दः शिष्टसमाचारात् निवृत्तौ प्रवृत्तौ च प्रयुज्यते लोके । निवृत्ते चेद्धिंसातो विरतिः-निवृत्तिर्व्रतं, यथा-वृषलान्नं व्रतयति-परिहरति । वृषलान्नान्निवर्तत इति, ज्ञात्वा प्राणिनः प्राणातिपातादेर्निवर्तते । केवलमहिंसादिलक्षणं तु क्रियाकलापं नानुतिष्ठतीति तदनुष्ठानप्रवृत्त्यर्थश्च व्रतशब्दः । पयो व्रतयतीति यथा, पयोऽभ्यवहार एव प्रवर्तते नान्यत्रेति, एवं हिंसादिभ्यो निवृत्तः शास्त्रविहितक्रियानुष्ठान एव प्रवर्तते, अतो निवृत्तिप्रवृत्तिक्रियासाध्यं कर्मक्षपणमिति प्रतिपादयति । निवृत्तिप्रवृत्ती च शास्त्रचोदिते, तदनुष्ठानान्मोक्षावाप्तिरिति ॥ ननु च भाष्यकारो निवृत्तिवचनमेव व्याचष्टे व्रतशब्देन, प्रवृत्तिवचनमपीति तदेतत् कथम् ? । अयमभिप्रायो भाष्यकृतः—अन्यतरोपादानेऽन्यतरप्रतीतिः सम्बन्धशब्दत्वाद् भवत्येव पितापुत्रादिवत् । यत उक्तम्-"ज्ञानक्रियाभ्यां मोक्ष" इति । प्राधान्यात् तु निवृत्तिरेव साक्षात् प्राणातिपातादिभ्यो दर्शिता, तत्पूर्विका च प्रवृत्तिर्गम्यमाना । अन्यथा तु निवृत्तिर्निष्फलैव स्यादिति ।

विरतिशब्दस्यार्थं निरूपयति—

**भा०—विरतिर्नाम ज्ञात्वाऽभ्युपेत्याकरणम् । अकरणं निवृत्तिरुपरमो विरतिरित्यनर्थान्तरम् ॥ १ ॥**

टी०—विरतिर्नामेत्यादिना । विरमणं विरतिः । नामशब्दो वाक्यालङ्कारार्थः । हिंसनं हिंसा-प्राणवियोजनम् । प्राणाश्चेन्द्रियादयस्तत्सम्बन्धात् प्राणिनः एकद्वित्रिचतुःपञ्चेन्द्रियाख्यास्तान् विज्ञानानुसारात् अभ्युपेत्य-श्रद्धाय प्रतिपद्य भावतोऽकरणं विरतिः । ज्ञानश्रद्धानपूर्वकं चारित्रमितियावत् । तदेव चाकरणं विवृणोति पर्यायैः-अकरणं निवृत्तिरुपरमो विरतिरित्यनर्थान्तरमिति । चरणस्यैते पर्यायाः । तत्राकरणमिति निवृत्तिप्रवृत्तिक्रियालक्षणं चारित्रं मनोवाक्कायकृतकारितानुमतिभेदोत्पन्नसप्तचत्वारिंशच्छतविकल्पभावनया परिहारानुष्ठाने, एवं निवृत्त्यादयोऽपि भावनीयाः, पर्यायशब्दैश्च व्याख्यानमसम्मोहार्थं प्रदेशान्तरेष्विति ॥ १ ॥

तदेतदविशेषचोदितं पञ्चतया विषयव्रताभिधानं विरत्याश्रयद्वयविवक्षावशेनासकलकृत्स्नभावादुभयथा वेदितव्यमित्याह—

## सूत्रम्—देशसर्वतोऽणुमहती ॥ ७-२ ॥

टी०—देशश्च सर्वं च देशसर्वे ताभ्यां देशसर्वतः । विरामार्थापेक्षा पञ्चमी । अणु च महच्चाणुमहती । कथं पुनर्विरतिसामान्यमेकं सत् द्विधा भिद्यते ? । विवक्षावशेन देशसर्वाभिधानाच्चैकत्वादिविवक्षायामेकवचनादिवत् हिंसादिविरतिव्रतप्रस्तावाच्च यथाक्रममभिसम्बन्धः । देशसर्वग्रहणं विरत्या सहाभिसम्बध्यते । अणुमहद्ग्रहणं व्रतेन । देशतो विरतिरणुव्रतं, सर्वतो विरतिर्महाव्रतम् । एतमेव सूत्रार्थं भाष्येण स्पष्टयति—

---

१ '०कृत सप्त०' इति क-पाठः । २ 'निवर्तन्ते' इति ग-पाठः । ३ '-व्रतीयतीति' इति क-पाठः । ४ 'एतन्निवृत्त्या' इति ङ-पाठः ।

भा०—एभ्यो हिंसादिभ्य एकदेशविरतिरणुव्रतं, सर्वतो विरतिर्महाव्रतमिति ॥ २ ॥

टी०—एभ्य इत्यादिना । एभ्य इति प्रस्तुतानि परामृश्य हिंसादीनि सर्वतो व्यवच्छिन्दन्नाह—एकदेशविरतिरणुव्रतमिति । सकलप्राणिगणविषया हिंसा, तस्याश्च विरतिर्न सवस्याः, किन्तु एकदेश इति एकदेशग्रहणेनैव स्पष्टयति–न सर्वस्मात् प्राणिव्यपरोपणाद् विरतिः, किन्तु एकदेशात्, स्थूलादित्यर्थः । स्थूलसूक्ष्मप्राणिभेदात् सङ्कल्पजारम्भभेदाद् वा । स्थूलान्मृषावादादिति कूटसाक्ष्यदानादि स्थूलः, मर्मादिप्रयोगतः सूक्ष्मः । स्थूलाददत्तादानादिति हठहरणादि स्थूलं यत्रैहिकामुष्मिकाश्चौर्यदोषा गृहिणाम्, सूक्ष्मं परिहासतः परकीयपरि(?)लघुतृणकाष्ठादिग्रहणं वा । स्थूलान्मैथुनाद् विरमति स्थूलत्वमेकदेशजनितमत्र प्रतीयते स्वदारसन्तोषः परदारनिवृत्तिर्वा । स्वदारसन्तुष्टः शेषयोषितो मातृवदनुपश्यति, परदाराभिगमनान्निवृत्तः परपरिगृहीतयोषितः[1] परिहरति, अपरिगृहीतवेश्यामभिगच्छति । तथा इच्छापरिमाणादन्यतो विरमामीति । केचिन्महाव्रतानुपातात् स्वल्पव्रतत्वादणुव्रतमिति व्याचक्षते ॥

सम्प्रति महाव्रतव्याचिख्यासयाऽऽह—सर्वतो विरतिर्महाव्रतमिति[3] । सर्वत इति । सर्वस्मात् सूक्ष्मात् स्थूलाच्च प्राणव्यपरोपणाद् विरमामीत्यादि । एवं शेषाण्यपि सर्वतो वाच्यानि । महाविषयत्वान्महाव्रतमित्येतानि पञ्च महाव्रतानि भवन्ति सम्यक्त्वयुक्तानि मूलवाच्यानि ॥ ननु च यथैव मृषादिनिवृत्तिरहिंसाव्रतपालनार्थत्वान्मूलगुणाः, एवं निशीथभोजनविरतिरपि मूलगुणः स्यात् । उच्यते–अहिंसाव्रतपरिपालनार्थत्वादिति समितिभिरनैकान्तः, अपि च महाव्रतधारिण एव तन्मूलगुणः तद्विरहितस्य यस्मान्मूलगुणा एवापरिपूर्णाः स्युः, अतो मूलगुणग्रहणे तद्ग्रहणमर्थाक्षिप्तम् । यथाच सवव्रतोपकारि रात्रिभोजनं न तथोपवासादि, अतस्तन्मूलगुणो महाव्रतिनः, शेषमुत्तरगुणः । अणुव्रतधारिणस्तूत्तरगुणो निशाभोजनविरतिराहारत्यागादुपवासवत् तप एव वा तदिति प्रतीतम् । कः पुनर्दोषो रात्रिभोजन इति चेत् एवं मन्यते–उद्गमादिदोपरहितस्य वासरपरिगृहीतस्याभ्यवहारेणान्धसो नक्तं न किल दोष इति।

रात्रिभोजननिषेधे हेतवः

एतदयुक्तम् । कालातिक्रान्तस्य प्रतिषिद्धत्वात्, गृहीतस्यानीतालोचितक्षणविश्रान्तिसमनन्तरमेव च भुजेरभ्यनुज्ञानात्, निशाहिण्डने चेर्यापथविशुद्धेरसम्भवात्, दायकगमनागमनसस्नेहपाणिभाजनाद्यदर्शनात्, आलोकितपानभोजनासम्भवात् । ज्योत्स्नामणिप्रदीपप्रकाशसाध्यमालोकनमिति चेत् तदप्यसत्, अग्निसमारम्भनिषेधात्, रत्नपरिग्रहाभावात्, ज्योत्स्नायाः कादाचित्कत्वात्, आगमे तन्निषिद्धत्वात्[2], हिंसादिवदनासेवनीयमेव विभावरीभक्तमिति ॥ २ ॥

---

१ '.परिग्रहयोषितः' इति ग-पाठः । २ '०पालनात्' इति ङ-पाठः । ३ 'मित्याह' इति ग-पाठः ।

उक्तं व्रतं सविधानमणु महच्च, तत्र महाव्रतमधिकृत्य भावनासूत्रम्—

## सूत्रम्—तत्स्थैर्यार्थं भावनाः पञ्च पञ्च ॥ ७–३ ॥

टी०—अणुव्रतस्य चोपरि बन्धवधादिकातिचारपरिहाररूपा वक्ष्यमाणा (अ०७, सू० २०) अपायावद्यदर्शनादिकाश्च सामान्यरूपाः । महाव्रतं चोपभोगा(वर्गा ?)मिलाषिभिः प्राणिभिर्धृतिसंहननपरिहाण्या प्रमादबहुलैः दूरक्षमतस्तत्प्रतिपातपरिहारार्थं भाव्यन्त इति भावनाः । तदित्यनेन पञ्चविधस्येति, सर्वनाम्नाऽनन्तरत्वान्महाव्रतमभिसम्बध्यते । भाष्यकारस्तु यद्यपि सामान्येन व्रतस्येति विवृणोति, तथापि तच्छब्दोपादानसामर्थ्यान्महाव्रताभिसम्बन्धः । अन्ये तु व्याचक्षते–द्वयोरपि व्रतयोर्न्याय्यः सम्बन्धः । सम्भवति हि श्रावकस्यापि कस्यचिद् यथोक्तं भावनाजालमेवं त्वव्याप्तिः स्यात्, व्यापिन्यश्च व्रतिनो भावना इष्यन्ते ।

व्रतानां भावनानां सङ्ख्या

भा०—तस्य पञ्चविधस्य व्रतस्य स्थैर्यार्थमेकैकस्य पञ्च पञ्च भावना भवन्ति ।

टी०—तस्य व्रतस्य पञ्चविधस्येति पञ्चप्रकारस्य सर्वप्राणातिपातविरत्यादेः स्थैर्यार्थं–दार्ढ्योपादनार्थं–स्थिरत्वं प्रयोजनमुद्दिश्य अभ्यस्यन्ते, अनभ्यस्यमानाभिर्भावनाभिर्मलीमसीभवन्त्यनभ्यस्यमानविद्यावन्महाव्रतानीति । एकैकस्येति व्रतस्य । सामानाधिकरण्येन षष्ठी, न समुदितानां पञ्चानामपीति ॥ ननु पञ्च पञ्चेति वीप्साविवक्षा । यत एकैकस्येति लप्स्यत एव, अन्यथा वीप्सानैरर्थक्यं स्यादिति । उच्यते-सामान्यविशेषाभ्यां व्याख्यातृभिः प्रतिपाद्यतेऽर्थः,पञ्चविधस्य व्रतस्येति सामान्येनोपक्रम्य पुनर्विशेषेणैकैकस्येत्याह समुदाये मा भूदिति । पञ्च पञ्चेति वीप्सायां द्विर्वचनम् । अपरे तु सूत्रमधीयते–तत्स्थैर्यार्थं भावनाः पञ्च पञ्चश इति ।

सूत्रपाठविचारः

ते चैवमभिदधति–संख्यावाचिनः प्रातिपदिकाद् वीप्सायां द्योत्यायां "कारकाच्छस्प्रत्ययोऽन्यतरस्या"मिति । द्वौ द्वौ ददाति द्विशो ददातीति वाक्यं वृत्तिश्च । तदेतदनुपपन्नम् । यतः शस्प्रत्ययान्तेन व्रतानि भावना वा सम्बध्येरन्, यदि व्रतानि ततः षष्ठ्यन्तेन सम्बन्ध्यानि पञ्चानां पञ्चानामिति । ततोऽकारकत्वात् षष्ठ्याः शस्प्रत्ययो न लभ्यते । अथ भावनाभिसम्बन्धस्ततः पञ्च भावना भवन्तीति पञ्चश इति वक्तव्यम् । द्वितीयं पञ्चग्रहणं न कर्तव्यम् । तत्स्थैर्यार्थं भावनाः पञ्चश इति पठितव्यम् । एवमुभयथाऽपि न घटते शस्प्रत्ययः । अतस्तत्स्थैर्यार्थं भावनाः पञ्च पञ्चेति न्याय्यं सूत्रम् ॥

अहिंसायाः पञ्च भावनाः

भा०—तद्यथा–अहिंसायास्तावदीर्यासमितिः, मनोगुप्तिः, एषणासमितिः, आदाननिक्षेपणासमितिः, आलोकितपानभोजनमिति ॥

---

१ 'पञ्चशः' इति घ-टी-पाठः । २ 'पूर्वैरनुमतः' इति क-पाठः । ३ 'समानाधिकरणे' इति ङ-पाठः ।

टी०—तद्यथेत्यनेन प्रस्तुतभावनोपन्यासः। अहिंसायास्तावदिति। अहिंसा प्राणातिपातविरतिः। तावच्छब्दः क्रमद्योतकः। अस्याः प्रथममुच्यते, पश्चान्मृषावादादिविरतेरभिधास्यते। ईरणमीर्या–गमनं तत्र समितिः–सङ्गतिः श्रुतरूपेणात्मनः परिणामः, तदुपयोगिना पुरस्ताद् युगमात्रया दृष्ट्या स्थावरजङ्गमानि भूतानि परिवर्जयन्नप्रमत्त इत्यादिको विधिः ईर्यासमितिः। मनसो गुप्तिर्मनोगुप्तिः–मनसो रक्षणमार्तरौद्रध्यानाप्रचारः धर्मध्याने चोपयोगो मनोगुप्तिः। एषणा गवेषणा-ग्रहण-ग्रासभेदात् त्रिधा। तत्रासमितस्य षण्णामपि कायानामुपघातः स्यात्, यतस्तत्संरक्षणार्थमेषणासमितिः समस्तेन्द्रियोपयोगलक्षणा। आदानं–ग्रहणं निक्षेपणं–मोक्षणमौघिकोपग्रहिकभेदस्योपधेरादाननिक्षेपणयोः समितिरागमानुसारेण प्रत्यवेक्षणप्रमार्जना। आलोकितपानभोजनमिति प्रतिगेहं पात्रमध्यपतितपिण्डश्चक्षुराद्युपयुक्तेन प्रत्यवेक्षणीयस्तत्समुत्थागन्तुकसत्त्वसंरक्षणार्थमागत्य च प्रतिश्रयं भूयः प्रकाशवति प्रदेशे स्थित्वा सुप्र(त्य)वेक्षितं पानभोजनं विधाय प्रकाशप्रदेशावस्थितेन वल्गनीयम्। इतिकरणः प्राणवधविरतेर्भावनेयत्ताव्यवस्थापनार्थः। एवमेताः पञ्च भावना मुहुर्मुहुर्भावयन्–वासयन् बहुलीकुर्वन् सकलामहिंसां पातुं प्रत्यलो भवतीति ॥

सम्प्रति सत्यवचनस्य भावनाः पञ्च प्रतिपादयन्नाह—

सूनृतस्य पञ्च भावनाः

भा०—सत्यवचनस्यानुवीचिभाषणं क्रोधप्रत्याख्यानं लोभप्रत्याख्यानं अभीरुत्वं हास्यप्रत्याख्यानमिति ॥

टी०—सत्यवचनस्येत्यादि। सत्यम्–अवितथं सद्भूतार्थप्रतिपत्तिकारि, असद्भूतं च विपरीतार्थप्रतिपादनं,प्राणानुपघातशून्यम्। अनुवीचीति देशीवचनमालोचनार्थे वर्तते। भाषणं वचनस्य प्रवर्तनम्। अतोऽयमर्थः–समीक्ष्यालोच्य वचनं प्रवर्तितव्यम्। अनालोचितभाषी कदाचिन्मृषाऽप्यभिदधीत। ततश्चात्मनो लाघववैरपीडाः फलमैहिकं, परसत्त्वोपघातश्च नियत इति। तस्मात् समीक्ष्योदाहरणेनात्मानं भावयन्न मृषावचनजनितेनैनसा सम्पृच्यते। क्रोधः कषायविशेषो मोहकर्मोदयनिष्पन्नोऽप्रीतिलक्षणः अद्बेषप्रायः। तदुदयाच्च परवान् वक्ता स्वपरनिरपेक्षो यत्किञ्चनभाषी मृषाऽपि भाषेत। अतः क्रोधस्य प्रत्याख्यानं निवृत्तिरनुत्पादो वा, (तेन) नित्यमात्मानं भावयेत्। एवंच वासयन् सत्यादि न व्यभिचरतीति। लोभः तृष्णालक्षणः कूटसाक्षित्वादिदोषाणामग्रणीः समस्तव्यसनैकराजो जलनिधिरिव दुर्भरः कर्मोदयाविर्भूतो रागपरिणामस्तदुदयादपि वितथभाषी भवति। अत्र सत्यव्रतमनुपालयता तदाकारपरिणामः प्रत्याख्येय इति भावनीयम्। भयशीलो भीरुस्तच्चैहिकादिभेदात् सप्तधा मोहनीयकर्मोदयजनितमुदयाच्च तस्यानृतभाषणं सुलभं भवतीत्यभीरुत्वं भावयेत्। अभीरुश्च न जातु-

१ 'प्रधानमोह' इति ङ-पाठः।

चिद् वितथं भाषते–तस्करोऽयं पिशाचो वा मया रजन्यां दृष्ट इति, तस्मान्निर्भयवासनाध्यानमात्मनि विधेयमिति । हास्यं हसनं–मोहोद्भवः परिहासस्तत्परिणतो ह्ययमात्मा परिहसन् परेण सार्धमलीकमपि ब्रूयात्, तस्य परिजिहीर्षया च हास्यप्रत्याख्यानमभ्युपेयम् । एताः पञ्चापि भावयन् भावनाः सत्यव्रतरक्षणक्षमो भवतीति ॥

तथाऽदत्तादानविरतेः पञ्चैव भावनास्तन्नाचिख्यासयाऽऽह—

**भा०—अस्तेयस्यानुवीच्यवग्रहयाचनमभीक्ष्णावग्रहयाचनमेतावदित्यवग्र-**
अस्तेयस्य पञ्च भावनाः **हावधारणं समानधार्मिकेभ्योऽवग्रहयाचनं अनुज्ञापितपान-भोजनमिति ॥**

टी०—अस्तेयस्य पञ्चेत्याद्युपन्यस्यति । आलोच्यावग्रहो याचनीयः ।[1] स चायं पञ्चप्रकारः पठितो देवेन्द्र-राज-गृहपति-शय्यातर-साधर्मिकभेदेन । अत्र च पूर्वः पूर्वो बाध्य उत्तर उत्तरो बाधक इति सञ्चिन्त्य यो यत्र स्वामी स एव याच्यः । अस्वामियाचने तु दोषबाहुल्यमुक्तम् आर्ष एव अकाण्डव्रीडनाद्यैहिकमामुष्मिकमदत्तपरिभोगजनितं, तस्मादालोच्य अवग्रहो याच्य इत्येवमात्मानं भावयेत् । इत्थं च भावयन्नादत्तादाने प्रवर्तेत इति । सकृद् दत्तेऽपि परिग्रहे स्वामिना भूयोऽभीक्ष्णावग्रहयाचनं कार्यं, अभीक्ष्णं–नित्यं मुहुर्मुहुः पूर्वलब्धपरिग्रहो ग्लानाद्यवस्थासु मूत्रपुरीषोत्सर्गपात्रकरचरणप्रक्षालनस्थानानि दातृचित्तपीडापरिहारार्थं याचनीयानि, एवं च याच्ञामाचरन्नादत्तादानजनितेनागसा स्पृश्यते । तथा एतावदित्यवग्रहावधारणं एतत्परिमाणमस्यैतावत्परिमितं सर्वतः क्षेत्रमवग्रहीतव्यं इत्येतदेवावधारणं सर्वतश्च परिमाणं तदभ्यन्तरवर्तिनीमूर्ध्वस्थानादिक्रियामासेवमानो[2] न दातुरुपरोधकारी भवति । याच्ञाकाल एव चानवधारणे विपरिणतिरपि वचसि[3] स्याद्वदान्यस्येत्यात्मनोऽपि चादत्तपरिभोगजनितः कर्मबन्ध इति । समानधार्मिकेभ्य इत्यादि । धर्मं चरन्ति–आसेवन्ते इति धार्मिकाः, समानाः–तुल्याः प्रतिपन्नैकशासनाः सम्यक्त्वादिमुक्तिसाधनसमन्विताः साधवस्तेभ्यः पूर्वपरिगृहीतक्षेत्रेभ्योऽवग्रहो याच्यस्तदनुज्ञानाद्धि तत्रासनमन्यथा स्तेयं स्यात् । तदनुज्ञातं तु प्रतिश्रयादि समस्तं गृह्णीयादित्येवमात्मानं भावयेत् । तथाऽनुज्ञापितपानभोजनमिति पञ्चमी भावना । अनुज्ञापितम्–अनुज्ञां प्रापितम्–अनुज्ञया स्वीकृतं पानभोजनं सूत्रोक्तेन विधिना पच्यमानकं पाषण्डमनुप्रविश्य व्यपगताङ्गविकारः पिण्डैषणोपयुक्तः अकृतकारितानुमतमतिसृष्टं कल्पनीयमानीय गुरवे निवेद्यालोचनापूर्वकमभ्यनुज्ञातो गुरुणा मण्डल्यामेकको वा भुञ्जीत । भुजिरत्र पालनेऽभ्यवहारे च व्याख्येयः । ततश्च यावत् किञ्चिद्धर्मसाधनमुपकरणमौघिकौपग्रहिकभेदं तत् सर्वमनुज्ञातं गुरुणा वन्दनपुरःसरं गुरुवचनविधिना परिभोक्तव्यम्, एवमात्मनि वासनामादधानो नातिक्रामत्यस्तेयव्रतमिति ॥

---

1 'वाचनीयः' इति ग-पाठः । 2 'नीमूर्ध्वस्थाना' इति क-पाठः । 3 'चेतसि' इति ङ-पाठः ।

ब्रह्मचर्यस्य पञ्च भावनाः

भा०—ब्रह्मचर्यस्य स्त्रीपशुपण्डकसंसक्तशयनासनवर्जनम्, रागसंयुक्तस्त्रीकथावर्जनम्, स्त्रीणां मनोहरेन्द्रियालोकवर्जनम्, पूर्वरतानुस्मरणवर्जनम्, प्रणीतरसभोजनवर्जनमिति ॥

टी०—अब्रह्मासेवननिवृत्तिः ब्रह्मचर्यम् । तस्यापि पञ्च भावनाः, तद्यथा—स्त्रीत्यादि भाष्यम् । स्त्रियो रूढ्या देवमानुषभेदाद् द्विविधाः । पशुग्रहणात् तिर्यग्जातिपरिग्रहः । तत्र वडवा-वालेयी-गो-महिष्य-जाविकादिषु सम्भवति मैथुनम् । एताश्च सचित्ताः, अचित्ताः स्त्रियः पुस्तलेप्यचित्रकर्मादिषु बहुप्रकाराः । पण्डकास्तृतीयवेदोदयवर्तिनो महामोहकर्माणः योषास्यसेवनाभिरताः क्लीबा इति प्रसिद्धाः, कृतद्वन्द्वैरेभिः संसक्तमाकुलं शय्यते यत्रास्यते च तच्छयनासनं प्रतिश्रयसंस्तारकासनादि, तच्च बह्वपायत्वाद् वर्जनीयमित्येवमात्मानं भावयेत् । तथा स्त्रीपशुपण्डकानामसन्निधानेऽपि रागसंयुक्तस्त्रीकथावर्जनम् । मोहोद्भवः कषायो रागः तदाकारपरिणामो रागसंयुक्तः । स्त्रीणां कथा स्त्रीकथा, रागसंयुक्तस्य स्त्रीकथा, अथवा रागसंयुक्ता चासौ स्त्रीकथा चेति रागानुबन्धिनी देशजातिकुलनेपथ्यभाषागतिविभ्रमेङ्गितहास्यलीलाकटाक्षप्रणयकलहशृङ्गाररसानुविद्धा वात्येव चित्तोदधेरवश्यंतया विक्षोभमातनोति तस्मात् तद्वर्जनं श्रेय इति भावयेत् । तथा स्त्रीणां मनोहरेन्द्रियालोकनवर्जनं मनोहराणि मानोन्मानलक्षणयुक्तानि दर्शनीयानि मृजावन्तीन्द्रियाणि योषितामपूर्वविस्मयरसनिर्भरतया विस्फारितलोचनः प्रेक्षते विकचकुवलयविपुलदलच्छवि नयनयुगलमस्याः कर्णजाहमकटाक्षमप्यालोकितं झगिति मनसिजज्वलनमादीपयति, किमुत विकटकटाक्षकनचितम् ! । एवं यथाविभागसन्निविष्टावयवानि श्रोत्रघ्राणवदनपीनपयोधरभरजघनस्थलादीनि वाच्यानि । त्वगिन्द्रियभेदत्वात् स्तनकलशाद्युपन्यासः । इत्येवं तदालोकनाद्युपरतिः श्रेयसीति भावयेत् । तथा पूर्वरतानुस्मरणवर्जनं प्रव्रज्यापर्यायात् पूर्वो गृहस्थपर्यायस्तत्र रतं-क्रीडितं-विलसितं यदङ्गनाभिः सह तस्यानुसरणात् कामाग्निस्तत्स्मरणेन्धनानुसन्धानतः सन्धुक्षते, अतस्तद्वर्जनं श्रेय इति भावयेत् । तथा प्रणीतरसभोजनवर्जनमिति । प्रणीतो-वृष्यः स्निग्धमधुरादिरसः क्षीरदधिनवनीतसर्पिर्गुडतैलपिशितमद्यापूपादिस्तदभ्यवहारो-भोजनं ततो मेदोमज्जाशुक्राद्युपचयस्तस्मादपि मोहोद्भवः, अतः सतताभ्यासतः प्रणीतरसाभ्यवहारो वर्जनीय इत्यात्मानं भावयेद् ब्रह्मचर्यमिच्छन्निति ॥

भा०—आकिञ्चन्यस्य पञ्चानामिन्द्रियार्थानां स्पर्शरसगन्धवर्णशब्दानां मनोज्ञानां प्राप्तौ गार्ध्यवर्जनममनोज्ञानां प्राप्तौ द्वेषवर्जनमिति ॥३॥ किञ्चान्यदिति ।

टी०—किञ्चनं बाह्याभ्यन्तरपरिग्रहः । अविद्यमानकिञ्चनः अकिञ्चनस्तद्भाव आकिञ्चन्यं-अपरिग्रहता तद्भावनाः पञ्च । तदभिधित्सयेदमाह-पञ्चानामित्यादि । पञ्चानामिन्द्रि-

---

१ 'पण्डक०' इति ख-पाठः । २ 'संकुलमाकुलं' इति क-पाठः । ३ '०कासनादि' इति क-पाठः ।

याणामर्था–विषयाः स्पर्शादयः पञ्चैव येषां मनोज्ञा रागहेतवस्तेषां मनोज्ञानाम्–इष्टानां स्पर्शरसगन्धवर्णशब्दानां प्राप्तौ ग्रहणे सति गार्ध्यवर्जनम्। गार्ध्य–स्नेहः–तेषु रागपरिणामोऽतस्तद्वर्जनं श्रेयः। तथा अमनोज्ञानाम्–अप्रीतिहेतूनां ग्रहणे द्वेषवर्जनम्। द्वेषः–क्रोधमानपरिणामः तत्त्यागात् पञ्चैता भावना भाव्यमानाः प्रतिक्षणमाकिञ्चन्यं परिपूरयन्ति। ममत्वलक्षणो भावतः परिग्रहः तद्व्यवच्छेदादपरिग्रहतेति ॥ ३ ॥

किञ्चान्यदिति सम्बध्नाति, भावनाप्रस्तावेऽन्यदपि मोक्षगुणं भावयेदिति। इतिशब्दः अप्यर्थे। प्रतिव्रतं पञ्च पञ्च भावनाः प्रतिपादिताः। सम्प्रति तु सर्वव्रतसामान्यभावनाः कथ्यन्त इति ॥

## सूत्रम्—हिंसादिष्विहामुत्र चापायावद्यदर्शनम् ॥ ७–४ ॥

भा०—हिंसादिषु पञ्चस्वास्रवेषु इहामुत्र चापायदर्शनम् अवद्यदर्शनं च भावयेत् ॥

टी०—हिंसा आदिर्येषां तेषु हिंसादिषु इहेत्यस्मिन्नेव लोके अमुत्रेत्यमुष्मिन् परलोके नरकादिजन्मनि अपायः–अनर्थपरम्परा अवद्यं-गर्हितं पापं तद्विपाकान्नरकादिषु तीव्रदुःखानुभवनमपायावद्ययोर्दर्शनम्–उपलब्धिः, उपलभमानश्च न प्रवर्तते हिंसादिषु, ज्ञानपूर्वकत्वात् क्रियानुष्ठानस्येति। एनमेवार्थं भाष्येण प्रपञ्चयति–हिंसादिष्वित्यादिना। हिंसादिष्वास्रवेषु कियत्सु ? पञ्चस्वित्याह। हिंसानृतस्तेयाब्रह्मपरिग्रहेषु आस्रवा उक्तलक्षणाः तेष्वपायदर्शनमवद्यदर्शनं च भावयेत्। इहैवामी प्रत्यवाया हिंसादिषु प्रवृत्तस्य दृश्यन्ते, पापविपाकश्च दारुणोऽमुत्रेत्येवं मुहुर्मुहुर्भावयेत् ॥

हिंसाया विपाकः

भा०—तद्यथा-हिंसायास्तावत् हिंस्रो हि नित्योद्वेजनीयो नित्यानुबद्धवैरश्च। इहैव वधबन्धपरिक्लेशादीन् प्रतिलभते प्रेत्य चाशुभां गतिं गर्हितश्च भवतीति हिंसाया व्युपरमः श्रेयान् ॥

टी०—तद्यथेत्यादि। तयोरपायावद्ययोर्विभागमाचक्षाणो हिंसायास्तावदित्याह। हिंसासम्बन्धिनी तावदपायावद्ये प्रकाश्येते पश्चादलीकानाम्। हिंसनशीलो[1] हिंस्रः–प्राणव्यपरोपणे जातशक्तिः। हिशब्दो यस्मादर्थे। नित्यं-सततमुद्वेजनीयः-संत्रासकारी। 'कृत्यल्युटो बहुलं'(पा० अ०३, पा०३, सू०११३)इति कर्तरि कृत्यप्रत्ययः। सर्वदा उद्वेजको निसा(निःसी?)मायुधो भीषणवेषो ललाटतटारोपितभ्रूभङ्गः प्रकृष्टामर्षेर्ष्यारसनिर्भरारुणलोचनो गाढदष्टदशनच्छदः सत्त्वानामुद्वेगकारीति प्रतीतम्। नित्यानुबद्धवैरश्चेति। नित्यमनुबद्धं–प्रसक्तं वैरमस्येति नित्यानुबद्धवैरः,सर्वदा प्रवृत्तवैरसन्तानश्च त(य)स्मान्नित्योद्वेजनीयो नित्यानुबद्धवैरश्च भवति।तस्मादिहैवेत्यभिसम्बन्धः। इहैवेत्यस्मिन्नेव लोके वधः–ताडनं द्विदलकशादिभिर्बन्धः पश्चात्पिण्डनहडीनिगडगलशृङ्खलादिकः परिक्लेशोऽङ्गुष्ठग्रहणोष्म[2]स्थापनजलावसेककाष्ठेष्टकरोपणादिप्राणव्यापत्तिः[3],

1 'हिंसाशीलो' इति ग-पाठः। 2 'णोष्णस्थापन' इति ङ-पाठः। 3 'व्यापत्त' इति ङ-पाठः।

आदिग्रहणादुल्लम्बनशिरश्छेदादिभिः, प्रतिलभत इति प्रतिप्राप्नोति। कृतस्य प्राणातिपातस्य च फलप्राप्तिरिहैवेति। प्रेत्य चेत्यादिना फलमामुष्मिकं दर्शयति। प्रेत्य चेति मृत्वा। अशुभा गतिः—नरकतिर्यङ्मानुषत्वानि। गर्हितो—निन्दितः। प्राक्तनजन्मोपात्ताशुभकर्मविपाकोऽयमस्य पापकारिणो वराकस्येत्येवं सम्भावयतो विवेकवतादस्य निश्चयप्रत्यय उत्पद्यते—हिंसायास्त्यागो—व्युपरमः श्रेयानिति ॥

अनृतस्य विपाकः

भा०—तथाऽनृतवादी अश्रद्धेयो भवति। इहैव जिह्वाच्छेदादीन् प्रतिलभते।

टी०—यथा प्राणातिपातकारी प्रत्यवायेन युज्यते तथाऽनृतवाद्यपीत्याह—अनृतं वक्ष्यमाणलक्षणं तद्वादी भवति अश्रद्धेय इति। अश्रद्धेयः अविद्यमानश्रद्धेयं वचनमस्येति सामर्थ्यादभिसम्बध्यतेऽनृतस्य प्रक्रान्तत्वात्। इहैवेत्यादिना प्रत्यवायमैहिकमामुष्मिकं च दर्शयति—जिह्वाच्छेदादीनिति। आदिशब्दात् कर्णनासिकाकरणच्छेदपरिग्रहः।

भा०—मिथ्याभ्याख्यानदुःखितेभ्यश्च बद्धवैरेभ्यस्तदधिकान् दुःखहेतून् प्राप्नोति, प्रेत्य चाशुभां गतिं गर्हितश्च भवतीति अनृतवचनाद् व्युपरमः श्रेयान् ॥

टी०—मिथ्या—अलीकं अभ्याख्यानं—अनृतवचनम् ॥ ननु च मिथ्याग्रहणमतिरिच्यते। यस्माल्लोकेऽभ्याख्यानशब्दोऽनृतवचन एव प्रसिद्ध इति। अभ्याख्यायक एव मिथ्याशब्दः। यद्वाऽभ्याङ्पूर्वस्य चक्षिङो ल्युटि वचनमात्रमभिलापोऽभ्याख्यानशब्देनोच्यते, तद्विशेषणाय चेदमुपादीयते मिथ्येत्येवमर्थवत्,नास्ति अलीकवचनेनैव चारोपयत्यनेनेदं कृतमनेनेदमिति, तेनाभ्याख्यानेनोत्पन्नदुःखास्तेभ्यश्चेति। पूर्वदोषापेक्षश्चशब्दः। बद्धेति। अविच्छिन्नं वैरं येषां तेभ्यः। तदधिकानिति जिह्वाच्छेदादिभ्योऽपि अतिशयेन यातनाप्रकारान् मिथ्याभ्याख्यानाधिकत्वाद् दुःखहेतून् वधबन्धादीन् प्राप्नोति। तीव्राशयो हि तीव्रस्थित्यनुभावमेव कर्मादत्ते। मुख्यः खहेतुराशयस्तत्पुरःसराः शेषहेतवः। प्रेत्येत्यादिनाऽऽमुष्मिकं फलमादर्शितम्, यस्माच्चैवंविधो विपाकोऽनृतवचनस्य तस्मात् तद्व्युपरमः श्रेयानिति ॥

यथा प्राणातिपातालीकानुष्ठायिनौ प्रत्यवाययुक्तौ,

स्तेयस्य विपाकः

भा०—तथा स्तेनः परद्रव्यहरणप्रसक्तमतिः सर्वस्योद्वेजनीयो भवति। इहैव चाभिघातवध[बन्धन]हस्तपादकर्णनासोत्तरौष्ठच्छेदनभेदनसर्वस्वहरणवध्यपानमारणादीन् प्रतिलभते, प्रेत्य चाशुभां गतिं गर्हितश्च भवतीति स्तेयाद् व्युपरमः श्रेयान् ॥

१ 'प्रतीतफल०' इति ङ-पाठः। २ 'निन्द्यः' इति ग-ङ-पाठः। ३ 'सम्भावयति' इति ग-पाठः। ४ 'निश्चय उत्पद्यते' इति ङ-पाठः। ५ 'यदा' इति ग-पाठः। ६ 'स्याचक्षिणरो ल्युटि' इति ग-पाठः। ७ 'बद्धमित्यव०' इति ग-ङ-पाठः। ८ 'भवतीति' इति घ-पाठः। ९ 'यातन०' इति घ-पाठः। १० 'भवति' इति ग-पाठः।

टी०—तथा स्तेन इत्यादि। स्तेनः परकीयद्रव्यापहारे प्रसक्तमतिः—सक्तचित्तः। सर्वस्येति अपह्रियमाणद्रव्यादिस्वामिन उद्वेगं जनयति। इहैव चेत्यादिना। हस्तादीनामवयवानां छेदनं—शरीरात् पृथक्करणं, भेदनं तु तथा सन्निविष्टानामेव वेधनपाटनादिकम्। वध्यपानमिति। वध्यो व्यापाद्यस्तस्य पानं, मद्यपानस्य प्रधानत्वात्, तत्पूर्वकमन्यदपि करवीरकुसुममालाभरणखरघटिकावलम्बमषीम्रक्षणचटकपंचकनाग्न्यकरणम्। मारणं—प्राणव्यपरोपणम्। आदिग्रहणात् स्वमांसखादनबन्धोत्कर्तनकपर्दिकामार्गणप्रकारपरिग्रहः। प्रेत्य चेत्याद्युक्तार्थम्, अतस्तद्व्युपरमः श्रेयान्। स्तेयात्—चौर्याद् व्युपरमः श्रेयानिति॥

यथा प्राणातिपातालीकास्तेयप्रवृत्ताः प्रत्यवायान् भूयसः स्पृशन्ति,

अब्रह्मणो विपाकः

भा०—तथा अब्रह्मचारी विभ्रमोद्भ्रान्तचित्तो विप्रकीर्णेन्द्रियो मदान्धो गज इव निरङ्कुशः शर्म नो लभते। मोहाभिभूतश्च कार्याकार्यानभिज्ञो न किञ्चिदकुशलं नारभते।

टी०—तथा अब्रह्मचारीत्यादि। अब्रह्मचारी—मैथुनसेवी। विभ्रमो—विलासविशेषस्तेनोद्भ्रान्तं चित्तं—चलमनवस्थितं यस्येति। विप्रकीर्णेन्द्रिय इति, तुच्छे विशिष्टे च विषये प्रवर्तितेन्द्रियवृत्तिः मनोज्ञेषु शब्दादिषु रागाङ्गेषु रागानुरक्तः, अमनोज्ञेषु द्विष्टेषु शब्दादिषु द्वेषाभ्युक्तात्मस्वरूपः। मदान्धो गज इवेत्यादिना हस्तिमूर्खेण सह साधर्म्यं दर्शयति। इतरथाऽपि तिर्यञ्चोऽपि हिताहितप्रवृत्तिनिवृत्तिपर्यालोचनेऽक्षमाः, स्वल्पज्ञानक्षयोपशमत्वात्, अतिशयेन तु मदकाले गुञ्जन्मनोहारिध्वनिमधुकरालीढमदवारिनिर्झरस्नापितकपोलभित्तिः अनादृताऽऽधोरणव्यापादितनिशिताङ्कुशतिग्माग्रवेधजनितव्यथो मत्तगज इव शर्म—सुखं नोपलभते नावाप्नोतीतियावत्। विभ्रमोद्भ्रान्तचित्तत्वात् (वि)प्रकीर्णेन्द्रियत्वाच्चेति युक्तिद्वयम्, अवितृप्तस्य च कुतः सुखेन सम्बन्ध इति। मोहाभिभूतश्चेत्यादिना मोहनीयकर्मोदयं सूचयति। स्त्रीपुंनपुंसकवेदोदयाभिभूतः स तथा विजृम्भत इति। चशब्दात् पूर्वोक्तविधिसमुच्चयः। इदमकार्यं इदं कार्यं च नाभिजानाति ग्रहाविष्टपुरुषवत् परवशत्वात्, ततश्च न किञ्चिदकुशलं न प्रारभते, निर्विवेकत्वात् सर्वमेव कुशलं मन्यत इत्यभिप्रायः॥

परदारगमनस्य फलम्

भा०—परदाराभिगमनकृतांश्च इहैव वैरानुबन्धलिङ्गच्छेदनवधबन्धनद्रव्यापहारादीन् प्रतिलभतेऽपायान्, प्रेत्य चाशुभां गतिं गर्हितश्च भवतीति अब्रह्मणो व्युपरमः श्रेयानिति॥

---

१ 'वध्योपायः' इति क-ख-ङ-पाठः। २ 'पञ्चनाग्न्यकरण' इति ग-पाठः। ३ 'प्रकीर्णे०' इति ख-ग-पाठः। ४ 'तिर्यग्जातिः' इति ङ-पाठः। ५ 'अक्षमा' इति ङ-पाठः।

टी०—परदारेत्यादिना ऐहिकामुष्मिकप्रत्यवायोपदर्शनम् । परेषां दाराः परदाराः—परपरिगृहीतयोषितः । श्रुतज्ञानप्रतिपिद्धश्च सर्वो मैथुनव्यापारः परदारशब्दवाच्यः, तदभिगमनं—तदासेवनं (तेन) जनितानिहैव वैरपरम्परा शिरश्छेदनं ताडनं बन्धनं द्रव्यापहारं, आदिग्रहणात् नानाविधाः, प्रतिलभत इति, एत एव प्रत्यपायाः । प्रेत्य चेत्यादिना पारलौकिकप्रत्यपायदर्शनम् । तस्मादब्रह्मणो व्युपरमः श्रेयानिति ॥

यथा प्राणातिपातादिप्रवृत्तः प्रत्यवायेन युज्यते,

परिग्रहस्य विपाकः　भा०—तथा परिग्रहवान् शकुनिरिव मांसपेशीहस्तोऽन्येषां क्रव्यादशकुनानामिहैव तस्करादीनां गम्यो भवति । अर्जनरक्षणाक्षयकृतांश्च दोषान् प्राप्नोति ॥

टी०—तथा परिग्रहवानित्यादि । शास्त्राननुज्ञातो मूर्च्छास्पदं च परिग्रहः तद्वान् परिग्रहवानिति । ऐहिकप्रत्यवायप्रदर्शनार्थं शकुनिरिवेत्यादिदृष्टान्तग्रन्थोपन्यासः परप्रत्यायनप्रयोजनः । मांसपेशीति । मांसखण्डमेव दीर्घं पेश्युच्यते । आदानमोक्षणव्यापारवत्त्वात् पादोऽपि हस्त एव शकुनेः, मांसपेशी हस्ते यस्येति मांसपेशीहस्तः । व्यधिकरणानामपि गमकत्वाद् बहुव्रीहिः कण्ठेकालवत् । अन्येषां क्रव्यादशकुनानामिति । आममांसभक्षाः क्रव्यादा अभिधीयन्ते । कृतविकृतशब्द उपपदेऽपि प्रत्ययोद्देशः, पृषोदरादित्वाच्च कृतविकृतशब्दस्य क्रव्यादेशः । कृतविकृतपक्वमांसभक्षास्तु क्रव्यादाः । कर्मण्यणेवेति । मांसपेशीपरिग्रहहेतोः क्रव्यात्पतत्रिणामिहैव गम्यः—अभिभवनीयः, चञ्चुचरणनखमुखपक्षतिप्रहतः परिशटत्पतत्रव्रजः शरणार्थी वियति नश्यन् निरालम्बनः परिश्रान्तस्तरुशिखराद्युपघ्नप्राप्तिसमनन्तरमाक्रम्य बलादपहृतमांसपेशीकः किञ्चिदुच्छ्वसन् कण्ठगतप्राणः कृच्छ्राद् विमुच्यते शकुनिभिः । तस्करादीनां च गम्यः परिग्रहवान् । आदिग्रहणाद् राजदायादपरिग्रहः । तस्करादयः प्रसभं चौर्येण वाऽपहारमाचरन्त्यभिभूयेति । अर्जनं, उपात्तस्य पालनं रक्षणं, क्षयो—नाश इत्यर्जनादिकृतांश्च परिग्रहवान् अवाप्नोति दोषान् । तत्रार्जनं न्याय्यमन्याय्यं वा । न्याय्यं वाणिज्यकर्मकरत्वं कृष्याद्युपायम् । तच्चातिक्लेशयुक्तम् । अन्याय्यं तस्करत्वाद्युपायसाध्यम् । तत्रापि वधबन्धविशसनादिदोषाः । रक्षणमपि सूत्रसुचेतसो (?) रात्रिंदिवं नृपदहनतस्करदायादमूषिकादिभ्यः क्लेशबहुलम् । क्षयोऽप्युपभोगादपुण्योदयाच्च । तत्रोपभोगकालमधिकृत्येदमाह—

भा०—न चास्य तृप्तिर्भवतीन्धनैरिवाग्नेः, लोभाभिभूतत्वाच्च कार्याकार्यानपेक्षो भवति, प्रेत्य चाशुभां गतिं प्राप्नोति, लुब्धोऽयमिति च गर्हितो भवतीति परिग्रहाद् व्युपरमः श्रेयान् ॥ ४ ॥ किञ्चान्यत्—

१ 'विप्रत्ययादेः' इति ग-पाठः । २ 'इच्छ्वासात्' इति ङ-पाठः । ३ 'सूचित' इति ङ-पाठः ।

टी०—न चास्य तृप्तिर्भवतीन्धनैरिवाग्नेरिति । उपभुञ्जानस्यापि चास्य तृप्तिरसम्भाव्याऽग्नेरिन्धनैरिव प्रक्षिप्यमाणैः प्रवृद्धज्वालाकलापस्य प्रत्युत वृद्धिरेव जायते, एवं परिग्रहवतः प्राज्यद्रविणराशेरपि प्रतिक्षणमपूर्वापूर्वद्रव्यावाप्तौ सन्ततैवेच्छा विजृम्भते । इच्छायाश्चानिवृत्तौ तृप्त्यभावः । न चातृप्तः सुखलेशेनापि युज्यत इति । अपुण्योदयादपि क्षयो भवति । विभवस्य दक्षिणोत्तरमथुराधिवासिवणिग्द्वयप्राप्तिप्रणाशाख्यानकाद् भावनीयः । तन्नाशे च हृदयातिसारग्रहणीदोषग्रहावेशदौर्बल्यमरणावसानः शारीरो मानसश्च क्लेशः । लोभाभिभूतत्वाच्चेत्यादि । लोभकषायानुरक्तचित्तो लोभाभिभूतः—तृष्णापिशाचिकया वशीकृतस्तद्भावो लोभाभिभूतत्वं तस्माच्चेति । चशब्दः समुच्चयार्थः । इदं कर्तव्यमिदं न कर्तव्यमिति नापेक्षते—नालोचयति । तत्र कर्तव्यं कार्यं यत्र प्रवर्तते पुरुषस्तदात्वायत्योः सुखार्थं, तच्च नापेक्षते तृष्णान्धः । शुचि कर्मानुष्ठानं, अकर्तव्यं-अकार्यं तत्राप्यनालोच्य प्रवर्तते, न प्रत्यवायान् निभालयति । यतः पितरमपि हिनस्ति मातरमप्युच्छिनत्ति पुत्रमपि व्यापादयति भ्रातरमपि जिघांसति प्रियां जायामपि ज्ञपयतीत्येवमकार्यमेतदिति नापेक्षते । प्रेत्य चेत्यादिना पारलौकिकप्रत्यवायप्रदर्शनं, प्रकर्षकाष्ठाप्राप्तस्तृष्णाकषायः कृमिरागानुकारी तत्परिणामश्चायमात्मा नरकादिषूपपद्यत इत्यागमः । लुब्धोऽयमित्यादिना लौहिकमेव प्रत्यवायशेषमाचष्टे । लुब्धस्तृष्णावानदाता सञ्चयैकचित्तो न कस्मैचिद् दुष्कृतमपि ददातीत्यक्षिलम्बनम् । निन्द्यते च, जनसमवायेष्वयशो लभत इति प्रतिपादयति । अतः परिग्रहाद् व्युपरमः श्रेयानिति ॥४॥

किञ्चान्यत् इत्यनेन सम्बन्धमाह । हिंसादयः प्रक्रान्ताः किञ्चेत्यनेनोपेक्ष्यन्ते । एतेषु हिंसादिष्विदमन्यद् भावयेत् । तदाह—

हिंसादयो दुःखम् **सूत्रम्—दुःखमेव वा ॥ ७–५ ॥**

टी०—वाशब्दो विकल्पार्थः । अपायावद्यदर्शनं भावयेत्, दुःखमेव वा भावयेदिति, समुच्चयार्थो वाशब्दः । दुःखमेव च भावयेत्, अपायावद्यदर्शनं चेति । एवकारोपादानात् सुखलवगन्धोऽपि नास्तीति प्रतिपादयति । दुःखमेव केवलं हिंसादयो न सुखमपीति । एनमेवार्थं भाष्येण स्पष्टयति—

भा०—दुःखमेव वा हिंसादिषु भावयेत् । यथा ममाप्रियं दुःखं, एवं सर्वसत्त्वानामिति हिंसाया व्युपरमः श्रेयान् ॥

टी०—दुःखमेव वेत्यादिना । हिंसादिष्विति हिंसानृतस्तेयाब्रह्मपरिग्रहेषु विषयभूयमापन्नेषु दुःखहेतुषु दुःखस्वभावेषु च दुःखबहुलतामेव भावयेदिति । केन प्रकारेणेत्याह—यथा ममाप्रियं—न प्रीतिकारि दुःखं अनिष्टसंयोगनिमित्तं शरीरमनःपीडात्मकं व्यापत्ति-

पर्यवसानम् । एवं सर्वेषां सत्त्वानामप्यप्रियं वधबन्धच्छेदनपाटनोल्लम्बनादिहेतुकमात्मानुमानादवसेयमित्येवमालोचयतः कृतिनो मनसि निश्चितमवतिष्ठते । अतो हिंसाया व्युपरमः श्रेयानिति ॥

अनृतभाषणमपि दुःखमेवेत्यभिधित्सुराह—

**भा०—यथा मम मिथ्याभ्याख्यानेनाभ्याख्यातस्य तीव्रं दुःखं भूतपूर्वं भवति च तथा सर्वसत्त्वानामिति अनृतवचनाद् व्युपरमः श्रेयान् ॥**

टी०—यथा ममेत्यादि । मिथ्याभ्याख्यानं प्राग् व्याख्यातं, तेन मिथ्याभ्याख्यानेन-अलीकाध्यारोपेण अभ्याख्यातस्य-अभिमुखमाख्यातस्याभियुक्तस्य प्रकाशितस्य चानेनेदं कृतमुक्तं वेति तन्निमित्तं यथा मम प्रकृष्टं तीव्रं दुःखं भूतम्-उत्पन्नपूर्वमित्यर्थः, सम्प्रति वा भवत्यलीकाध्यारोपात् तथा सर्वसत्त्वानां तादृगेव तीव्रं दुःखमभ्याख्यानहेतुकमुपजायतेऽस्मिन्नेव लोके, अमुष्मिन् पुनर्लोके मिथ्याभ्याख्यानपरो यत्र जन्म प्रतिलभते तत्र तत्र तादृशैरेवाभ्याख्यानैरभियुज्यमानः सदा दुःखमनुभवतीत्यनृताद् व्युपरमः श्रेयानिति ॥

हिंसानृतभाषणदुःखवत् स्तेयमपि दुःखमेवेत्याह—

**भा०—यथा ममेष्टद्रव्यवियोगे दुःखं भूतपूर्वं भवति च तथा सर्वसत्त्वानामिति स्तेयाद् व्युपरमः श्रेयान् ॥**

टी०—यथा ममेत्यादि । यथा मम स्वद्रव्यस्येष्टस्य वियोगेऽपहारक्रियया तस्करैः कृते दुःखं शारीरं मानसं वा पूर्वमभूत् भवति वाऽधुना तथा सर्वसत्त्वानाम् । अतः स्तेयाद् व्युपरमः श्रेयानिति ॥ यथा च हिंसानृतस्तेयानि दुःखस्वभावानि,

**भा०—तथा रागद्वेषात्मकत्वान्मैथुनं दुःखमेव । स्यादेतत् स्पर्शनसुखमिति । तच्च न । कुतः ? व्याधिप्रतीकारत्वात् कण्डूपरिगतवच्चाब्रह्मव्याधिप्रतीकारत्वात् ॥**

टी०—पूर्वदुःखतुल्यतामतिदिशति । मायालोभौ रागः । क्रोधमानौ द्वेषः । माया छद्मरूपा । तदाकारपरिणामश्च हिंसानृतस्तेयेषु प्रवर्तते । लोभोऽपि गार्ध्यलक्षणस्तत्परिणामश्च मांसादिगार्ध्याद्युक्तोऽन्नग्रहणेन चौर्येण चैतेषु प्रवर्तते । तथा क्रोधमानाभ्यामपि प्रेरितो हिंसादिषु प्रवर्तते इत्यत्यन्तप्रसिद्धम् । मैथुनस्यापि तावेव रागद्वेषौ निदानं, रागद्वेषकारणत्वाच्च मैथुनमपि दुःखमेवेत्यवधार्यते । रागद्वेषावात्मनः स्वभावः—कारणं यस्य तद् दुःखमेव रागद्वेषात्मकत्वाद् हिंसादिवत् । स्यादेतदित्यादिना ग्रन्थेनाशङ्कते । प्रसिद्धिरियम्—योषितामुपभोगे दशनच्छदपानाक्षिचुम्बनवपुःपरिरम्भणपीनस्तनतटीनखमुखावदारणगुह्यसंयोगवीर्यनि-

---

१ 'निश्चेतमव०' इति ख-ङ-पाठः । २ 'जन्मनि' इति ङ-पाठः । ३ 'परिणतश्च' इति ङ-पाठः । ४ 'यूतस्यापि' इति ग-पाठः ।

सर्गसमकालभाविस्पर्शनेन्द्रियद्वारकं सुखमनुभवप्रमाणसिद्धं भूयसां प्राणिनामपह्नुवानस्य प्रतीतिप्रत्यक्षविरोधाववश्यंभाविनावित्यारेकिते भाष्यकृदाह—तच्च नेत्यादि । तदित्यनेन स्पर्शनसुखमभिसम्बध्यते । न खलु तत् सुखं, दुःखमेवेत्यभिप्रायः । वक्ष्यमाणोऽयमेतद्दृष्टान्तबलात् प्रतीतिप्रत्यक्षविरोधावनास्पदौ, इतरस्तमेव दृष्टान्तमभिध्यायन्नाह–कुत इति । कस्मादेतत् स्पर्शनसुखं दुःखमेव प्रतिपत्तव्यं युक्त्यन्तरात्? । साध्यसाधनसङ्गतेन हि साधर्म्यदृष्टान्तेन प्रतिपत्तिरुपजायते साध्यसाधनशून्येन व्यतिरेकदृष्टान्तेन वेति भाष्यकार आह—व्याधिप्रतीकारत्वादित्यादि । राजपुत्रीक्षयकुष्ठादयो व्याधिविशेषास्तेषां प्रतीकारः–प्रतिक्रिया, तन्निदानपरिहारेण भेषजोपयोगः पथ्यासेवनं च । उद्भूतो हि व्याधिः शरीरमनसोर्बाधामाधत्ते । बाधाप्रतिक्षेपश्च भेषजाद्युपयोगसाध्यः । कर्मणां च क्षयोपशमोदयादयः क्षेत्रकालद्रव्यभावाद्यपेक्षा न खल्वात्यन्तिकं सुखोपजननमाधातुं समर्थाः, दुःखप्रतिबन्धमात्रकारित्वात् । मूढाश्च तमवस्थाविशेषं सुखमिति मन्यन्ते । व्याधिश्च मकरध्वजः ॥

प्रथमोद्दिष्टव्याधितुल्यविपाकत्वात् हेतुविचारणायाह[2]—

**भा०—असुखे ह्यस्मिन् सुखाभिमानो मूढस्य । तद्यथा—तीव्रया त्वक्शोणितमांसानुगतया कण्ड्वा परिगतात्मा काष्ठशकललोष्टशर्करानखशुक्तिभिर्विच्छिन्नगात्रो रुधिरार्द्रः कण्डूयमानो दुःखमेव सुखमिति मन्यते । तद्वन्मैथुनोपसेवीति मैथुनाद् व्युपरमः श्रेयान् ॥**

टी०—असुखे ह्यस्मिन्निति । दुःखमेव भ्रान्ताः सुखमित्युपचरन्ति मोहादज्ञानाच्चेत्यतोऽसुखे तस्मिन् सुखबुद्धिर्यथा गण्डादिषु पाकाभिमुखेषु परिपक्वेषु च तीव्रवेदनापरिगतस्य जन्तोस्तत्पाटनपूयनिःसरणेन वेदनामात्रप्रशमस्तथा पुरुषवेदाद्युदयात् तीव्रार्तिभाजोऽवधीरितविवेकबलस्य यत्किञ्चनकारिणो ग्रहाविष्टस्येव परवशतः सदाऽऽर्तध्यानपीड्यमानमनसः स्त्र्यादिसंयोगे विलपतोऽसभ्यानि प्राप्तमूर्च्छागमस्येव बाढं क्लिश्नतो बीजलेशानुत्सृजतः पूयलवानिव सुखमभिमन्यमानस्य मोहनीयकर्मविजृम्भनिर्भरचेतसो

मैथुने न सुखावाप्तिः दुःखमेव, अस्मिन् प्रत्यक्षप्रमाणसमधिगम्ये कुतः प्रतीत्यनुभवविरोधाविति? । यस्त्वनुभवस्तत्र सुखरूपः सोऽभिनिविष्टबुद्धेरभिमानवतः समुपजातभ्रान्तेः शुक्तिकायां रजतप्रत्ययानुभववदिति । अतो विवादगोचरापन्नो बीजनिसर्गो न सुखहेतुः, व्याधिप्रतीकारत्वात् पूयादिनिसर्गवत् । अस्मिंश्च प्रतिज्ञाने दृष्टान्तः सुलभ इत्यनुपात्तोऽपि भाष्यकृता व्याख्यात्रा प्रदर्शितः । भाष्यकारीयदृष्टान्तस्तु—तद्यथेत्यादिना भाष्यते[4] ।

---

१ 'मभिधापयन्नाह' इति ङ-पाठः । २ 'विवरणाय' इति ङ-पाठः । ३ 'शिलालोष्ट०' इति क-पाठः ।
४ 'भाव्यते' इति ग-पाठः ।

कामसुखं दुःखमेवेति ख्याप्यते। तीव्रयेत्यादि कण्डूविशेषणम्। तीव्रा-पराकाष्ठां गता त्वक्-चर्मशोणितमसृग्मांसपिशितमेदाद्यनुगता-प्राप्ता। न चैवंविधया कण्ड्वा परिगतात्मा व्याप्तशरीरः काष्ठादिकण्डूयनक्रियायाः कारणं नानारूपमपदिशति। काष्ठशकलं-काष्ठखण्डं येन कण्डूया निर्वर्तते[1]। लोष्टः—इष्टकादिखण्डम्। शर्करा-शर्करोटादिका। नखशुक्तयो-नखमुखानि। प्रदर्शनमात्रमेतत्। एभिः काष्ठशकलादिभिर्विच्छिन्नगात्र इति विदारितगात्रः कृतत्वक्छेदस्ततश्च स्रवता रुधिरेणार्द्रः। कण्डूयमान इति कण्डूञ्धातोर्ञित्त्वात् कर्त्रभिप्राये क्रियाफले आत्मनेपदम्। कण्डूयमानः-कण्डूयां निर्वर्तयन्[2] एवंविधावस्थो दुःखमेव सुखमिति मन्यते मोहात्। प्रयोगोऽपि भाष्यार्थानुगतो-विवादगोचरापन्नो बीजनिसर्गो न सुखं प्रति कारणं[3], व्याधिप्रतीकारमात्रत्वात् पामनकण्डूयावत्। यः पुनरैकान्तिकात्यन्तिकसुख-हेतुः स नैव व्याधिप्रतीकारमात्रकारी ज्ञानक्रियालक्षण इति। तद्वन्मैथुनोपसेवीत्यनेन साम्यमापादयति[4] दार्ष्टान्तिकस्य दृष्टान्तेन सह। ततश्च सह दुःखभावनावासितचेतसो मैथुनाद् व्युपरमः श्रेयानिति॥

यथा प्राणातिपातादयो दुःखं तथा परिग्रहोऽपीति प्रतिपादयति—

**भा०—तथा परिग्रहवानप्राप्तप्राप्तनष्टेषु[5] काङ्क्षारक्षणशोकोद्भवं[6] दुःखमेव प्राप्नोतीति[7] परिग्रहाद् व्युपरमः श्रेयानिति। एवं भावयतो व्रतिनो व्रतस्थैर्यं भवति॥ ५॥ किञ्चान्यत—**

**टी०—**परिग्रहः सचित्तादिभेदो ममत्वसम्बन्धः। स च ममत्वी परिग्रहवान्। अप्राप्तादीनि त्रीण्यपि कृतद्वन्द्वानि परिग्रहविशेषणतयोपात्तानि। काङ्क्षादित्रयमपि कृतद्वन्द्वम्। साक्षाद् दुःखहेतुत्वोपपत्तेः। अप्राप्तविशिष्टपरिग्रहता काङ्क्षादिहेतुः। काङ्क्षादयोऽपि दुःखहेतवः। काङ्क्षादिभ्य उद्भवो यस्य दुःखस्य तत् तथोक्तम्। तत्र काङ्क्षा-अभिलाषोऽर्जनम्-उपादाने प्रयत्नः स च दुःखमेव, खेदकारित्वात्। एवं तावदप्राप्तेषु दुःखभावना। प्राप्तेषु च परिग्रहेषु नृपदहनतस्करदायादमूषिकादिभ्यो रक्षणे नित्योद्विग्नः कुर्वन् दुःखमेव प्राप्नोति। नष्टेषु तु परिग्रहेषु दुःखनिमित्ततः स्मृत्यनुषङ्गलक्षणोऽसह्यः शोकस्ततः स तद्भवशर्म प्राप्नोति[8]। अतः परिग्रहाद् व्युपरमः श्रेयानिति। एवं भावयत इत्यादिना दुःखमेवेत्यस्य सूत्रस्य परिसमाप्तिमादर्शयति। ततश्च ये भाष्यमेव कयापि बुद्ध्या सूत्रीकृत्याधीयते व्याधिप्रतीकारत्वात्

---

१ 'निवर्त्यते' इति ग-पाठः। २ 'निवर्तयन्' इति ङ-पाठः। ३ 'सुखप्रतीतिकारणं' इति ग-पाठः, 'सुखकारणं' इति तु ङ-पाठः। ४ 'सम्यगापाद०' इति ङ-पाठः। ५ 'परिग्रहेषु अप्राप्तनष्टेषु काङ्क्षाशोकौ प्राप्तेषु च रक्षणं उपभोगे चावितृप्तिः' इत्यधिकः घ-टी-पाठः। ६ 'परिग्रहेषु काङ्क्षा०' इति ख-पाठः। ७ 'उपभोगे चावितृप्तिरिति' इत्यधिको घ-टी-पाठः। ८ 'त्त्वोपात्तः' इति ग-पाठः। ९ 'माप्नोति' इति ख-ङ-पाठः।

कण्डूपरिगतत्वोच्चान्नह्वेति, तथा परिग्रहेष्वप्राप्तप्राप्तनष्टेषु काङ्क्षाशोकौ प्राप्तेषु च रक्षणमुपभोगे वाऽवितृप्तिरिति, तदनार्षं सूत्रकरणमिति विज्ञायते । यदि च सूत्रं स्यात् तत उपभोगे वाऽवितृप्तिरित्यस्यावयवस्य विवरणं स्यात्, न चास्ति, तस्मादनार्षं सूत्रद्वयमन्तरालकमिति । एवम्—इत्युक्तेन प्रकारेण भावयतो—वासयतः स्थैर्यं व्रतिनो व्रतानां भवति ॥ ५ ॥

भाष्यस्य सूत्रीकरणे दोषः

किञ्चान्यदित्यनेन सम्बन्धमाह । भावनाप्रस्तावेऽन्यच्च किं भावयितव्यमित्यत आह—

## सूत्रम्—मैत्रीप्रमोदकारुण्यमाध्यस्थ्यानि सत्त्वगुणाधिकक्लिश्यमानाविनेयेषु ॥ ७–६ ॥

टी०—मैत्र्यादीनां कृतद्वन्द्वानां द्वितीयाबहुवचनेन निर्देशः । सत्त्वादीनामपि कृतद्वन्द्वानां भावनाविषयत्वेनाधिकरणविभक्तिबहुवचनेन निर्देशः । किञ्चान्यदित्यस्यार्थं स्पष्टयति—

मैत्रीभावना

**भा०—भावयेद् यथासङ्ख्यम् । मैत्रीं सर्वसत्त्वेषु । क्षमेऽहं सर्वसत्त्वानाम् । मैत्री मे सर्वसत्त्वेषु । वैरं मम न केनचिदिति ॥**

टी०—भावयेद् यथासङ्ख्यमित्यनेन भाष्येण । भावनावसरे इदमपरं मैत्र्यादि भावयेत् । तच्च यथासङ्ख्यमभिसम्बध्य भावयेत् । मैत्रीं सत्त्वेषु, प्रमोदं गुणाधिकेषु, इत्येवमन्यत्रापि योज्यम् । मैत्रीं सर्वसत्त्वेष्वित्यादि भाष्यम् । मित्रं 'ञिमिदा स्नेहने' औणादिकः ष्ट्रन् । मिद्यतीति मित्रं, स्निह्यतीत्यर्थः । तस्य भावः समस्तसत्त्वविषयः स्नेहपरिणामो मैत्री । येऽपि कृतापकाराः प्राणिनः प्रमादादन्यथा वा तेष्वपि मित्रतां चेतसि सन्निवेश्य मित्रमहमेतेषां एते च मे मित्राणीति तत् कथमहं मित्रद्रोहतां प्रतिपत्स्ये ? । दौर्जन्याश्रयं हि मित्रद्रोहित्वम् । अतः क्षमेऽहं सर्वसत्त्वानामिति क्षमां भावयेत् । सम्यक् मनोवाक्कायैः सहेऽहं सर्वसत्त्वानाम् । एवं हि मित्रता यथार्थत्वमासादयति । येषां च मयाऽपकारः कृतस्तानपि सत्त्वान् क्षमयेऽहं मित्रत्वात् । ह्रस्वत्वं 'णिचश्च' ( पा० अ० १, पा० ३, सू० ७४ ) इत्यात्मनेपदम् । क्षमये इति क्षमां ग्राहयामि सर्वान् प्राणिनः प्रशस्तेन चेतसा । स्वचेतसश्च कालुष्यमपनेयमित्येवमुपनयस्तन्त्रे । परस्तु क्षमेत वा न वेत्येतदेव स्पष्टतरं विवृणोति—**मैत्री मे सर्वसत्त्वेषु वैरं मम न केनचिदिति** । वीराणामिदं कर्म 'तस्येदम्' ( पा० अ० ४, पा० ३, सू० १२० ) इत्यण् । वैरमविच्छिन्नकोपपरंराणां शूराणामन्योन्यव्यापादनलक्षणा कर्मपरम्परा, तत्र कृतापकारेण अकृतापकारेण वा केनचिदसुमता सार्धमवैरानु-

१ 'त्वादन्नह्वेति' इति ङ-पाठः । २ 'माध्यस्थानि' इति घ-पाठः । ३ 'क्षमये' इति घ-पाठः । ४ 'प्रसराणां' इति क-पाठः ।

बन्धः । स चैष प्रसृतदुरितशाखाशतसम्बाधो मात्सर्यविषयोदयः पुनः पुनरविच्छिन्नबीजाङ्कुर-प्रसवप्रत्यलस्तीक्ष्णप्रज्ञाकुठारधाराच्छेद्योऽवधीरितसकलशेषोपायो मैत्रीभावनया निरवशेष-मामूलादुत्कर्तनीयः ॥

प्रमोदभावना

भा०—प्रमोदं गुणाधिकेषु । प्रमोदो नाम विनयप्रयोगः । वन्द-नस्तुतिवर्णवादवैयावृत्त्यकरणादिभिः सम्यक्त्वज्ञानचारित्र-तपोऽधिकेषु साधुषु परात्मोभयकृतपूजाजनितः सर्वेन्द्रियाभि-व्यक्तो मनःप्रहर्ष इति ॥

टी०—प्रमोदं गुणाधिकेष्वित्यादि । सम्यक्त्वादिगुणाधिकेषु यतिषु प्रमोदं-प्रहर्षं भावयेत् । प्रमोदव्याचिख्यासया प्रमोदो नामेत्याद्याह । नामशब्दो वाक्यालङ्कारार्थे । अलङ्कारः सुभगता श्रोत्रसुखत्वं, शिक्षानिसर्गावदातो लोकाराधनसमर्थो विनयः सामान्येन । तद्विशेषस्तु विनीयते येन कर्म-विलयमापद्यते स विनयो ज्ञानदर्शनचरणोपचारभेदः क्रिया-विशेषस्तस्य प्रयोगः-अनुष्ठानम् । विनयार्हेषु वन्दनं-प्रकर्षमनोवाक्कायैर्विशेषत उत्तमाङ्गेन वन्द-नार्हाणां पादस्पर्शनम् । स्तुतिः-स्तुत्यानां सद्भूतगुणोत्कीर्तनम् । वर्णवादो-यशःप्रख्यापनं वर्णो-यशस्तत्प्रथनम् । अवदातचरिताः खलु मुनयोऽमी यथोदितप्रमोक्षानुगुणचेष्टाभाग्याहिन इत्यादिकः । वैयावृत्त्यं-व्यावृतता बालग्लानगुरूपत्रासिशैक्षप्राघूर्णकानुद्दिश्याऽपरान् वा मुनी-नागमविहितभक्तपानवस्त्रपात्रप्रतिश्रयदण्डकाद्युपकरणमार्गणानयनप्रदानलक्षणो व्यापारस्त-स्यानुष्ठानं करणम् । आदिशब्दाद देशकालापेक्षः साधूद्देशेनानेकप्रकारः पूजाहेतुः संगृ-हीतः । सम्यक्त्वं-तत्त्वार्थश्रद्धानलक्षणम् । ज्ञानं-हिताहितप्राप्तिपरिहारविषयो बोधः । चारित्रं-मूलोत्तरगुणभेदम् । तपो-बाह्याभ्यन्तरविधानम् । एभिः सम्यक्त्वादिभिरधि-काः साधवो गृहस्थादिभ्यस्तेषु परेणात्मना उभा(भया)भ्यां वा कृता या वन्दनादिलक्षणा पूजा तया जनित-उत्पादितः सर्वेन्द्रियाभिव्यक्त इति । सर्वग्रहणं सम्भवापेक्षम् । साधु-गुणोत्कीर्तनसमये विततकर्णदानविकसदुत्फुल्ललोचनाविर्भूतरोमाञ्चकञ्चुकतादिलिङ्गप्रकटितो मनःप्रहर्षः प्रमोद इत्याख्यायते ॥

कारुण्य-भावना

भा०—कारुण्यं क्लिश्यमानेषु । कारुण्यमनुकम्पा दीनानुग्रह इत्य-नर्थान्तरम् ।

टी०—कारुण्यमित्यादि । करुणा-अनुकम्पा तद्भावः कारुण्यम् । कः पुनरस्य विषय इति क्लिश्यमानेष्वित्याह । कर्तरि लः । क्लिश्यमानेषु-सन्तापमनुभवत्सु । एतदेव प्रपञ्चयति भाष्यकारः—कारुण्यमनुकम्पेत्यादि । अनुकम्पा दीनानुग्रह इति कारुण्यप-

१ 'प्रयोगवन्दन०' इति ग-पाठः । २ 'इत्यर्थः' इति घ-पाठः । ३ 'प्रताप०' इति ग-पाठः, 'ताप०' इति तु क-पाठः ।

र्थायः । करुणा घृणाऽनुकम्पा दया कृपा दीनानुग्रह इत्यनर्थान्तरम् । दीना-दुःखिताः शारीरमानसैर्दुःखैरभिभूताः ॥

भा०—तन्महामोहाभिभूतेषु मतिश्रुतविभङ्गाज्ञानपरिगतेषु विषयतर्षाग्निना दन्दह्यमानमानसेषु हिताहितप्राप्तिपरिहारविपरीतप्रवृत्तिषु विविधदुःखार्दितेषु दीनकृपणानाथबालमोमुहवृद्धेषु सत्त्वेषु भावयेत्। तथा हि भावयन् हितोपदेशादिभिस्ताननुगृह्णातीति ॥

टी०—तदिति कारुण्यमभिसम्बध्यते । तत् कारुण्यं भावयेत् स्वक्षेत्रे । किं पुनः स्वक्षेत्रमित्याह—महामोहो—मिथ्यादर्शनानन्तानुबन्ध्यादिस्तेनाभिभूतेषु—वशीकृतेषु । महामोहाभिभवादेव च मतिश्रुतविभङ्गाज्ञानपरिगतेष्वित्याह । मतिश्रुतविभङ्गाज्ञानान्युक्तलक्षणानि प्रथमे, तत्परिगतेषु—तदाकारपरिणतिषु । विषयाः—शब्दादयस्तेषु तर्षो—विषयतर्षः तृट् पिपासेति, तर्ष एवाग्निः परितापकारित्वात् तेन भृशं दन्दह्यमानचित्तेषु। न खलु विषयासेविनः कदाचित् तृप्यन्ति स्थविरावस्थायामपि काङ्क्षामोहग्रहग्रस्ता बह्वीर्विडम्बनाः समासादयन्ति। तथा चाग्निशिखालीढवपुषोऽशर्म सन्ततम् । एवं मूढा विषयतृष्णाज्वलनपरिपच्यमानचेतसो दिवानिशं न सुखमात्रामप्यनुभवन्ति । तेषु चैवंविधावस्थेषु । हिताहितेत्यादि । हितं—मुक्तिसाधनं अहितं—संसारसाधनं तयोः प्राप्तिपरिहारौ तत्र विपरीता प्रवृत्तिर्येषां ते, हितं परिहरन्ति अहितमासेवन्ते, तेषु, विविधं—नानाप्रकारं ऐहिकामुष्मिकभेदं शरीरमनोविषयं दुःखं तेनार्दितेषु—हिंस्यमानेषु—दुःख्यमानेषु। साबाधशून्यमनस्कता दैन्यम्। तत्सम्बन्धाद् दीनाः-अतिहीनयाच्वाः। प्रणिपातः कार्पण्यं तद्युक्ताः कृपणाः। अनाथास्तूत्सन्नान्वया अबान्धवाः केनचिदपरिगृहीताः स्वयं वाऽसमर्थाः । बालाः—शिशवः मोमुहाः—काहलाः वृद्धाः—सप्ततिसंवत्सरसंख्यामतीत्य वर्तमानाः परिग्लानेन्द्रियाः परिपेलवस्मृतयः । केचित् पुनर्बालावस्थां प्राप्ताः, तदेतेषु सत्त्वेषु—करुणाक्षेत्रेषु कारुण्यमविच्छिन्नं भावयेत् । तथा हीत्यादि। तथा च भावयन् उक्तेन प्रकारेण। हितोपदेशादिभिरिति। हितोपदेशो—मुक्तिसाधनसम्बन्धः । आदिशब्दाद् देशकालापेक्षान्नपानप्रतिश्रयकर्पटभेषजैरपिताननुगृह्णातीति ॥

माध्यस्थ्यभावना

भा०—माध्यस्थ्यमविनेयेषु । माध्यस्थ्यमौदासीन्यमुपेक्षेत्यनर्थान्तरम् ॥

टी०—माध्यस्थ्यमविनेयेष्वित्यादि । रागद्वेषयोरन्तरालं—मध्यं तत्र स्थितो मध्यस्थः अरागद्वेषवृत्तिरिति तद्भावो माध्यस्थ्यं तच्च भावयेत् । क्व ? अविनेयेष्वित्याह ।

१ 'ग्रस्तास्तावत्' इति ङ-पाठः ।

अनेकेनाप्युपायेनाबोधयितुमशक्याः प्रकृष्टमिथ्यादर्शनाज्ञानोदयवर्तिनो रक्तद्विष्टपूर्वव्युद्ग्राहिताश्चाविनेयास्तेषु । माध्यस्थ्यं औदासीन्यं इत्यादि पर्यायकथनेन व्याख्यां तनोति । अरक्तद्विष्ट-उदासीनः तद्भाव औदासीन्यम् । उपेक्षेति ईक्षणम्-आलोचनं सामीप्येनारक्तद्विष्टतया । अरागवृत्तिता अद्वेषवृत्तिता वोपेक्षेत्येकार्थाभिधायिनः शब्दाः ॥

**भा०**—अविनेया नाम मृत्पिण्डकाष्ठकुड्यभूता ग्रहणधारणविज्ञानेहाऽपोहवियुक्ता महामोहाभिभूता दुष्टावग्राहिताश्च । तेषु माध्यस्थ्यं भावयेत् । नहि तत्र वक्तुर्हितोपदेशसाफल्यं भवति ॥ ६ ॥ किञ्चान्यत्—

**टी०**—अविनेया नामेत्यादि । विनीयन्ते-शिक्षां ग्राहयितुं शक्यन्त इति विनेयाः, न विनेया अविनेयाः, अशिक्षार्हा इत्यर्थः । नामशब्दो वाक्यसौभाग्यप्रयोजनः । मृत्पिण्डेत्यादिशब्द उपमार्थः । मृत्पिण्डकाष्ठकुड्यानीव मृत्पिण्डकाष्ठकुड्यभूताः, यथा मृत्पिण्डादयो निश्चेतनाः श्रोत्रादीन्द्रियव्यापारशून्या नोपदिष्टमपि हितं समाददते तद्वत् ये ते तथोक्ताः । एतदेव स्पष्टतरं विवृणोति-ग्रहणधारणेत्यादिना । श्रवणेन्द्रियावधानेनोपदेशग्रहणं प्रतिपत्तिः । गृहीतस्याविस्मरणं धारणम् । एवमेतदिति निश्चितप्रत्ययो विज्ञानम् । ईहा तत्त्वान्वेषिणी जिज्ञासा । विचारणोत्तरकालं अपोहः सदोषपक्षत्यागः । एभिर्ग्रहणादिभिर्वियुक्ताः । महामोहो-मिथ्यादर्शनं तेनाक्रान्ता अभिगृहीतमिथ्यादृष्टयः । दुष्टावग्राहिताश्चेति । दुष्टास्तु रागादिदोषभाजः तैश्च पक्षानुरागात् परपक्षद्वेषाचान्यथावस्तुग्राहिताः । अवग्राहिता इति विप्रलब्धाः, ते च आजीवितावधि[1] स्वमसद्ग्रहं न मुञ्चन्ति । तेषु च माध्यस्थ्यं भावयेत् । पूर्वकेषु त्ववगतेरभावाद् विफल उपदेशः । किं पुनः कारणमेतेषु माध्यस्थ्यं भावनीयम् ? । नहि तत्रेत्यादि । नैव तत्र मृत्पिण्डादितुल्ये दुष्टावग्राहिते च वक्तुः-कथयितुर्हितोपदेशदानसाफल्यं भवति । निष्फलं चोपदेशं तीर्थकृतोऽपि नाद्रियन्ते, यथाऽऽह—"सर्वत्र[2] देशविरति"मित्यादि । एवं च भावयतो मैत्र्यादिव्रतानां स्थैर्यं भवतीति ॥ ६ ॥

अयमपरोऽभिनवाकुशलकर्मादाननिवृत्तिपरेण महाव्रतधारिणा क्रियाविशेषः प्रणिधेयो भावनाप्रस्ताव इत्यादर्शयति । किञ्चान्यदित्यनेन सम्बन्धयति ।

अन्यदपीदं भावनीयमित्याह—

## सूत्रम्—जगत्कायस्वभावौ च संवेगवैराग्यार्थम् ॥ ७-७ ॥

**टी०**—तांस्तान् देव मानुष-तिर्यङ् नारकपर्यायानत्यर्थं गच्छतीति जगत्-प्राणिजातमुच्यते, धर्मादिद्रव्यसन्निवेशो वा, चीयत इति कायः-शरीरम्, जगच्च कायश्च जगत्कायौ तयोः

---

१ 'वधेः' इति ग-पाठः । २ 'सव्वं च देसविरइं' इति आवश्यक-निर्युक्तौ ( गा० ५६४ ) ।

स्वभावौ तौ भावयेत् । तत्र जगत्स्वभावस्तावत् प्रियविप्रयोगाप्रियसम्प्रयोगेप्सितालाभदारिद्र्य-

जगत्स्वभावः

दौर्भाग्यदौर्मनस्यवधबन्धनाभियोगासमाधिदुःखसंवेदनलक्षणः । तथा "माता भूत्वा दुहिता" ( प्रशमरतौ, श्लो० १५६ ) इत्यादि । तथा सर्वस्थानान्यशाश्वतानि संसारिणां संसार इति । धर्मादिद्रव्याणां च परिणामित्वादनन्तपर्यायरूपेण गमनात् तेष्वपि परिणामानित्यतां भावयेत् । कायस्वभावोऽपि पितृमात्रोरोजःशुक्रमुभयमेकीभूतं गर्भजानां प्राणिनां शरीरतया परिणमत इत्यादिलक्षणः ।

कायस्वभावः

सम्मूर्च्छनोपपातजन्मनां तूत्पत्तिदेशावगाढस्कन्धादाननिर्माणानि वपूंषि भवन्त्यशुभपरिणामभाञ्जि नानाकाराणि परिशटनोपचितिधर्मकत्वाद् विनश्वराणीत्येवंलक्षणः कायस्वभावः । तावेतौ जगत्कायस्वभावौ किमर्थं भावनीयावित्याह—संवेगवैराग्यार्थम् । यथासंख्याकेन सम्बन्धः । जगत्स्वभावं भावयेत् संवेगार्थं, कायस्वभावं वैराग्यार्थमिति । संवेगाय वैराग्याय च ( संवेग )वैराग्यार्थम्, 'चतुर्थी तदर्थार्थ०' ( पा० अ० २, पा० १, सू० ३६ ) इति समासः । तत्र संवेगः संसारभीरुत्वादिलक्षणः । वैराग्यं शरीरनिष्प्रतिकर्मतादिलक्षणम् ।

सूत्रितमेवार्थं भाष्येण स्पष्टयन्नाह—

सूत्रगतशब्दानां व्याख्या

**भा०—जगत्कायस्वभावौ च भावयेत् संवेगवैराग्यार्थम् । तत्र जगत्स्वभावो द्रव्याणामनाद्यादिमत्परिणामयुक्ताः प्रादुर्भावतिरोभावस्थित्यन्यतानुग्रहविनाशाः । कायस्वभावोऽनित्यता दुःखहेतुत्वं निःसारताऽशुचित्वमिति ॥ एवं ह्यस्य भावयतः संवेगो वैराग्यं च भवति । तत्र संवेगो नाम संसारभीरुत्वमारम्भपरिग्रहेषु दोषदर्शनादरतिः धर्मे बहुमानो धार्मिकेषु च ।**

टी०—जगत्कायस्वभावौ चेत्यादिना । जगत्कायावुक्तलक्षणौ, तत्स्वभावौ तु भाष्यकृता स्वयमेव व्याख्यातौ । संवेगवैराग्ये(ग्यार्थं) च भावयेदित्येतावदनेन भाष्येण विधीयते । तत्र जगत्स्वभाव इत्यादि । तत्रेति जगत्कायस्वभावयोर्जगत्स्वभावस्तावदुच्यते । जगत् जीवाजीवद्रव्याणि तत्स्वभावाः—परिणामाः तेषामेव जगच्छब्दवाच्यानां द्रव्याणां—द्रव्यपुद्गलादीनां अनाद्यादिमत्परिणामयुक्ता इति । कश्चिदनाद्यः परिणामो जीवस्यासंख्येयप्रदेशत्वचेतनावत्त्वज्ञानवत्त्वादिः, कश्चिदादिमान् देवतादिः । पुद्गलद्रव्यस्यापि मूर्तिमत्त्वरूपादिमत्त्वादिरनादिः, आदिमान् घटपटादिलक्षणः । धर्माधर्मयोर्लोकाकाशव्यापित्वादिरनादिः आदिमान् गतिस्थितिपरिणतद्रव्यजनितः । लोकाकाशस्यामूर्तत्वासंख्येयप्रदेशत्वादिरनादिः, आदिमानवगाहकद्रव्यापेक्षः । एभिर्युक्ताः प्रादुर्भावादयो जगत्स्वभावाः । अनाद्यादिमत्परिणा-

१ 'शेषोपायो' इति आरम्भकः 'क्रियाविशेषस्तस्य' इत्यन्तकः क-ख-पाठः तु प्रक्षिप्त इति स्पष्टम् ।

मग्रहणेन प्रादुर्भावादयो विशेष्यन्ते । अनादिना परिणामेन विशिष्टो यः प्रादुर्भावः आत्मलाभो वस्तुनस्तथा सन्निवेशः, आदिमत्परिणामविशिष्टश्च प्रादुर्भावः पर्यायान्तरोत्पाद इति । तिरोभावस्तु सन्तानरूपेणावस्थितो वैस्रसिको विनाश एवादिलक्षणः, स्थितिर्ध्रौव्यमनादिपरिणामः । अन्यता सर्वद्रव्याणां परस्परं भेदपरिणामोऽनादिः, अनुग्रहः परस्परोपकारादिलक्षणो जीवानां, विनाशस्तु प्रायोगिक आदिमान् परिणामः । एवमेष जगत्स्वभावः पुनः पुनरालोच्यमानः संवेगाय सम्पद्यते । कथं पुनर्जगत्स्वभावचिन्ता संवेगानुगुणेति ?[1] । उच्यते—जगत्स्वभावं चेतनाचेतनत्वेन विभज्य चेतनानां सदसच्चेष्टितफलं विभज्यते, तत्सुपरिनिश्चितमतिरहिंसादिचेष्टितानामिहपरलोकोत्पन्नैकान्तहितानुष्ठायिनां तत्फलावाप्तिं च मनुजसुरनारकेषु तिर्यक्षु च यथावद् विचिन्त्य सारासारतया मुक्तिमार्गप्रवणो भवति । अज्ञानहिंसादिचेष्टितानां च संसारानन्तफलदोषदर्शनात् तदुच्छेदार्थमहर्निशं[2] संवेगमेव भावयति । अचेतनानामपि नित्यानित्यमूर्तामूर्तस्पर्शगन्धरूपशब्दसंस्थानादिपरिणामशुभाशुभकल्पनानामनाद्यसन्तानैकस्वाभाव्यमनुपश्यन्नरक्तमूढद्विष्टो जगदन्यायन्यायचेष्टितानि भीतिमन्त्यभयभूतानि च भावयन् संवेगभाग् भवतीति ॥ कायस्वभाव इत्यादि । कायस्वभावो जन्मप्रभृत्यनित्यता—विनश्वरत्वं बालकुमारयौवनमध्यमस्थविरावस्थाः पूर्वपूर्वावस्थोपमर्देनोत्तरोत्तरावस्थास्वरूपं प्रतिलभन्ते, अतः परिणामानित्यतां शरीरस्य भावयेद् यावदायुषः परिसमाप्तिः । ततः क्रोधेनाग्निना वा सारमेयशकुन्तसम्पातेन वा वातातपशोषणेन वा विघटितः शरीराकारपरिणतपुद्गलप्रबन्धः सद्यो द्व्यणुकादिस्कन्धभेदेन परमाणुपर्यवसानेन विभक्तोऽनित्य इति व्यपदिश्यते । सुचिरमपि चैष लालितः पालितः[3] कुङ्कुमागुरुकर्पूरकस्तूरिकानुलेपनादिमृष्टान्नपानवसनाच्छादनादिना चाकाण्ड एव ध्वंसते । भावयतश्चैवं शरीरे निर्ममता भवति । ततश्च संवेगवैराग्ये इति । अपरः कायस्वभावाद् दुःखहेतुत्वं बाधालक्षणं दुःखम् । सा च बाधा शरीरस्वान्ताश्रया । ततश्च यावच्छरीरं तावदपि दुःखोपभोगस्तदाश्रयो न व्यवच्छिद्यते । पुद्गलात्मप्रदेशानामन्योन्यानुगतौ क्षीरवारिणोरिवाविभागे सति आत्मनः पुद्गलनिमित्तो दुःखानुभवः । ततश्च दुःखहेतुतां भावयन्नात्यन्तिकोच्छेदायास्य दग्धशरीरकस्यायतते । तथाऽन्या निःसारता कायस्वभावः त्वग्मांसादिपटलभेदेनोद्वेष्ट्यमानेऽप्यमुष्मिन् शरीरके रम्भागर्भ इव मेदोऽस्थिपञ्जरान्त्रजललसिकामूत्रशकृत्कफपित्तमज्जादिसञ्चये न काचित् सारमात्रोपलभ्यते प्रधानतासारकनकरत्नादिवत् तदभावादयं निःसारो लेभेऽणुकाष्ठवत् कायकलिरकालभङ्गुर इत्येवं भावयतः शरीरेऽभिषङ्गो न भवतीति । तथाऽशुचित्वं कायस्वभावः । अशुचित्वं लोकप्रतीतं, तच्च काय एव भूयसा दृश्यते, गर्भव्युत्क्रान्तिमानुषशरीरस्य तावन्मौलं कारणमसृग्रेतसी । ततस्तयोरेव कललार्बुदमांसपेश्यादिपरिणामः

---

1 'पुनर्जीवस्वभाव' इति क-पाठः । २ 'दर्शी तद्' इति ङ-पाठः । ३ 'चोपलालितः' इति ग-पाठः ।

कालान्तरेण शिरःपाण्याद्यवयवाभिव्यक्तिर्जनन्यभ्यवहृताहारनिस्यन्दप्रवाहपूरितरसहरणीकुल्यया परिप्रापिताशेपरसास्वादध्मायमानपोपः पुरीपमध्यासीनः पूर्णावयवः परिपाकवशान्मातृयोनिविवरनिःसृतः स्तन्यपीठिकाहारासेवनोपचीयमानरुधिरमांसकीकसपुरीपप्रस्रवणसंघातः पश्चादागन्तुकशल्यशलाकाग्रभिन्नः श्लेष्मादिधातुप्रकोपोद्भूतश्वयथुः गण्डादिसंस्पर्शाद् वा क्षरदसृग्लवलसिकापूयपटलप्रायपरिणामः सर्वावस्थास्वशुचिरेव काय इत्येवं भावयेत् ॥ एवं च भावयतः संवेगो वैराग्यं च भवतीति संवेगवैराग्यस्वरूपकथनायाह—**तत्र संवेगो नामे**त्यादि । तत्रेति तयोः संवेगवैराग्ययोः संवेगस्तावदित्थंलक्षणः । नामशब्दो वाक्यालङ्कारार्थम् । भीरुः—भीतिशीलः संसारो—नारकतिर्यङ्मनुष्यामरभवप्रपञ्चः सकलदुःखमूलः संसाराद् भीरुः संसारभीरुस्तद्भावः संसारभीरुत्वम् । उद्विजते हि प्रेक्षापूर्वकारी दुःखात् । न जातुचित् प्रवणो भवति । आरम्भाः सूनास्थानानि प्राण्युपघातकराणि व्यापादनसङ्कल्पपरितापजननप्राणापहारलक्षणाः सर्व एवारम्भाः, चेतनाचेतनवस्तुस्पर्शिनो मूर्च्छाविशेपाः परिग्रहाः । तेष्वारम्भपरिग्रहेषु दोषदर्शनादरतिः ऐहिकामुष्मिकप्रत्यवायदोषाः तद्दर्शनात् तदुपलब्धेर्दुःखमुद्वेगोऽप्रीतिः—अरतिः तद्वतश्च धर्मे बहुमानो धार्मिकेषु च धर्मः क्षमादिदशलक्षणस्तदासेविनो धार्मिकास्तेषु बहुमानो धर्मे च । चकारः समुच्चयार्थः ।

बहुमानशब्दार्थनिरूपणायाह—

**भा०—धर्मश्रवणे धार्मिकदर्शने च मनःप्रसाद उत्तरोत्तरगुणप्रतिपत्तौ च श्रद्धेति ॥**

**टी०—धर्मश्रवण** इत्यादि । प्राक् तावद् धर्मजिज्ञासा ततस्तदभिज्ञप्रच्छनं पश्चाच्छ्रवणम्—आदरेणाकर्णनं ततः स्मरणानुष्ठाने एप खलु धर्मविपयो बहुमानः । आदरः—चित्तप्रसादः । **धार्मिकदर्शने चे**ति । धार्मिकाः—सम्यक्त्वज्ञानक्रियानुष्ठायिनः साधवोऽगारिणश्च तद्दर्शने च बहुमानः—चित्तप्रमोदपूर्वकोऽभ्युत्थानवन्दनासनदानभक्तपानवस्त्रपात्रोपकरणप्रदानानुव्रजनलक्षणो भक्तिविशेषश्चेतःप्रसादः संवेगस्याभिव्यञ्जकः, **उत्तरोत्तरगुणप्रतिपत्तौ च श्रद्धे**ति । संवेगमूलगुणास्तावत् सम्यक्त्वादयोऽनगारागारिणोरवश्यंतया सन्ति तेषु सत्सु मौलेषु गुणेषूत्तरोत्तरा ये गुणाः प्रकारवत्तया क्रमेणावस्थिताः पिण्डोपधिशय्याविशुद्धिलक्षणाः समितिभावनातपःप्रतिमाभिग्रहादयस्तेषूत्तरोत्तरेषु स्वशक्त्यपेक्षा प्रतिपत्तिरभ्युपगमोऽनुष्ठानं तद्विषया श्रद्धाऽभिलाष इच्छेत्यनर्थान्तरम् । एवं तावत्संवेगः ॥

---

१ 'पीठका' इति ग-पाठः । २ 'साकल्यदुःख' इति ग-पाठः । ३ 'प्रश्न' इति ग-पाठ. । ४ 'वच्छिन्नाः' इति ङ-पाठः ।

भा०—वैराग्यं नाम शरीरभोगसंसारनिर्वेदोपशान्तस्य बाह्याभ्यन्तरेषूपधिष्वनभिष्वङ्ग इति ॥ ७ ॥

टी०—वैराग्यं नामेत्यादि । विरागभावो वैराग्यम् । नामेत्यलङ्कारार्थम् । शरीरस्य भोगोऽभ्यञ्जनोद्वर्तनस्नानाङ्गरागधूपपुष्पमाल्यालङ्कारविचित्रनिवसनेष्टाहारादिलक्षणः । संसारश्चातुर्गतिकस्ताभ्यां शरीरभोगसंसाराभ्यां निर्वेदो—निर्विण्णता शरीरभोगसंसारविषयवैमुख्यमुद्वेगस्तस्मान्निर्वेदाल्लब्धोपशमस्य—प्रतनुकषायस्य बहिर्भवो बाह्यः वास्तुक्षेत्रादिर्दशविधः पञ्चमव्रते वक्ष्यमाणो रागद्वेषादिराभ्यन्तरश्चतुर्दशभेदस्तत्रैव वक्ष्यते । तेषूपधिष्वनभिष्वङ्गो मूर्च्छा लोभो गार्ध्यं तदाकारः परिणाम आत्मनः । नाभिष्वङ्गः—अनभिष्वङ्गः निरपेक्षता तेषु गार्ध्यमिति ॥ ७ ॥

भा०—अत्राह—उक्तं भवता (अ० ७, सू० १)—हिंसादिभ्यो विरतिर्व्रतमिति । तत्र का हिंसा नामेति । अत्रोच्यते ।

टी०—अत्राहेत्यादिना सम्बन्धमाचष्टे । अनवधारितहिंसादिलक्षणस्य निवृत्तिर्व्रतमित्यभिहितं भवताऽध्यायादौ, तत्र नावगच्छामः किंलक्षणा हिंसादयो येभ्यो विरतिर्व्रतमित्यजानानस्य प्रश्नः—तत्र का हिंसा नामेति । नहि लक्ष्यमुपरतलक्षणव्यापारमभिधित्सितस्यार्थस्य जातुचिदामोदायेति । तत्र—तेषु पञ्चसु हिंसादिषु का हिंसा किंलक्षणेति हिंसैव तावत् पृच्छ्यते । तल्लक्षणवैपरीत्याच्च अहिंसा सुज्ञानैव । न च भिन्नजातीयानां पदार्थानां युगपल्लक्षणमभिधातुं शक्यम् । अतः क्रमेण निर्देशे सति हिंसामेव तावद् वाचकमुख्यो निरूपयितुमाह—अत्रोच्यत इति । अत्र—हिंसालक्षणप्रश्ने भण्यते तल्लक्षणम्—

## सूत्रम्—प्रमत्तयोगात् प्राणव्यपरोपणं हिंसा ॥ ७–८ ॥

टी०—प्रमाद्यतीति प्रमत्तः कषायविकथेन्द्रियनिद्रासवैर्निमित्तभूतैः । तत्र कषायाः षोडशानन्तानुबन्धादिभेदास्तत्परिणत आत्मा प्रमत्तः । इन्द्रियाणि स्पर्शनादीनि तद्द्वारकौ रागद्वेषौ । समासादिततत्परिणतिरात्मा प्रमत्तः । स्पर्शनादिनिमित्तभेदात् कषाया एव प्रमादहेतुत्वेनोपन्यस्ताः । प्रमादश्चात्मनः परिणामः कषायादिनिमित्तः, दर्शनावरणकर्मोदयात् स्वापो निद्रा पञ्चप्रकारा तत्परिणामाच्च पीनहृत्पूरपित्तोदयाकुलितान्तःकरणः पुरुषवदन्धो मूढः करचरणविक्षेपशरीरपर्यवसानक्रियाः कुर्वन् प्रमत्तः ( आसवो ) मद्यं मधुवारशीधुमदिरादि तदभ्यवहारे सत्यागतमूर्च्छ इव विह्वलतामुपेतः प्रमत्तोऽभिधीयते । विकथा स्त्रीभक्तजनपदराजवृत्तान्तप्रतिबद्धा । रागद्वेषाविष्टचेताः स्त्र्यादिविकथापरिणतः प्रमत्तस्य योगः । कर्तरि षष्ठी । योगपरि-

१ ' परितः ' इति ङ-पाठः ।

णामं विशिनष्टि–योगो–व्यापारश्चेष्टा, प्रमत्तस्यात्मनश्चेष्टेत्यर्थः । प्रमत्तयोगादिति पञ्चमी तृतीयार्थे द्रष्टव्या । प्रमत्तव्यापारेण यत् प्राणव्यपरोपणं । अथवा पञ्चमीविधाने "[1]ल्यब्लोपे कर्मण्युपसंख्यानं" प्रासादमारुह्य प्रेक्षते प्रासादात् प्रेक्षत इति । एवं प्रमत्तयोगं प्राप्य प्राणव्यपरोपणं कुर्वन् आत्मा हिंसां निर्वर्तयति । प्रमत्तयोगात् प्राणव्यपरोपणमात्रैव हिंसां निर्वर्तत इत्यर्थः । अथवा अधिकरणे चोपसंख्यानम् । आसने उपविश्य प्रेक्षते आसनात् प्रेक्षते, एवं प्रमत्तं प्रमादः तत्र प्रमादे स्थित्वा प्राणव्यपरोपणमाचरन्नात्मा हिंसां निर्वर्तयतीति पञ्चमी प्रयुज्यते 'गत्यर्थाकर्मक०' (पा०अ० ३,पा०४,सू०७२) इत्यत्र 'भावकर्मणोः' (पा० अ० १, पा० ३, सू० १३) इत्यनुवर्तते तत्र भावे क्तप्रत्ययः । प्रमत्तं प्रमादस्तेन च प्रमादेन योगः सम्बन्धस्तदाकारपरिणतिरात्मनः । ततश्च गुणहेतावस्त्रीलिङ्गे विभाषया पञ्चमीविभक्तिर्भवति जाड्याद् बद्ध इति यथा, एवं प्रमत्तयोगात्—प्रमादसम्बन्धात् प्राणव्यपरोपणमिति । प्राणाः पञ्चेन्द्रियाणि आयुष्कर्म कायवाङ्मनः प्राणापानौ चेति दशधा द्रव्यपरिणामलक्षणाः पृथिव्यादिकायेषु यथासम्भवमवस्थितास्तेषां व्यपरोपणम्–अपनयनम्–आत्मनः पृथक्करणम् । यया वा आत्मपरिणतिक्रियया तद्व्यपरोपणं निष्पद्यते सा क्रिया कर्तृसमवायिनी हिंसेत्युच्यते । एनमेव च सूत्रार्थं भाष्येण स्पष्टयन्नाह—

पञ्चमीविभक्तेर्विचारः

**भा०—प्रमत्तो यः कायवाङ्मनोयोगैः प्राणव्यपरोपणं करोति सा हिंसा । हिंसा मारणं प्राणातिपातः प्राणवधः देहान्तरसंक्रामणं प्राणव्यपरोपणमित्यनर्थान्तरम् ॥ ८ ॥**

टी०—प्रमत्तो य इत्यादिना । प्रमत्त इति प्रमत्त एव हिंसको नाप्रमत्त इति प्रतिपादयति । प्रमत्तो ह्याप्तप्रणीतागमनिरपेक्षो दूरोत्सारितपारमर्षसूत्रोद्देशः स्वच्छन्दप्रभावितकायादिवृत्तिरज्ञानबहुलः प्राणिप्राणापहारमवश्यंतया करोति । द्रव्यभावभेदद्वयानुपातिनी च हिंसा । तत्र कदाचिद् द्रव्यतः प्राणातिपातः न भावतः, स्वपरिणामनिमित्ते च हिंसाहिंसे, परमार्थतः परिणामो मलीमसोऽवदातश्च । परस्तु कश्चिन्निमित्तमाश्रित्य कारणीभवति हिंसायाः । स च द्रव्यतो व्यापन्नो न व्यापन्न इति नातीवोपयोगिनी चिन्ता । तत्र यदा ज्ञानवानभ्युपेतजीवस्वतत्त्वः श्राद्धः कर्मक्षपणायैव चरणसम्पदा प्रवृत्तः काञ्चिद्धर्म्यां क्रियामधितिष्ठन् प्रवचनमातृभिरनुगृहीतः पादन्यासमार्गानलोकितपिपीलिकादिसत्त्वः समुत्क्षिप्तं चरणमाक्षेप्तुमसमर्थः पिपीलिकादेरुपरि पादं न्यस्यति उत्क्रान्तप्राणश्च प्राणी भवति तदास्य द्रव्यप्राणव्यपरोपणमात्रादत्यन्तशुद्धाशयस्य वाक्यपरिजिहीर्षाविमलचेतसो नास्ति हिंसकत्वम् । कदाचिद् भावतः प्राणातिपातः, न द्रव्यतः । कषायादिप्रमादवशवर्तिनः खलु मृगयोराकृष्टकठिनकोदण्डस्य शरगोचरवर्तिनमुद्दिश्यैणकं विसर्जितशिलीमुखस्य

द्रव्यहिंसा

1 'ल्यब्लोपे कर्मण्यधिकरणे च' इति कात्यायनवार्तिके (१४७४–१४७५)।

शरपातस्थानादपसृते सारङ्गे चेतसोऽशुद्धत्वादकृतेऽपि प्राणापहारे द्रव्यतोऽप्रध्वस्तेष्वपि प्राणिषु भवत्येव हिंसा, हिंसारूपेण परिणतत्वात् काण्डक्षेपिणः, स्वकृतदृढायुष्यकर्मशेषादपसृतो मृगः पुरुषाकाराच्च, चेतस्तु हन्तुरतिक्लिष्टमेवातो व्यापादकम् । तथा तस्या नवदातभावस्य जिघांसोरुत्क्रान्तजन्तुप्राणकलापस्य भावतो द्रव्यतश्च हिंसेत्येवमुदिते विकल्पत्रये प्रमत्तयोगत्वं, द्वितीयतृतीयविकल्पयोः, अतस्तयोरेव हिंसकत्वं, न प्रथमस्येति । अपरे तु प्रमादमष्टविधं वर्णयन्ति—

भावहिंसा

" अज्ञानं संशयश्चैव, मिथ्याज्ञानं तथैव च ।
रागो द्वेषोऽनवस्थानं, स्मृतेर्धर्मेऽप्यनादरः ॥ १ ॥"—अनु०

अपरे तु ब्रुवते—"अप्रयत्नासमितः प्रमत्तः ।" प्रयत्नो द्विविधः—जीवाजीवपदार्थपरिज्ञानमीर्यादिसमितिपञ्चकं चेति । एतद्विरहितः प्रमत्त उच्यते । सूत्रकारेण प्रमत्तयोगादित्येतदभिदधता सर्वमेवैतत् प्रमत्तलक्षण समग्राहीति । स्यादेतत्, अस्तु तृतीयविकल्पे प्राणातिपातः सम्पूर्णलक्षणत्वात् । मार्यमाणः प्राणी यदि भवति, हन्तुश्च प्राणीति यदि विज्ञानमुपजातं, हन्मीति च यदि वधकचित्तोत्पादः, यदि च व्यापादितः स्यात्, सर्वं चैतदुपपन्नं तृतीये । द्वितीयविकल्पे तु नास्त्येतत् समस्तम्, अतः कथं तत्र हिंसकत्वम् ? । एतदेव च प्राणातिपातलक्षणम् । अपरैं स्पष्टतरं प्रपञ्चितम्—

प्रमत्तस्य लक्षणान्तरम्

" प्राणातिपातः सञ्चिन्त्य, परस्याभ्रान्तमारणं " इति ॥

द्विविधं मारणं सञ्चिन्त्यासञ्चिन्त्य च । सञ्चिन्त्यापि द्विविधं भ्रान्तस्याभ्रान्तस्य च । अभ्रान्तस्यापि द्विविधं आत्मनः परस्य चेति । अतो विशेषणत्रयमुपादीयते । एतदुक्तं भवति—यदि मारयिष्याम्येनमिति संज्ञाय परं मारयति तमेव मारयति नान्यं भ्रमित्वा । इयता प्राणातिपातो भवति । यस्तर्हि संशयितो मारयति प्राणिनं प्राणी स चान्यो वेति, सोऽप्यवश्यमेव निश्चलं लब्ध्वा तत्र प्रहरति योऽस्तु सोऽस्त्विति कृतमेवानेन त्यागचित्त न भवतीति । ततश्च असञ्चिन्त्य यो वधः क्रियते भ्रान्तेन वा आत्मनो वा स न प्राणातिपातः । प्राणश्च वायुः, कायचित्तसंमिश्रितः प्रवर्तते चित्तप्रतिबद्धवृत्तित्वात् तमतिपातयति—विनाशयति जातस्य स्वरससन्निरोधादनागतस्योत्पत्तिं प्रतिबध्नातीति । जीवितेन्द्रियं वा प्राणाः । कायस्यैव च सेन्द्रियस्य तज्जीवितेन्द्रियं व्यपदिश्यते, न त्वन्यस्यात्मनोऽभावात् । न ह्यात्मनः किञ्चित् प्रतिपादकं प्रमाणमस्तीति । अन्यस्त्वाह—

मारणे बौद्धीयः पूर्वपक्षः

१ 'तथाऽन्यस्या-' इति ङ-पाठः । २ ' अपरेण ' इति ङ-पाठः । ३ ' यदा ' इति ङ-पाठः ।

" आयुरूष्माथ विज्ञानं, यदा कायं( याद् ? ) व्रजन्त्यमी ।
अपविद्धस्तदा शेते, यथा काष्ठमचेतनम् ॥ १ ॥ "–अनु०

इति । आर्हताः पुनरबुद्धिपूर्वकमसञ्चिन्त्यापि कृतं प्राणातिपातं प्रतिजानते । अबुद्धिपूर्वादपि प्राणवधात् कर्तुरधर्मो यथाऽग्निस्पर्शाद् दाह इति । तेषां चैवमभ्युपयतां परदारदर्शनस्पर्शने च कामिन इव साधोरवद्यप्रसङ्गः साधुशिरोलुञ्चने, कष्टतपोदेशने, च शास्तुः क्रुद्धस्येवाधर्मप्रसङ्गः । विषूचिकामरणे वाऽन्नदायिनः प्राणवधः, मातृगर्भस्थयोश्चान्योऽन्यदुःखनिमित्तत्वात् पापयोगः, वध्यस्यापि च वधक्रियासम्बन्धादग्निना स्वाश्रयदाहवदधर्मप्रसङ्गः । परेण च कारयतो नाधर्मप्रसङ्गः । न ह्यग्निमन्येन स्पर्शयन् प्रयोजयिता दह्यते । अचेतनानां च काष्ठेष्टकादीनां गृहपाते प्राणिवधात् पापप्रसङ्गः । न च दृष्टान्तमात्रात् स्वपक्षसिद्धिरित्येवमनेकदोषसम्भवान्नाबुद्धिपूर्वकं प्राणातिपातावद्यमस्तीति ॥ अत्रोच्यते जैनैः—प्राणातिपाताद्यवद्येन प्रमत्त एव युज्यते । प्रमत्तश्च नियमेन रागद्वेषमोहवृत्तिः । प्रमादपञ्चके च कषायप्रमादस्य प्राधान्यम् । कषायग्रहणेन मोहनीयकर्मांशो मिथ्यादर्शनमपि संशयिताभिग्रहितादिभेदं पिशुनितं, रागद्वेषौ च विकथेन्द्रियास्रवप्रमादेष्वप्यन्वयिनौ । निद्राप्रमादः पञ्चविधोऽपि दर्शनावरणकर्मोदयादज्ञानस्वभावः, तदाकुलितचित्तो मूढ इत्युच्यते । रागद्वेषमोहाश्चात्मनः परिणामविशेषाः प्राणातिपाताद्यवद्यहेतवः सर्वैर्मोक्षवादिभिरविगानेनाभ्युपेयन्ते । सिद्धान्तविहितविधिना च परित्यागाकारणं शरीरादेर्ममत्वीकृतस्याविरतिः, अनिवृत्तिरात्मनः परिणतिविशेषः । साऽपि प्राणातिपातावद्यहेतुतया निर्दिष्टा भगवता भगवत्यादिषु । अतीतकालपरिमुक्तानि हि शरीरादीनि पुद्गलरूपत्वात् समासादितपरिणामान्तराणि तदवस्थानि वा यावदपि योगकरणक्रमेण त्यज्यन्ते भावतस्तावदपि भल्लितोमरकार्णिकाधनुर्जीवास्त्रायुधशरवाजकीचकशलाकाद्याकारेण परिणतानि प्राणिनां परितापमवद्रावणं वा विदधति सन्ति पूर्वकस्य कर्तुरवद्येन योगमापादयन्ति । प्रतीतं चैतल्लोके—यो यस्य परिग्रहे वर्तमानः परमाक्रोशति हन्ति व्यापादयति वा तत्र परिग्रहीतुर्दोषस्तमपकारिणमपरित्यजतः ॥ न चानयैव युक्त्याऽवद्यक्षयहेतवः शरीरादिपुद्गलाः पुण्यहेतवो वा पूर्वकस्य कर्तुः पात्रचीवरदण्डकप्रतिश्रयाहारपरिणत्या तपस्विनामुपकारकत्वात् प्रसज्यन्ते, नैतदेवमवद्यमविरतिहेतुकम् । निर्जरा तु विरतिहेतुकैव । पुण्यं च विरतिहेतुकमेव भूयसा । नहि पापास्रवादनिवृत्तः पुण्येन कर्मनिर्जरणेन वा युज्यत इति । एषाऽप्यविरतिर्मोहमनेकभेदमजहती प्रमादमेवास्कन्दति ॥

हिंसालक्षणे बौद्धमतखण्डनम्

प्रमत्तयोगाच्च प्राणातिपाताद्यवद्यमिति व्यवस्थिते यदुच्यते परेण—असञ्चिन्त्य वा भ्रान्त्या वा मरणं नावद्यहेतुकमिति, अत्र प्रतिविधीयते—असञ्चिन्त्य कुर्वतो यद्यवद्यासम्भवस्ततो मिथ्यादृष्टेरभावः सुगतशिष्याणाम् । यस्मान्न कश्चिन्मिथ्या प्रतिपद्यते प्रेक्षापूर्वकारी मिथ्येति

१ 'दग्धेः स्वा०' इति ग-पाठः ।

सञ्चिन्त्य। अथैवं मन्येथास्तेषामवद्येन योगो मिथ्याभिनिवेशात् समस्ति, एवं तर्हि रज्जु-बुद्ध्या दन्दशूकं कल्पयतः कथं न हिंसा ?, अथोत्तरकालभाविनी प्राप्ततत्त्वज्ञानस्य संचेतना स्यान्मिथ्यादर्शनमेतत् तदिति, तुल्यमेव तत्सर्पच्छेदेऽपीति। अथ संशयहेतुत्वान्मिथ्यादर्श-नमवद्यकारणं तर्हि निश्चितधियः सांख्यादेरिदमेव तत्त्वमिति नावद्यं स्यात्। संसारमोचक-गलकर्तकयाज्ञिकप्रभृतीनां[1] च प्राणिवधकारिणां धर्म इत्येवं संचेतयतामधर्मोऽयमित्येवं वा संचेतयतां नावद्यं स्यात्, अन्याभिसन्धित्वात्। अथैवं मन्येथाः-संचेतयन्त्येव ते प्राणिनो वयं हन्म इति, सत्यमेव तत्, किन्तु नैवं चित्तोत्पादो हन्यमानेष्वधर्मो भवतीति। संविद्रते च स्फुटमेवं सौगताः-प्रमादारम्भयोरवश्यंभावी प्राणवध इति। तथा बुद्धस्य ये शोणितमाकर्ष-यन्ति वपुषः सुगतोऽयमित्येवं विज्ञाय तेषामवीचिनरकगतिकारणमानन्तर्यकमबुद्धेरबुद्धित्वादेव न स्यात्, इष्यते चानन्तर्यकं, अथ बुद्धोऽयमित्येवंविधबुद्धेरभावेऽपि संशयितस्याश्रद्दधतश्चासंचे-तयतो भवेदानन्तर्यकम्, एवं सति मायासूनवीयानामप्यवद्येन योगः स्यात्। यतस्तेऽ[3]विदंस्मा-र्हत्तामवनिदहनपवनजलवनस्पतयः प्राणिनः। अथैवमारेकया बुद्धोऽयमिति संज्ञानमात्रेण सं(सां?)ख्यादिरपि चिन्तयत्येव। एवं तर्हि संज्ञामात्रेण सञ्चेतयतः कल्पाकारमपि शुद्धनामानं घ्नत आनन्तर्यकं स्यात्। तथा मातापित्रर्हद्वधस्तूपभेदानन्तर्येष्वपि योज्यम्। बालस्य किल पांसूनेव चेतयतोऽन्नमित्येवं वा चेतयतो बुद्धाय भिक्षादानोद्यतस्य पञ्चपुष्टी राज्यं फलत इति सुगतशासनविदां प्रतीतमेव। तदेवमसंचेतितवधो भ्रान्तिवधश्च प्राणातिपाताद्यहेतुतया ग्राह्यौ। अन्यथा बहु त्रुट्यति बुद्धभाषितमिति। तथाऽऽत्मवधोऽपि जैनानामवद्यहेतुरेव विहित-मरणोपायादृते शस्त्रोल्लम्बनाग्निजलप्रवेशादिभिः। तस्मादात्मनोऽप्यविधिवधोऽवद्यहेतुरिति यत्किञ्चित् परग्रहणमपीति। एवं सति कचित् कचिद् भावत एव प्राणातिपाताद्यवद्यमप्रतिष्ठान-नरकगामि। तन्दुलमत्स्यस्येव। कचिद् द्रव्यभावाभ्यां प्राणातिपातावद्यं हिंसा मारकस्येवेति। प्रमादश्च द्वयोरपि विकल्पयोरन्वेत्यज्ञानादिलक्षणस्ततश्च प्रमत्तव्यापारेण परदारदर्शने वा भवत्येवावद्यम् अप्रमत्तस्य तु आगमानुसारिणो न भवति। यत आगमः—

"[4]हत्थपायपलिच्छिन्नं, कण्णनासविकप्पितं।
अवि वाससतं णारिं, दूरतो परिवज्जए ॥ १ ॥-अनु०
चित्तभित्तिं ण णिज्झाए, णारीं वा सुअलंकिदं।
भक्खरंपिव दट्ठूणं, दिट्ठिं पडिसमाहरे ॥ २ ॥"-अनु०
—दशवैकालिके ( अ० ८, उ० २, सू० ५५, ५४ )

---

१ 'गलाकर्तयाज्ञिक०' इति ग-पाठः। २ 'गमन' इति ङ-पाठः। ३ 'विदन्त्यार्हता' इति ख-पाठः।
४ छाया—

प्रतिच्छिन्नहस्तपादां विकल्पितकर्णनासिकाम्।
अपि वर्षशतिकां नारीं दूरतः परिवर्जयेत् ॥ १ ॥
चित्रभित्तिं न निरीक्षेत नारीं वा स्वलङ्कृताम्।
भास्करमिव दृष्ट्वा दृष्टिं प्रतिसमाहरेत् ॥ २ ॥

तस्मादेनःपदमेतत् वसुबन्धा(?)रामिषगृद्धस्य गृद्धस्येवाप्रेक्ष्यकारिणः। अयं पुनरप्रसङ्ग एव मूढेनोपन्यस्तः—शिरोलुञ्चनाद्युपदेशे शास्तुः कुद्धस्येवाधर्मप्रसङ्ग इति, यतस्तत्राज्ञानादिप्रमादासंभवोऽत्यन्तमेव शासितरि ध्वस्तरागद्वेषमोहेनापि भगवता मुमुक्षूणां कर्मनिर्जरोपायत्वेन तपो देशितं, कुतोऽत्रप्राप्तिरप्रमत्तस्येति। अन्यदाऽपि श्रद्धाशक्त्यादिगुणसमन्वितोऽप्रमत्तो गुणवते पात्राय ददाति न्याय्यं, साधूद्देशेनाकृताकारितानुमतं गृहितोऽप्यागमानुवृत्त्या गृह्णाति, कुतस्तत्रावद्येन योगः?, अवगायिनो दानकाल एव च कर्मनिर्जरणादिफलाभिनिर्वृत्तेः। विसूचिका तु सुतराम विहिताचारपरिमिताद्भिभोजिनोऽस्य कृतकर्मविपाक एवासाविति, नास्त्यणीयानपि दातुरप्रमत्तत्वाद् दोषः। अज्ञानं विसूचिकायाः प्रमाद इति चेद् दातुस्तत्र स्वाम्यस्य दानकाल एव त्यक्तत्वात्, परगृहीतेन हि परव्यापत्तिः प्रमत्तस्य दोषवतीति। यच्चावादि—मातुर्गर्भो दुःखहेतुर्माताऽपि गर्भस्य दुःखनिमित्तमित्युभयोर्दुःखहेतुत्वादवद्येन योग इति, न, तदभिमतमेव जैनानां, तयोः प्रमत्तत्वात्। न चायमेकान्तः परदुःखोत्पादादवश्यंतयाऽवद्येन भवितव्यम्। अकषायस्य हि मुनेरपास्तसकलप्रमादस्य दर्शने सति प्रत्यनीकस्याशर्मोत्पद्यते, तद्वद्युत्सृष्टशरीरस्य वा व्यपगतासुनो दर्शनेन न तद्दुःखनिमित्तमस्यापुण्यमापतति साधोः। द्रव्यमात्रवधे चागमानुसारिणो भिषग्वरस्येव परदुःखोत्पादे सत्यपि नास्ति पापागमः, एवं परसुखोत्पादेनैकान्त इत्यन्याय्यम्। स्त्रीपुंसयोः संगमापादयतः सुखोत्पादेऽप्यवद्येन योगः। क्वचित् परसुखोत्पादे पुण्यलेशनिर्जरा वा। विहिनानुष्टायिनः साधोः क्षुत्पिपासार्तस्याधाकर्मादिदानेन एषणाविशुद्धेन प्रासुकान्नपानदानेन वेति। यच्चोक्तमग्निदृष्टान्तसामर्थ्याद् वध्योऽपि अवद्ये, वधक्रियासम्बन्धाद्धन्तृवत्। यथा ह्यग्निः पूर्वं स्वाश्रयं दहतीन्धनादिकं, एवं वधक्रिया वध्यसम्बन्धिनी प्राक् तावद् वध्यमेवावद्येन योजयति "कर्मस्था च भिदेः क्रिये" ति वचनात्, यथा भिनत्ति कुसूलं देवदत्त इत्येवं हन्ति प्राणिनमिति तदेतदसदित्यनया क्रियया कर्तृसमवायिन्या कुसूलविदारणमुत्पाद्यते सा तु भिदिक्रिया विवक्षिता। तथा च यया कर्तृगतया हननक्रियया प्राणवियोजनं कर्मस्थं क्रियते सा विवक्षिता। ज्वलनोऽप्येतावता दृष्टान्तीकृतोऽप्रतिबद्धदहनस्वभावः स्पृश्यमानो बुद्धिपूर्वकमन्यथा वा दहत्येव। एवं प्राणातिपातोऽपि हि प्रमत्तेन प्रयत्नरहितेन क्रियमाणः कर्तारमवश्यंतयाऽवद्येन योजयत्येवेति दृष्टान्तार्थः। अबुद्धिपूर्वकता च प्रमत्तता। तत्र कः प्रसङ्गो वध्यस्याधर्मेण?। वधकसमवायिनी च हननक्रिया कर्तृफलदायिन्येव। प्रमत्तस्याध्यवसायो बन्धहेतुः। न च वध्यस्यात्महनने प्रमत्ताध्यवसायः, दृष्टान्तधर्मी चानेकधर्मा, तत्र कश्चिदेव धर्ममाश्रित्य दृष्टान्त उपन्यस्यते। अथ समस्तधर्मविवक्षया दृष्टान्तोपादानं ततो न कश्चिदिष्टार्थसाधनं स्याद् दृष्टान्तः। विकल्पसमायेयं, जातिरुपन्यस्ता वसुबन्धु(?)वैधेयेन, स्वाश्रयदाहित्वमग्नेर्विशेषधर्मोऽस्ति। न तु वधक्रियायाः स्वाश्रयेऽवद्ययोग इष्टः, तस्मान्नाग्निदृष्टान्तात् साध्यसिद्धिरिति। एतेनैतदपि प्रत्युक्तम्—परेण

---

१ 'गृहीताप्या०' इति क-ख-पाठः।

च कारयतो नाधर्मप्रसङ्गः। न ह्यग्निमन्येन स्पर्शयन् प्रयोजयिता दह्यत इति। यदप्यभिहितम्—अचेतनानां च काष्ठादीनां गृहपाते प्राणवधात् पापप्रसङ्ग इति, इष्टमेवैतत्। यतो येषां जीवानां काष्ठादिशरीरं तदा वा॑च्युत्सृष्टं भावतस्तेषामविरतिप्रत्ययमवद्यमिष्यत एवेति न काचिद् बाधा॥ यच्चोक्तम्—न च दृष्टान्तमात्रात् स्वपक्षसिद्धिरिति, एतदप्ययुक्तम्। अजानानस्यापि प्रमत्तस्य प्राणातिपातादवद्यमिति प्रस्तुत्याग्निरुदाहृतः। प्रयोगस्तु—अजानानस्य प्राणवधक्रियाऽवद्यहेतुः प्रमत्तव्यापारनिर्वृत्तत्वात् तृतीयविकल्पप्राणवधक्रियावदिति। यश्चावद्यहेतुर्न भवति स प्रमत्तव्यापारनिर्वृत्तोऽपि न भवति, यथा प्रथमविकल्प इति। यच्चाशंक्योक्तं—स्वरसभङ्गुरेषु भावेषु क्षणिकेषु परकीयप्रयत्ननिरपेक्षेषु वायुप्राणस्योत्क्रान्तिः स्वयमेव भवति न परप्रयत्नेन विनाश्यते, वायुप्राणातिपातहेतुकत्वान्नाशस्य, किं तर्हि प्रयत्नः करोति? अनागतस्य क्षणस्योत्पत्तिं प्रतिबध्नातीति। एतदप्यत्यन्तमयुक्तम्। अनागतस्त्वलब्धात्मलाभः क्षणो न तावदुत्पद्यते स चाभावस्तस्य कुतः प्रतिबन्धः? असत्त्वरूपत्वात् शशशृङ्गस्येव। अतो नाभावः कर्तुं शक्यः। प्रतिबन्धाप्रतिबन्धौ च भावविषयौ। स्मर्तव्यं च प्राणातिपातलक्षणं स्वं सौगतेन—प्राणी यदि भवति प्राणिविज्ञानं चोत्पद्यते हन्तुर्न वा भावः प्राणी न च प्राणिसंज्ञा तत्र हेतुं॑रिति वैस्रसिकप्रायोगिकविनाशभेदाच्च न सर्व एव निष्कारणो नाशः प्रागभूतात्मलाभादङ्कुरादिवत्, हेतुमत्त्वात्, तर्हि किसलयादिवद् विनाशोऽपि विनाशवानित्यनिष्टप्रसङ्गः। यदा विनाशशब्देनावस्थान्तरपरिणतिर्वस्तुनोऽभिधीयते तदा किमनिष्टम्?। अत्रापि पूर्वावस्थोपमर्दमात्रं विनाशशब्दवाच्यम्। एवमपि न विनाशस्य विनाशे किञ्चित् कारणमुपलभामहे। प्रष्टव्यश्च पूर्वपक्षवादी—निष्कारणो विनाशः किमसन्नुत नित्य इति?। असत्त्वे विनाशस्य सर्वभावानां नित्यताप्रसङ्गः। अथ नित्यो विनाशः, कार्योत्पादाभावः, सर्वदा विनाशेन प्रतिबद्धत्वात्॥ यच्चोक्तं—कायस्यैव सेन्द्रियस्य तज्जीवितेन्द्रियं व्यपदिश्यते न त्वन्यस्यात्मनोऽभावादिति तदप्यसमीचीनम्। यत एकस्थितवस्तुनिबन्धनाः सर्वेऽप्यनुभवस्मरणप्रत्यक्षानुमानार्थाभिधानप्रत्ययव्यवहाराः, स चैकः स्थितश्चात्मा। सति तस्मिन् पुरुषार्थप्रवृत्तिप्रतिपत्तिरिति॥ ननु चानुभवस्मरणादयः स्कन्धमात्रे विज्ञानमात्रतायां वा न विरुद्धाः। तत्र निरन्वयविनश्वरत्वात् स्कन्धानां विज्ञानस्य च सन्तानाभ्युपगमे सर्वमुपपन्नमिति, तत् न, परमार्थतस्तस्यासत्त्वात्। न चासत्यात्मनि तत्प्रणीतप्राणातिपातलक्षणविषयावधारणं शक्यं कर्तुम्। सञ्चिन्त्य परस्याभ्रान्तिमारणमिति भिन्नाः सञ्चेतनादिलक्षणाः मारणावसानास्तत्र कस्य प्राणातिपातः किं सञ्चेतयितुः? अथ यस्य परविज्ञानमुभयस्याभ्रान्तिः? अथ येन मारित इति?। सर्वथा गृहीतशरणत्रया अप्यशरणा एव सौगता इत्येवं विचार्यमाणं सुगतशासनं निःसारत्वान्न युक्तिं क्षमत इति॥

प्रकृतमुच्यते—व्यवस्थितमिदं प्रमत्त एव हिंसकः, नाप्रमत्त इति। सामान्येन कर्तृनिर्देशः

1 'वाच्युत्सृष्टं' इति ङ-पाठः। 2 'हन्तुरिति' इति ग-पाठः।

यः कश्चित् प्रमत्त इति। कर्तुश्च करणान्यभिन्नानि भिन्नानि च द्विराकाराणि। तत्र योगेन्द्रिय-वीर्यज्ञानकरणान्यभेदेन वर्तन्ते गमने निर्वर्त्ये पादवत्, कृपाणदात्रासिधेनुकादीनि भेदेन व्यवस्थितानि। करणकारकाविनाभूता च कर्तृशक्तिरित्यभिन्नाः कायादयः कारणत्वेन निर्दिश्यन्ते,

योग-व्याख्या

कृतद्वन्द्वाः कायादयः तेषां योगस्त एव वा योगः। यथैव ह्यात्मा कायादिभिर्युक्तस्तथा कायादिक्रियायाऽपीति। अतस्तद्व्यापारोऽपि योगः। युज्यतेऽसावाऽऽत्मनेतियोगः सप्तचतुश्चतुर्भेदः दुर्बलवृद्धयष्टिकल्पः कर्तुरात्मनः, तदाश्रयश्च वीर्यान्तरायक्षयोपशमजनितो वीर्यपरिणामः, योगः कायादिचेष्टा। यथाऽऽह—

"[3]जोगो विरियं थामो, उच्छाह परक्कमो तहा चेट्ठा।
सत्ती सामत्थं चिय, जोगस्स हवन्ति पज्जाया॥ १॥"—आर्या

तथा अपर आह—

"मनसा वाचा काये-न वाऽपि युक्तस्य वीर्यपरिणामः।
जीवप्रयोगजनितः, स योगसंज्ञो जिनैर्दृष्टः॥ १॥"—आर्या

कायः—शरीरं औदारिकादिभेदपुद्गलजालात्मप्रयोगनिर्वृत्तं प्रधानातिशयोपकारितया साधकतमत्वात् करणम्, एतदवष्टम्भात् कर्ता आत्मा गमनवल्गनलङ्घनावरोहणकूर्दनास्फोटनवित्रासनादिक्रियाः परिनिष्पादयति। वागपि वाक्यार्थापत्तिपरिगृहीतभाषावर्गणायोग्यपुद्गलस्कन्धविविधवर्णपदवाक्यलक्षणा क्वचिदनभिलक्षितवर्णविवेकात्मनोऽभिलपणीयपदार्थप्रकाशने साधकतमत्वात् करणतया व्याप्रियते। मनोऽपि मनोवर्गणायोग्यस्कन्धाभिनिर्वृत्तमशेषात्मप्रदेशवृत्ति द्रव्यरूपं मनुते साधकतमत्वात् करणमात्मनः। एवमेभिः कायवाङ्मनोयोगैः समुदितैर्द्वाभ्यामेकेन वा प्राणानां सम्भवतामिन्द्रियादीनां व्यपरोपणम्—आत्मनः पृथक्करणमाचरति यो द्रव्यभावाभ्यां भावतो वाऽपि प्रमत्तः सा हिंसेति। समुदिताश्च प्रतीता एव निर्वर्तकाः, प्रत्येकं तु कथं निर्वर्तकाः प्राणातिपातावद्यस्येति भाव्यते, भूदकतेजोमारुतवनस्पतीनां काययोग एवैकः। स्पर्शनाख्यं चेन्द्रियमेकमेव, न तु वाङ्मनोयोगौ स्तः। तेषां च कायव्यापारजनित एव प्राणातिपातः। द्वित्रिचतुरिन्द्रियाणां असंज्ञिपञ्चेन्द्रियाणां

एकेन्द्रियादीनां हिंसायां योगविचारः

च कायवाग्योगाविन्द्रियद्वयं च स्पर्शनरसनाख्यं द्वीन्द्रियाणां, स्पर्शनरसनघ्राणानि त्रीन्द्रियाणां, स्पर्शनरसनघ्राणचक्षूंषि चतुरिन्द्रियाणां, असंज्ञिनां पञ्चापीति। सर्वेषामन्तःकरणं नास्ति द्रव्यरूपम्।

---

१ 'स्तयेव वा' इति ख-पाठः। २ 'वाऽऽत्मनो' इति ग-पाठः।

३ छाया—

योगो वीर्यं स्थाम उत्साहः पराक्रमः तथा चेष्टा।
शक्तिः सामर्थ्यं चैव योगस्य भवन्ति पर्यायाः॥ १॥

४ 'वाक्पर्याप्ति' इति ङ-पाठः। ५ 'दभिलक्षित०' इति ङ-पाठः। ६ 'मनो' इति ङ-पाठः।

एकेन्द्रियादीनां भावमनस्तु विद्यत एवात्मस्वभावत्वाद्, द्रव्यरूपमन्तःकरणमन्तरेण स्पष्टमपटु पटलावृतनेत्रवत्, संज्ञिपञ्चेन्द्रियाणामन्तःकरणसहितानि पञ्चापीन्द्रियाणि विद्यन्ते। पट्वी चैषां प्रज्ञा। कायवाङ्मनोयोगत्रयभाजश्च प्राणातिपाताद्यनुतिष्ठन्ति, प्रकर्षतोऽप्रतिष्ठाननरकगमनयोग्यम्। असंज्ञिपञ्चेन्द्रियास्तु मनोरहितत्वात् प्रथमपृथिवीनरकगमनयोग्यमेव प्रकर्षतो निर्वर्तयन्ति। एकद्वित्रिचतुरिन्द्रियास्तु नरकगमनयोग्यं कर्म नैवोपाददते, ते हि नरकगतिवर्जसंसारपरिभ्रमणयोग्यमेवावद्यं निर्वर्तयन्ति कायवाग्योगिनः। काययोगिनश्च कषायविशेषापेक्षमप्रकृष्टं च। फलस्य च प्रकर्षापकर्षौ अन्तःकरणकषायापेक्षौ। संज्ञिपञ्चेन्द्रियाणामारम्भहननव्यापादितकालभेदेन प्राक् प्रतिपादितौ। "तीव्रमन्दज्ञाताज्ञातभाववीर्याधिकरणविशेषेभ्यस्तद्विशेषः" इत्यत्र (अ० ६, सू० ७) सूत्रे। क्वचित् कायादित्रयसन्निधानेऽप्यन्यतमस्यैव व्यापारः। तन्दुलमत्स्यस्य मनोव्यापार एव केवलः। क्वचिद् वाङ्मनोव्यापारात् प्राणातिपातावद्यम्। यथा—

"वर्ष देव! कुणालायां, दिनानि दश पञ्च च।
मुसलस्थूलधाराभि–र्यथा रात्रौ तथा दिवा॥ १॥"–अनु०

–आवश्यकवृत्तौ अनादेशस्थाने

अत्रात्यन्तक्रूराशयाभ्यां श्रमणकाभ्यां लोककदर्थनामसहमानाभ्यां, कष्टतपःसमावर्जितदेवतया तद्वचनाभिप्रायानुरोधात् तथा वृष्टं यथा तत्र स्थावरजङ्गमानां प्राणिनां गन्धोऽपि नासीदिति स एष प्राणातिपातः प्रमत्तयोगलक्षणो भूयः सरागद्वेषमोहप्रवृत्तिकः संक्षेपादवसेयः। रागप्रवृत्तिकस्तावच्च मदकरिदशनचित्रकचर्ममांसाद्यर्थो मृगयाक्रीडार्थो वा स्वजीवितमित्रादिपरिरक्षणाय वा। मायालोभौ च रागः, द्वेषजो वैरनिर्यातनादिकः परशुरामसुभूमादेरिव, क्रोधमानौ च द्वेषः। अज्ञानजो याज्ञिकानां पश्वादिविशसनेन स्वर्गमिच्छतामवनिपतीनां च दृष्टः। परिरक्षणमात्राभिलाषिमन्वादिप्रणीतशास्त्रानुसारिप्रवृत्तीनामप्रेक्षापूर्वकारिभिर्यदेकैरुत्फाल्यमानानां तस्करपारदारिकाद्युछम्र(म्छ)नशूलिकाभेदक्रकचपाटनच्छेदनादिकः। तथा संसारमोचकानां धर्मबुद्ध्या संसारात् प्राणिनो मोचयतां परोपपातिवृश्चिकाहिगोनसव्यन्तरादीनां च वधात् किल पुण्यावाप्तिरितिप्रवृत्तीनां, हरिणविहगपशुमहिषादयश्च भोगिनामुपभोगार्था इति तद्धनने नास्ति दोष इत्येवं प्रवृत्तानामशेषमेव मोहविजृम्भितमिति॥

रागद्वेषमोहहेतुका वधाः

सम्प्रति हिंसायाः पर्यायशब्दानाचष्टे सूरिरसंमोहार्थम्, आगमे च सर्वेऽव्यवहारदर्शनात्। आह च—

"क्रियाकारकभेदेन, पर्यायकथनेन च।
वाक्यान्तरेण चैवार्थः, श्रोतृबुद्धिहितो मतः॥ १॥"–अनु०

हिंसनं हिंसा द्रव्यभावाभ्यां, द्रव्यतः षड्जीवनिकायविषयं प्राणिनां पृथक्करणं सकललोकप्रमाणोपाधिविशिष्टं रात्रिंदिवव्यवच्छिन्नं रागद्वेषमोहपरिणतिविशिष्टं च ।

वधपर्यायाः मारणमपि यथाविहितप्राणपरित्याजनम् । अतिपातो विनाशः प्राणानामतिपातः, अथवा अतिपातः–पातनं शाटनं प्राणानामतिपातनं प्राणातिपातः । वधः–उपमर्दः प्राणानां वधः प्राणवधः । देहः–शरीरं देहादन्यो देहान्तरं, संक्रामणं–नयनं प्रापणं देहान्तरे संक्रामणं देहान्तरसंक्रामणं साधनं "कृते"ति समासः (?)। पूर्वशरीरकं त्याजितः शरीरान्तरं परिप्राप्यते संसारभावी, न पुनर्यो मुक्तिमाप्स्यतीति । रोपणं जन्मपरिप्रापणं संवर्धनं च, आरोपणं–उत्सादनं उत्खननं विशेषेणारोपणं प्रमादपरवत्तया, मारणादिशब्दार्थेष्वपि एतद् विशेषणं द्रष्टव्यम् । प्राणानां व्यपरोपणं प्राणव्यपरोपणम् । इतिशब्द एवंशब्दार्थे । एवमुक्तेन प्रकारेणानर्थान्तरं सूत्रन्यस्तहिंसाशब्दार्थान्नार्थान्तरं मारणादिशब्दवाच्यमेकमिदमिति प्रतिपादयति, एक एवार्थः शब्दैरेभिः प्रतिपाद्यत इति ॥ ८ ॥

भा०—अत्राह–अथानृतं किमिति ? । अत्रोच्यते—

टी०—अत्राहेत्यादिना सम्बन्धं व्याचिख्यासते–अथानृतं किमिति । अथेति हिंसानन्तरं अनृतं निर्दिष्टं प्राक्, तत् किंलक्षणमित्यजानानः प्रश्नयति । आचार्यस्तु तल्लक्षणं वक्तुकाम आह–अत्रोच्यत इति । अत्र प्रश्नेऽभिधीयत इति । एतदुक्तं भवति–अभिहितहिंसालक्षणानन्तरोद्दिष्टमनृतं किंलक्षणमित्यत्रोच्यते–नानाप्रकारं परपीडायादनसमर्थम्—

अनृतस्य लक्षणम् **सूत्रम्—असदभिधानमनृतम् ॥ ७–९ ॥**

टी०—प्रमत्तयोगादित्यनुवर्तते अतो वाक्यार्थः–प्रमत्तयोगादसदभिधानमनृतमिति । प्रमत्तो यः कायवाङ्मनोयोगैरसदभिधानं प्रयुङ्क्ते यत् तदनृतम् । भावसाधनः करणसाधनो वाऽभिधानशब्दः । अव्ययम् । ऋतमिति सत्यार्थे । न ऋतमनृतम् । मिथ्याऽनृतमिति सूत्रविन्यासो युक्तो लघुत्वादिति चेत् तन्न । सत्याभासस्य परपीडाकारिणो वचसः पापादानहेतुकस्य प्रतिषेधाय कौशिकादिवाक्यस्येवासदभिधानग्रहणम् । एवंविधे च सूत्रविन्यासे पर्यायमात्रमित्युक्तं स्यात्,

सूत्रविन्यासविचारः

न तु लक्षणं मृषावादस्येत्यसद्ग्रहणे तु सर्वमुपपद्यते । अभिधानं–वाग्योगविषयः । भावसाधनपक्षे प्रमत्तस्याभिनिविष्टचेतस आत्मनः कर्तुर्विवक्षितार्थप्रतिपादने साधकतममिति । कायेन हस्तलोचनौष्ठपादाद्यवयवक्रियाभिरलीकाभिः परं वञ्चयति, वाचाऽप्यसद् ब्रवीति, मनसाऽप्यालोचयति–एवं परः प्रतारणीय इति । सच्छब्दः प्रशंसार्थो लोके प्रतीतः सत्पुरुषः सज्जन इत्यादिषु प्रयोगेषु । न सद् असत् अप्रशस्तमाप्तप्रणीतागमनिन्दितं निषिद्धं वा । तच्च त्रिविधमसदित्यादिना भाष्यकारो दर्शयति—

१ 'व्यवस्थितं' इति -पाठः । २ 'प्रतिपादिते इति' ग-पाठः ।

असत-त्रैविध्यम्

भा०—असदिति सद्भावप्रतिषेधोऽर्थान्तरं गर्हा च। तत्र सद्भाव-प्रतिषेधो नाम भूतनिह्नवः अभूतोद्भावनं च। तद्यथा—नास्त्यात्मा नास्ति परलोक इत्यादि भूतनिह्नवः।

टी०—असदित्यस्य शब्दस्यायमर्थः—सतो भावः सद्भावः। सच्च उत्पादव्ययध्रौव्ययुक्तं (अ० ५, सू० २९) तस्य भावस्तदेव न तथा भवतीत्यनेकेन पर्यायरूपेणास्य प्रतिषेधो—निराकरणं यदेतदुत्पद्यतेऽवतिष्ठते व्येति च तदेकमेवंविधं नास्तीत्यपह्नुवते। तत्र सद्भावप्रतिषेधव्याचिख्यासयेदमाह—तत्र सद्भावप्रतिषेधो नामेति। नामशब्दो वाक्यालङ्कारार्थः। सद्भावप्रतिषेधो द्विविधः—भूतनिह्नवः अभूतोद्भावनं च। भूतस्य—विद्यमानस्य निह्नवः—अपलापः। तद्यथा—नास्त्यात्मा नास्ति परलोक इति विद्यमानस्यात्मनः कर्तुः शुभाशुभानां कर्मणामनुभवस्मरणादिक्रियाधारस्य नास्तित्वं केचिन्मोहात् प्रतिजानते। आत्माभावे च परलोकिनोऽभावात् परलोकाभाव इति सुज्ञानम्। आदिग्रहणाच्छुभाशुभकर्मतदुपभोगदानफलाभावपरिग्रहः। सद्भावप्रतिषेधभेद एवाभूतोद्भावनम्। चशब्दः समुच्चयार्थः। यथाऽवस्थितात्मसद्भावमसंख्येयप्रदेशपरिमाणमाश्रयवशात् संकोचविकासधर्मकमरूपरसगन्धस्पर्शमनेकप्रकारक्रियमवधूयाज्ञानबलेनात्मानमभूतमेवात्मतत्त्वं समुद्भावयन्ति स्वरुच्या।

भा०—श्यामाकतन्दुलमात्रोऽयमात्मा, अङ्गुष्ठपर्वमात्रोऽयमात्मा, आदित्यवर्णः, निष्क्रिय इत्येवमाद्यभूतोद्भावनम् ॥

टी०—श्यामाकतन्दुलमात्रोऽयमित्यादि। श्यामाकः—क्षुधान्यविशेषः तस्य तन्दुलस्तत्प्रमाणः श्यामाकतन्दुलमात्रः। अयमित्यनुभवगम्यः स्वप्रत्यक्ष आत्मा निर्दिश्यते। तथा अङ्गुष्ठपर्वमात्र इति। अङ्गुष्ठः—पाणेरवयवस्तस्य ले(रे)खावच्छिन्न उपरितनो भागः पर्व, तत् प्रमाणमस्येति अङ्गुष्ठपर्वमात्र आत्मा। इत्थं चाभ्युपगमे तस्यात्मनः शरीरैकदेशावस्थाने सति शेषदेशानां चेतनाऽभावप्रसङ्गः। ततश्च दंशमशकमक्षिकादितोदने शस्त्रच्छेदने च तेषु देशेषु न दुःखवेदना स्यात्। चन्दनादिविलेपने च न सुखानुभवः। स्वानुभवसिद्धाश्च सुखदुःखवेदना इत्यतः प्रमाणविरुद्ध एष पन्था प्रहातव्यः। आदित्यवर्ण इति भास्वररूपस्तस्य चारूपादित्वादमूर्तत्वात् कुतो भास्वरता ?। कर्मात्मप्रदेशानामन्योऽन्यानुगतिलक्षणपरिणामाभ्युपगमे समस्ति रूपादिमत्ता चेत् तदसत्, ज्ञानावरणादिपुद्गलानामभासुरत्वात्। तस्मादयमपि हेयः पक्षः। निष्क्रिय इति। आत्मा सर्वगतस्तस्य च गमनागमनवीक्षणभोजनादिका क्रिया कायवाङ्मनःकरणजनिता, तदभावान्निष्क्रिय इति व्याचक्षते, तदप्यसद् दर्शनम्, आत्मनः सर्वगतत्वे प्रमाणाभावात्। उपे-

आत्मनः परिमाणस्य विचारः

१ 'सद्भूतनिह्नवः' इति घ-पाठः। २ 'अभूतनिह्नवश्च' इति ग-पाठः। ३ 'शस्त्रच्छेददेशेषु' इति क-पाठः।

आत्मनो निष्क्रियत्वस्य निरासः

स्य वाऽभिधीयते, सर्वगतात्मनः सर्वत्र सर्वोपलब्धिप्रसङ्गः। अथ यत्रैवोपभोगोपलब्ध्यधिष्ठानं शरीरमस्ति तत्रैवोपलब्धिस्तदभावान्नान्यत्र चेत् तदयुक्तम्, अन्यत्रापि शरीरकाणां सम्भवात्। निजधर्माधर्मोत्पादितं यच्छरीरकं तत्रेति चेत् तदसत्, निष्क्रियत्वात्। आत्मनस्तावेव धर्माधर्मौ कथं निजाविति निष्क्रियस्य संसारमुक्तिप्रहाणप्राप्त्युपायानुष्ठानाभावादसमीचीन एव निष्क्रियत्वपक्षः। आदिग्रहणात् क्षणविनश्वरविज्ञानमात्रतोद्भावनं स्कन्धमात्रतोद्भावनमवक्तव्यतोद्भावनं वा सर्वमनृतमिति। असत एव द्वितीयभेदव्याख्यानायाह—

**भा०—अर्थान्तरं यो गां ब्रवीत्यश्वं अश्वं च गौरिति। गर्हेति हिंसापारुष्यपैशुन्यादियुक्तं वचः सत्यमपि गर्हितमेव भवतीति ॥ ९ ॥**

टी०—अर्थान्तरमित्यादि। अर्थादन्योऽर्थः अर्थान्तरम्। तद् दर्शयति—यो गां ब्रवीत्यश्वमिति अश्वं च गौरिति। य इति प्रमत्तस्य कर्तुर्निर्देशः। गोशब्दः सङ्केतवशात् सास्नादिमतिपिण्डे लोकेन व्यवहारार्थं प्रयुज्यत इति रूढम्। अश्वशब्दोऽप्येकशफाद्यवयवसन्निवेशविशेषे प्रसिद्धः। वक्ता तु वैपरीत्येन मौढ्यात् प्रयोगं करोत्यश्वशब्दं गवि प्रयुङ्क्ते, शाठ्याद् वा, गोशब्दं चाश्व इति, एवम्, अचौरं चौर इत्यादि॥ असत एव तृतीयभेदो गर्हा। तद्विवरणायाह—गर्हेति हिंसेत्यादि। गर्हणं गर्हा कुत्सा शास्त्रप्रतिषिद्धवागनुष्ठानं गर्हितं कुत्सितमितियावत्। युक्तशब्दः प्रत्येकमभिसम्बध्यते। हिंसायुक्तं वचः सद्भूतार्थप्रतिपत्तिकार्यप्यलीकमेव। यतो हिंसानिवृत्तेर्मृषावादादिनिवृत्तिः परिकरः। हिंसानिवृत्तिपरिरक्षणार्थमेव हि मृषावादादिवृत्तय उपदिष्टाः। तत्र हिंसा—अभिहितलक्षणा येन वचसोच्यमानेन प्राणिनां परितापापद्रावणे भवतस्तद्धिंसायुक्तं वचः सत्यमप्यागमे कुत्सितत्वादनृतमेव भवति। यतः प्राणिपीडापरिरक्षणार्थं मृषावादादिनिवृत्तिरिति। तथा पारुष्ययुक्तं परुषो—निष्ठुरस्तद्भावः पारुष्यं—निष्ठुरवचनाभिव्यङ्ग्यमन्तर्गताशुभभावपिशुनं तदपि परपीडोत्पादहेतुत्वात् सत्यमपि गर्हितम्। तथा पैशुन्ययुक्तम्। मर्मसु तुदन् परान् पिशुन उच्यते, तद्भावः पैशुन्यम्। येन येन वचसोच्चार्यमाणेन परस्य प्रीतिर्विहन्यते तत् सर्वं पैशुन्ययुक्तमिति। आदिशब्दाच्छलशठदम्भकल्कविकारोद्धासिकाकुकसन्दिग्धाहितामितप्रशस्तविकथाश्रितप्रवचनविरुद्धसावद्यग्रहणमिति। आगमश्च—

"जा य सच्चा अवत्तव्वा, सच्चामोसा य जा मुसा।
जा य बुद्धेहिं णाइण्णा, ण तं भासिज्ज पण्णवं ॥ १ ॥"—अनु०

—दशवैकालिके ( अ० ७, उ० २ )

---

१ 'भावात्' इति ङ-पाठः। २ '०तमनृतमेव' इति ख-पाठः।

३ छाया—
या च सत्या अवक्तव्या सत्यामृषा च या मृषा।
या च बुद्धैः अनाचीर्णा नैनां भाषेत प्रज्ञावान् ॥ १ ॥

वाचकेनाप्युक्तम्—

" यद् रागदोषवद् वाक्यं, तत्त्वादन्यत्र वर्तते ।
सावद्यं वाऽपि यत् सत्यं, तत् सर्वमनृतं विदुः ॥ १ ॥ "

तथा परेणाप्युक्तम्—

" अनृतमसद्वचनं स्या—च्चतुर्विधमसच्च जिनवरैर्दृष्टम् ।
सद्भूतप्रतिषेधो—ऽसद्भूतोद्भावनं च तथा ॥ १ ॥ "–आर्या

नास्ति घटः, शशशृङ्गमस्तीति, गर्हितवचनं त्व(त्व)सत् सतोऽपि वा वचनमन्यथा यत् स्यात्, गर्हितमुपघातादि, इतरच्च गौरश्व इति वचनं, तस्मात् प्रमत्तयोगादसदभिधानमनृतमिति व्यवस्थितम् । तच्च संक्षेपतश्चतुःस्थानसंगृहीतं सर्वद्रव्यविषयमन्यूनम् । द्रव्याणि च लोकालोकावच्छिन्नानि, कालो रात्रिंदिवलक्षणः, भावतो रागद्वेषमोहपरिणत आत्मा । अनेनैतदपि प्रतिक्षिप्तमवसेयम्—

संभिन्नप्रलापतानिरासः " न नर्मयुक्तं वचनं हिनस्ति, न स्त्रीषु राजन् ! न विवाहकाले ।
प्राणात्यये सर्वधनापहारे, पञ्चानृतान्याहुरपातकानि ॥ १ ॥ "–उपजातिः

इति । अपरे तु मोहादयुक्तं मृषावादलक्षणं ब्रुवते । अन्यथासंज्ञिनो वाक्यमर्थाभिज्ञे मृषावचः । यद्वचनं यमर्थं ब्रवीति तस्मिन्नन्यथासंज्ञी भवति चौरमचौरमिति, यं वाऽधिकृत्य ब्रवीति स तस्य वाक्यस्यार्थाभिज्ञो यदि भवति ततस्तद्वाक्यं मृषावादः, अर्थाभिज्ञश्चाभिज्ञातुं समर्थो यश्च उत्पन्नभावः उत्पन्ने श्रोत्रविज्ञाने, वाक्यार्थश्च मनोविज्ञानविषयो न श्रोत्रविषयश्च, अभिज्ञातुं समर्थे श्रोतरीत्येतदभ्युपेतं भवति । वाक्यार्थानभिज्ञे तु संभिन्नः प्रलापः स्यान्न मृषावाद इति, तदेतदयुक्तं, प्रमत्तभाषितत्वात् । अर्थाभिज्ञोऽनभिज्ञो वा भवतु श्रोता, किं तेन बाह्येन वस्तुतो निमित्तमात्रतयोपयुज्यमानेन ? स्वाश्रयोऽत्रापराध्यति । सर्वथाऽपि प्रमत्तो यः कायवाङ्मनोयोगैरसदभिधत्ते तदनृतम्, आशयस्याविशुद्धत्वात् । संभिन्नप्रलापश्च परिभाषान्तरमात्मरुच्या व्यवस्थापितमनृतवचनात् परमार्थतो न भिद्यत एव वाचकमुख्यप्रणीतानृतलक्षणात् इति ॥९॥

भा०—अत्राह–अथ स्तेयं किमिति ? । अत्रोच्यते—

टी०—अत्राहेत्यादि सम्बन्धं वक्ति । पूर्वसूत्रक्रमोपन्यस्तहिंसाद्यनृतलक्षणानन्तरं स्तेयलक्षणं प्रश्नयति–अथ स्तेयं किमिति । लक्षणविषयप्रश्ने यल्लक्षणं पृच्छ्यते कीदृगिति । आचार्यस्तु अत्रोच्यत इत्याह । अत्र प्रश्ने स्तेयलक्षणमुच्यते—

१ ' भावदोष० ' इति ग-पाठः । २ ' सद्भूतं ' इति ङ-पाठः । ३ ' स्वाश्रयो ' इति ङ-पाठः ।

स्तेयलक्षणम् **सूत्रम्—अदत्तादानं स्तेयम् ॥ ७–१० ॥**

टी०—प्रमत्तयोगादित्यनुवर्तते। दीयते स्म दत्तम्। कर्मणि निष्ठा। कर्म च कर्तुरीप्सिततमं चेतनाचेतनं वस्तु, ममेत्येवं परिगृहीतं पञ्चभिर्देवेन्द्रादिभिः कस्मैचिद् दीयते यत् तद् दत्तमुच्यते। यत् तु तैः परिगृहीतमेव न दत्तं तस्यादानं–ग्रहणं धारणं च स्वेच्छया हठेन समक्षमेव चौर्येण वा (तत् स्तेय)मुच्यते, देवेन्द्रादिभिः परिग्रहीतृभिर्दीयमानमपि किञ्चिद् भगवता नानुज्ञातमागमे शय्याहारोपधिष्वनेषणीयादि तदपि स्तेयमेव॥ ननु चैवंविधमेव सूत्रं

सूत्रपाठविचारः कार्यम्–शास्त्रेणादत्तस्यादानं स्तेयमिति। सत्यम्, एवं संगृह्यते सकलं लक्षणं तथापि लाघविकाशय आचार्यः सूत्रबन्धमेवं न चकारेति। अनेन च लक्षणेन खरकुटीसम्बन्धिमानुपकेशादेर्भोत्रव उज्झितस्य सति प्रयोजने ग्रहणमवकरादिस्थानोज्झितचीवरादेर्वा न स्तेयमिति।

भा०—स्तेयबुद्धया परैरदत्तस्य परिगृहीतस्य वा तृणादेर्द्रव्यजातस्यादानं स्तेयम् ॥ १० ॥

टी०—स्तेयबुद्धयेत्यादि भाष्यम्। स्तेनस्य भावः स्तेयं, हरामीत्यादातुः परिणामः स्तेयबुद्धिः। सा च प्रमत्तस्यैव कायवाङ्मनोयोगत्रयानुसारिणी, बुद्धिर्ज्ञानमिति, तया स्तेयबुद्धया कषायादिप्रमादकलुषितधिया करणभूतया कर्तुः परिणन्तुराददानस्य स्तेयमिति। आदानं च द्रव्यभावाभ्यामात्मनो यथासम्भवमायोज्यम्। स्तेयबुद्धिग्रहणात् तु कर्मादानं न स्तेयमिति। ज्ञानावरणादिकर्मणो हि यद्यप्यदत्तस्य ग्रहणमात्रं तथापि न तत्र स्तेयबुद्धि[र्बन्धु]रस्ति। सन्त्वपि प्रमादादिबन्धहेतुषु स्तेयबुद्धया त्वादित्समानस्य स्तेयम्। एतदेव स्फुटतरमाचष्टे भाष्यकारः—परैरदत्तस्येत्यादिना। परैः परिगृहीतस्य दानप्रवृत्तिरदानं वा सम्भवति नापरिगृहीतस्य, अतस्तैरदत्तस्यादानं स्तेयं, न तु ज्ञानावरणादिकर्मणः कश्चित् परिगृहीताऽस्ति यो दास्यति न वेति। यदा च परैः परिग्रहीतृभिः परिगृहीतस्यादत्तस्यादानं स्तेयं तदा नास्ति कर्मणि प्रसङ्गः। अपिच–प्रायोग्यमनुज्ञातं दक्षिणार्धदेवेन्द्रेण प्रथमतीर्थकरस्य तीर्थ एव भगवतः सुरासुरशिरोमालाकुसुमरजोरञ्जितचरणस्य नाभेयस्य। कियतः पुनरस्यादेयस्य स्वीकरणं स्तेयमित्याह—तृणादेर्द्रव्यजातस्येति। तृणमादिर्यस्य द्रव्यजातस्य तत् तृणादि। तृणग्रहणं निःसारताप्रतिपादनार्थं अल्पताप्रतिपादनार्थं च। तृणेन निःसारेणाल्पेनैकेनाप्यपहृतेनात्यन्तमैहिको दोषो न सम्भाव्यते, तादृशस्याप्यदत्तस्यादानं स्तेयं भवति, किमुत मरकतपद्मरागादेरिति?। अत्र च परिगृहीतापरिगृहीतस्येति केचित् भाष्यमधी

१ दशवैकालिके—"जपि वत्थं च पायं वा अकप्पिअं न इच्छिज्जा"। २ 'स्पष्टतरं' इति ङ-पाठः।

भाष्यपाठविचारः यते, तद्युक्तम्। न ह्यपरिगृहीतस्य शास्त्रेणाननुज्ञातस्य ग्रहणं स्तेयमिष्यते, तस्मादपरिगृहीतस्येति प्रमादपाठः। तथा तस्यैव भाष्यकृतः शौचप्रकरणे ग्रन्थः—" अदत्तादानं नाम परैः परिगृहीतस्य तृणादेरप्यनिसृष्टस्य ग्रहणं स्तेयम्।

परैरनतिसृष्टं यद्, यच्च शास्त्रैर्विगर्हितम्।
तत् सर्वं न ग्रहीतव्यं, दन्तविस्फाटनाद्यपि ॥ १ ॥"–अनु०

न प्रकरणकारेणात्रापरिगृहीतस्येत्युक्तम्। आदिग्रहणादनेकविधसारासारचेतनमिश्रद्रव्यजातपरिग्रहः। जातशब्दः प्रकारवचनः।* द्रव्यजातं–द्रव्यप्रकारः। गुणपर्याययोर्द्रव्यपरिणामविशेषादेव न भेदेनोपादानमिति॥ ननु चैवंविधे भाष्यार्थे परैः परिगृहीतस्यादत्तस्य स्तेयबुद्ध्या ग्रहणमदत्तादानमिति। अनेषणीयादेर्ग्रहणप्रसङ्गः। येन परिगृहीतमनेषणीयादि स ददात्येव। ततस्तद्ग्रहणे कथं स्तेयमिति? उच्यते—सत्यम्। गृहिणा दीयते, शास्त्रेण तु प्रतिषिध्यते। गरीयांश्च शास्त्रप्रतिषेधः। भवतु नाम शास्त्रप्रतिषेधः तच्छास्त्रं कथं परशब्दवाच्यम्?। परो ह्यात्मा चेतनालक्षण इति?। उच्यते–शास्त्रमपि ज्ञानमात्मनः परिणामविशेषः। स परिणामिन्यात्मनि[1] अभेदेन वर्तमानः परशब्दवाच्योऽन्यक्षेण प्रहतघातिकर्मणो भगवत उपदेशादुपजातभावश्रुतपरिणामा गणधरप्रत्येकबुद्धस्थविराः प्रतिषेधयन्त्यनेषणीयादि, वर्णपदवाक्यराशिद्रव्यश्रुतमुपचारात् शास्त्रमुच्यते पुस्तकादिलिखितम्, अतः सर्वमदत्तादानं सूत्रेण समग्राहीति। तच्चतुर्धा अधीतमागमे—द्रव्य-क्षेत्र-काल-भावभेदात्। द्रव्यतो ग्रहणधारणीयेष्वित्युक्तं, क्षेत्रतस्त्रैलोक्यव्यवच्छिन्नानि तान्येव द्रव्याणि, कालभावौ तु पूर्ववद् भावनीयौ ग्रहणधारणीयेष्विति। आदानं गृह्यमाणधार्यमाणद्रव्यविषयत्वाद् द्रव्यैकदेशवृत्ति, न तु समस्तद्रव्यविषयम्। ग्रहणधारणे तु साक्षात् पुद्गलद्रव्यस्यैव शरीराणां च, जीवानां पुद्गलद्रव्यद्वारेणैव ते ग्रहणधारणे, न पुनः साक्षात्॥ देशवृत्तिता

ननु चैवं परकीयभूमिखण्डापहारे धर्माधर्माकाशकालानामपि तदवच्छिन्नानामपहारः[2]। ततश्चैतदपि सकलद्रव्यविषयमेव स्यात्, न द्रव्यैकदेशवृत्तीति। उच्यते–हस्तादिना करणेन यद् द्रव्यं पूर्वकाधारप्रदेशात् प्रदेशान्तरं प्रापयितुं शक्यते तद् ग्रहणधारणीयशब्दाभ्यामार्षे विवक्षितं, तच्चैवंविधं ग्रहणं धारणं चाकाशादिषु न सम्भवति। तस्माद् द्रव्यैकदेशवृत्त्यैवादानं न्याय्यम्॥ अपरे तु मोहादभिदधते "–यद्यपि ब्राह्मणो हठेन परकीयमादत्ते छलेन वा तथापि तस्य नादत्तादानम्, यतः सर्वमिदं ब्राह्मणेभ्यो दत्तं, ब्राह्मणानां तु दौर्बल्याद् वृषलाः परिभुञ्जते, तस्मादपहरन् ब्राह्मणः स्वमादत्ते"। "स्वमेव ब्राह्मणो भुङ्क्ते स्वं वस्ते स्वं ददाति (च)"(मनुस्मृतौ अ० १, श्लो० १०१) इति सर्वमिदमसम्बद्धत्वात् प्रलापमात्रं श्रोत्रिय-

---

१ 'परिणमति आत्मनि' इति ङ-पाठः। । २ 'माहारः' इति ङ-पाठः।

प्रायदुर्विदग्धजनप्रहत एष पन्था उपेक्षणीयः, सप्रत्यवायत्वादिति। सर्वं चेदं रागद्वेषमोहमूलम्। उक्तं मोहजं, रागजं तु यस्य येनार्थित्वं स तस्यापहारमाचरति लाभसत्कारयशःसमावर्जनार्थं वा, द्वेषजं वैरप्रतियातनार्थमिति ॥ १० ॥

भा०—अत्राह—अथाब्रह्म किमिति ?। अत्रोच्यते—

टी०—अत्राहेत्यादिना सम्बन्धं प्रतिपादयति। अत्रेति व्याख्याते हिंसादित्रयलक्षणे पर आह—अथाब्रह्म किमिति ?। अथेत्यानन्तर्यसूचकः। ब्रह्मणोऽन्यद् अब्रह्म। तत् किंलक्षणमिति प्रश्ने सत्याह—

अब्रह्मलक्षणम् सूत्रम्—मैथुनमब्रह्म ॥ ७-११ ॥

टी०—मिथुनं द्वयमुच्यते। तत् कदाचित् द्वयमपि सचेतनं, कदाचिदेकं सचेतनं एकमचेतनम्। तत्राद्यं पुरुषवेदोदयात् पुमानुदितस्त्रीवेदया दिव्यमानुषतिर्यक्स्त्रिया सह संयुज्यते। अथवा पुरुषेण नपुंसकेन फलादिविवरेण स्वहस्तादिना वा। एवं योषिच्चेतनं कन्दादिभिरन्यहस्तादिभिरपीति। पश्चिमविकल्पे तूदितवेदः पुमान् अचेतनाभिर्दिव्यमानुषतिर्यक्स्त्रीप्रतिमाभिर्लेप्यकाष्ठोपलपुस्तचित्रकर्मादिरूपाभिः सह संपृच्यते। अन्यैश्चाचित्तस्रोतोभिर्मृतशरीरकेण वा। तथा योषिद् अचेतनपुरुषप्रतिकृतिवर्तिना लिङ्गेन काष्ठशलाकादिना वा युज्यते बहुप्रकारेण कृत्रिमोपकरणेन विडम्बयत्यात्मानम्, एवं सर्वत्र मिथुनसम्भवः। तयोर्भावो मैथुनं अविकृतत्वाद् युवादेराकृतिगणत्वादण्। अथवा मिथुनस्येदं कर्म, "तस्येदं" (पा० अ० ४, पा० ३, सू० १२० ) इति अण्। अचेतनमपि हि वस्तु प्रतिमादि विवक्षिततत्कर्मयोग्यतया परिणममाणमनुग्राहकं तथा भवतीति समीचीनमेवेदं तयोर्भावो मैथुनमिति। आगमस्तु द्रव्य-क्षेत्र-काल-भावभेदाच्चतुर्धा। मैथुनं द्रव्यतो रूपेषु वा रूपसहगतेषु वा द्रव्येषु, रूपमचेतनं पुद्गलद्रव्यमात्रं प्रतिमादि, न तु वर्णमात्रमेव, रूपसहगतेषु वा द्रव्येष्विति रूपं तदेव पुद्गलद्रव्यं तादृशा रूपेण सह संभूय गतानि यानि जीवद्रव्याणि, गतानीत्यन्यानुवेधिना परिणामेन परिणतानि चेतनाभाञ्जि शरीराणीत्यर्थः। तद्विषयं मैथुनं द्रव्यतः, क्षेत्रतोऽनन्तरवत्। भावो हि रागद्वेषपरिणाम आत्मन इत्यतः प्रमत्तयोगादिति अत्रानुवर्तमानमपि नोपयुज्यते, यत्राप्रमत्तस्य सततस्तथाभावे सति कर्मबन्धाभावस्तत्र प्रमत्तयोगग्रहणमर्थवद् भवति—प्रमत्तस्य कर्मबन्धो नाप्रमत्तस्येति, प्राणातिपातवत्, इह पुना रागद्वेषान्वयाविच्छेदात् सर्वास्ववस्थासु मैथुनासेविनः कर्मबन्ध इति। आह च—( बृहत्कल्पे )

प्रमत्तयोगादित्यस्य नोपयोगे हेतुः

---

१ 'पुस्तकचित्र' इति ङ-पाठः। २ 'त्यन्योऽनुवेधिना' इति ङ-पाठः।

[1] "कामं सव्वपदेसुवि, उस्सग्गववातधम्मता जुत्ता।
मोत्तुं मेहुणभावं, ण विणा सो रागदोसेहिं ॥ १ ॥"–आर्या

अतश्चानर्थकमेव प्रमत्तग्रहणमत्रेति। मण्डूकप्लुत्या चाधिकारानुवृत्तिः। असंख्येयलोकाकाशप्रदेशपरिमाणबृहत्त्वादात्मा ब्रह्म। स च मैथुनानुस्मृतिसंस्कारस्पृहेन्द्रियालोकवृष्यरसविषयविकथासत्कृतिसंसक्तसेवाभेदाद् दशविधाद् अब्रह्मणो निवृत्तश्चरन् ब्रह्म-ब्रह्मध्वनिवाच्यः आत्मैव चरणं चर्यम् आत्मनो ब्रह्मणः सेवनमात्मनि आमरणं न बहिर्मुखचित्तवृत्तिता स्त्र्यादिविषया, अतो मनोवाक्कायैः कृतकारितानुमतियुक्तैः परिहारोऽङ्गनाविषयः सर्वथा ब्रह्मचर्यमात्मन्येव वृत्तेः, संवृतेन्द्रियद्वारत्वात्। तद्विपरीतमब्रह्म। तच्च तीव्ररागानुबन्धिना सङ्कल्पेन [2]चोदितः कायव्यापारो दशनकोटिकृतालिङ्गनकरजघट्टनालक्षणस्तत्कालरमणीयकलं[3]प्रलापश्चानेकविधो वाग्व्यापारो विपरीतदर्शनाहितात्मकतिपयप्रेमलेशात् स्वकल्पनासमारोपितमनोज्ञकानुपजातातुलविषयतर्षपरिमुषितशेमुषीकान् पुंसः क्रशयत्यतितराम्। तथाचानुकूलत्वाद् दुस्त्यजमपीदमशुचित्वादिभावनाजालसंस्पर्शनाद् विवेकिनो जहत्यवधीरितमकरध्वजप्रसराः। तदेतदब्रह्म यथोक्तलक्षणं भाष्येण प्रकाशयन्नाह—

**भा०—स्त्रीपुंसयोर्मिथुनभावः मिथुनकर्म वा मिथुनं तदब्रह्म ॥ ११ ॥**

टी०—स्त्रीपुंसयोरित्यादि। स्त्री च पुमांश्च स्त्रीपुंसौ। "अचतुरा"दि ( पा० अ० ५, पा० ४, सू० ७७ ) सूत्रलक्षितः स्त्रीपुंसशब्दः। तयोः स्त्रीपुंसयो[4]रुद्भुततीव्रदेहपरिणामयोर्मिथुनता-मिथुनभावश्चित्तपरिणामो मोहकर्मोदयात् क्लिष्टः परस्परमाश्लेषे सति सुखमुपलभमानयोः स्त्रीपुंसग्रहणादेवोदितवेदयोर्यो मिथुनभावः कृत्तद्धितसमासानां चाभिधानलक्षणत्वात् प्रतिविशिष्टमैथुनकर्मसंप्र[5]त्ययो न पुनः प्रयोजनवशादासन्नप्रदेशस्थितस्त्रीपुंसमिथुनमात्रं मिथुनभावो मिथुनकर्म वाऽभिधीयते। ततश्च स्त्रीप्रव्रजितयोश्चैत्याभिवन्दनादिकर्मण्यप्रसङ्गो मिथुनभावस्य। तद् अब्रह्मेत्यनेन तच्छब्देन स्त्रीपुंसादिलक्षणो मिथुनभावो मिथुनकर्म [6]वा सर्वमेतन्मैथुनमब्रह्मेति निगमनद्वारेण परामृश्यते। स्त्रीपुंसग्रहणं प्रधानत्वात् पूर्वोक्तसकलविकल्पप्रतिपादनार्थम्। प्रधानं च स्त्रीपुंसयोर्मिथुनभावः, पृथगनाचरितास्तु शेषविकल्पाः। ते च स्त्रीपुंसग्रहणेन सर्वेऽपि सूचिताः। तदेतदब्रह्म संक्षेपतो रागद्वेषमोहमूलमनर्थपरम्परा रागात् परदाराभिगमलाभसत्कारात्ममित्रत्राणार्थमासेवते द्वेषाद् वैरनिर्यातनार्थं मोहात् स्वस्रादिपरिभोगाद्यनुष्ठानमविच्छिन्नविषयपिपासाः समाचरन्ति। साधवस्तु विवेकबलादुपशान्तरागादिरजसः सर्वात्मना परिवर्जयन्तीति ॥ ११ ॥

---

१ छाया—

कामं सर्वपदेष्वपि उत्सर्गापवादधर्मता युक्ता।
मुक्त्वा मैथुनभावं न विना स रागद्वेषौ ॥

२ 'चोदितः' इति ङ-पाठः। ३ 'लाप्रतापश्च' इति ङ पाठः। ४ 'रूद्भूत' इति ङ-पाठः। ५ 'संप्रत्ययोर्न पुनः' इति ङ-पाठः। ६ 'च' इति ग-पाठः।

भा०—अत्राह–अथ परिग्रहः क इति ?। अत्रोच्यते—

टी०—अत्राहेत्यादिना सम्बन्धकथनम्। अवधृतहिंसादिलक्षणचतुष्टयोऽपरलक्षणाभिधानप्रस्तावे प्रश्नयति—अथ परिग्रहः क इति ?। अथ–अब्रह्मानन्तरं परिग्रह उपदिष्टः, स किंलक्षणविषयः ? प्रश्ने आचार्य आह—अत्रोच्यते–अत्र–लक्षणप्रश्नेऽभिधीयते। बाह्याध्यात्मिकोपधिविशेषसंरक्षणक्षयार्जनसङ्कल्पैषणा या सैव हि शब्दान्तरनिर्दिष्टा—

परिग्रहलक्षणम् **सूत्रम्—मूर्च्छा परिग्रहः ॥ ७-१२ ॥**

टी०—अत्र प्रमत्तयोगादित्यनुवर्तते। मूर्च्छेति। "मूर्च्छा मोहसमुच्छ्राययोः"(पा० धा० २१२) मूर्च्छ्यतेऽनया आत्मेति मूर्च्छा–लोभपरिणतिः तया आत्मा मोहमुपनीयते–विवेकात् प्रच्याव्यते, प्रच्युतविवेकश्च प्रतिविशिष्टलोभकषायोपरागादसमञ्जसप्रवृत्तिप्रवणोऽयमात्मा कार्यमकार्यं वा न किञ्चिच्चेतयते, समुपगूढमूढिस्तृष्णापिशाचिकावशीकृतचेतोवृत्तिश्चेष्टतेऽन्धवधिरवदनालोचितगुणदोषः। समुच्छ्रायो वा मूर्च्छा, समुच्छ्रीयते–प्रतिक्षणमुपचीयतेऽयमात्मा लोभोपरागबलानुरञ्जितो हिंसादिदोषैः। अतः सकलदोषाग्रणीर्लोभः। तथा च लुब्धो हिंसादिषु निरारेकं प्रवर्तते। तनयः पितरमपि हिनस्ति, भ्रातरं सहजः, पिताऽऽत्मजं, एवं जामिजननीपत्न्यादयोऽपि वाच्याः। गृहीतोत्कोचश्च कूटसाक्षित्वदायी वह्वनृतं भाषते, बलप्रहर्षात् पथि मुष्णाति पथिकजनं खनति क्षेत्रमपि चौर्यात्। लाभलोभाच्च राजादियोषितमप्यभिगच्छति। सर्वथा न कश्चन भावो बहिरन्तर्वा समासन्नो दूरवर्ती वा मनोहरदर्शनः प्रतिकूलो वा यमयं विजह्याद् भावेन, प्रचुरतरानिष्टसम्पादने लघूनि चोपनीयते दुश्चरितानि लोभभुजङ्गेन। अनेन पथिकृतः परमगौरवायतनेऽपि विषयपरिगार्ध्येन परिस्खलतीति मूर्च्छा लोभ इति। स चापि सर्वैः प्रकारैः। सा च मूर्च्छा लोभलक्षणा अभ्यन्तरबहिर्विषयालम्बना। तत्राभ्यन्तरो विषयः चतुर्दशविधः, तद्यथा—राग-द्वेष-क्रोध-मान-माया-लोभ-मिथ्यादर्शन-हास्य-रत्य-रति-भय-शोक-जुगुप्सा-वेदाख्यः। बहिरपि वास्तुक्षेत्रधनधान्यशय्यासनयानकुप्यद्वित्रिचतुःपाद्भाण्डाख्य इति। एतावान् विषयो मूर्च्छायाश्चेतःपरिणामरूपायाः। एते रागादयः परिग्रहहेतुत्वात् मूर्च्छा, वास्त्वादयश्च ममैवेत्येवमज्ञानाद् विषयीकृताः कालुष्यवंताऽऽत्मनोऽनेकविधजन्मग्रन्थिस्थिरीकरणायापर्यालोचितपूर्वापरभावेन परिग्रहोऽभिधीयते। परिगृह्यत इति परिग्रहः, लोभानुरक्तचित्तवृत्त्या स्वीक्रियत इतियावत्। परिमाणविशेषो

(Margin notes: लोभस्य साम्राज्यम् ; बाह्याभ्यन्तरा मूर्च्छाविषयाः)

---

१ 'लोभपराग' इति ङ-पाठः। २ 'तथा अवलुब्धो' इति ङ-पाठः। ३ 'क्षणमपि चोरयति' इति ग-पाठः। ४ 'गर्धेन' इति ङ-पाठः। ५ 'वत् आत्मना' इति ङ-पाठः।

मूर्च्छा, सैव च परिग्रहसद्भावपरिणामादात्मनो हिंसादिवत् प्रमत्तयोगानुवृत्तिसामर्थ्यात् संक्षेपतो रागद्वेषमोहमूला मूर्च्छा। तद्विरहितस्याप्रमत्तकायवाङ्मनोव्यापारस्य तु संयमोपकारिषूपधिशय्याहारशरीरेष्वागमानुज्ञातेषु न समस्ति मूर्च्छा। यथोक्तम्—

" 'जंपि वत्थं व पायं वा, कंबलं पायपुंछणम्।
तंपि संजमलज्जट्ठा, धारंति परिहरंति य (अ) ॥ १ ॥"
—दशवैकालिके (अ० ६, सू० १८)

न च योग्योपकरणकलापादृते साध्यार्थसिद्धिरस्ति। येऽपि मूढाः पात्रवस्त्रादि आगमोक्तं मुक्तिसाधनमुपकरणमहिंसाव्रतपरिपालनप्रत्यलं न परिगृह्णते तैरपि जघन्यतः शरीराहारशिष्यादिपरिग्रहोऽवश्यंतया कार्य एवेति न परमनालोच्यैवोपालब्धुमर्हन्तीति। अल्पबहुत्वविशेष इति चेदित्यप्यसत्। दरिद्रस्य द्रविणमल्पं महर्द्धिकस्य प्रभूतमिति न दुर्गतोऽपरिग्रह इत्युच्यते। तस्मात् मूर्च्छालक्षण एव परिग्रहः, नेतर इत्यवश्यंतया प्रतिपत्तव्यमवशेनापीति ॥

प्रकृतमुच्यते। मूर्च्छालक्षितपरिग्रहनिर्दिदिक्षया भाष्यकृदाह—

**भा०—चेतनावत्स्वचेतनेषु बाह्याभ्यन्तरेषु द्रव्येषु मूर्च्छा परिग्रहः ॥**

टी०—चेतनावत्स्वित्यादि। चेतना–चैतन्यं–ज्ञानदर्शनोपयोगः स येषु विद्यते ते चेतनावन्तस्तेषु चेतनावत्सु–एकद्वित्रिचतुःपञ्चेन्द्रियेषु अचेतनेषु च–प्रायो वास्त्वादिषु बाह्याभ्यन्तरभेदभाक्षु रागादिषु आत्मपरिणामेषु मूर्च्छा, द्रव्येषु इति विषयनिर्देशात् क्वचित् पुद्गलद्रव्यमेव शुद्धं क्वचिदात्मप्रदेशसंयुक्तमिति। द्रव्यग्रहणाच्चतुर्विधपरिग्रहं सूचयति—क्षेत्रतो ग्रामनगराद्यवच्छिन्न[ता]द्रव्यस्य, कालतो रात्रिंदिवव्यवच्छिन्नता, भावत इति प्रतिविशिष्टवस्तूपलम्भे महार्घे सति अतिशयवती मूर्च्छा प्रजायते मध्ये मध्या जघन्ये जघन्या इति ॥

मूर्च्छायाश्चासंमोहार्थमिच्छादीन् पर्यायानाचष्टे भाष्यकारः—

मूर्च्छायाः पर्यायाः **भा०—इच्छा प्रार्थना कामोऽभिलाषः काङ्क्षा गार्ध्यं मूर्च्छेत्यनर्थान्तरम् ॥ १२ ॥**

टी०—इच्छा–शतधनः सहस्रमिच्छति सहस्रधनो लक्षमिच्छतीत्यादि परम्परया सकलेन त्रैलोक्येनापि न ध्रायति। प्रकर्षेणार्थना प्रार्थना, तन्निष्ठत्वात् विद्यमानकिञ्चनमात्रोऽपि परमेव याचते तृष्णया वशीकृतः। कमनं कामः, यथाप्रधानद्रव्यकामिता, यद् यद् गुणवद् द्रव्यं तत् तदनुरुध्यत इतियावत्। अभिलाषस्तु मानस एव व्यापारः, परर्द्धिदर्शनादाक्षिप्तचित्तवृत्तिर्मनसाऽभिलपति–एवं ममापि यदि भवेयुः सम्पद इति। काङ्क्षणं

१ छाया—
यदपि वस्त्रं वा पात्रं वा कम्बलं पादप्रोञ्छनम्।
तदपि संयमलज्जार्थं धारयन्ति परिभुञ्जते च ॥
२ 'दुर्गतिपरि' इति ङ-पाठः। ३ 'निर्देशः' इति ङ-पाठः। ४ 'चेतोवृत्ति' इति ङ-पाठः।

काङ्क्षा अर्जनमतिपरिणामाविच्छेदः। गृध्यतीति गार्ध्यम्। पचाद्यच्। गर्धो गृद्ध इत्येकोऽर्थः। यथाऽऽमिषार्थी गृद्धो दूरत एवालोक्य चक्षुषा संपतति एवं लोभकषायनिघ्नो यानि यानि द्रव्योत्पत्तिधामानि तेषु सम्पत्य किञ्चिदासादयति। अतो गृद्धस्य भावः कर्म वा गार्ध्यम्। मूर्च्छा प्राग् व्याख्यातैव। अर्थादन्योऽर्थोऽर्थान्तरम्, न अर्थान्तरं अनर्थान्तरम्। सर्व एवायमेवमनर्थकारको लोभकषायकलिर्विजृम्भते, न कश्चिद् भेद इति ॥ १२ ॥

भा०—अत्राह—गृह्णीमस्तावद् व्रतानि। अथ व्रती क इति?। अत्रोच्यते-

टी०—अत्राहेत्यादिना सम्बन्धमुपपादयति। अत्र-अहिंसादिलक्षणपरिसमाप्त्यवसरे पर आह-गृह्णीमस्तावदित्यादि। गृह्णीम इत्यवगच्छामः। इह हिंसादिविरतयो व्रतानीति। तावच्छब्दः क्रमावद्योतनार्थः। क्रमश्चायम्-प्राग् व्रतपरिज्ञानं, पश्चात् तत्सम्बन्धमात्रादेव किं व्रतित्वम्। अथ(च) प्रतिविशिष्टसम्बन्धाद् व्रतित्वमिति सन्दिहानस्य प्रश्नः॥ ननु च यस्योक्तलक्षणानि व्रतानि सन्ति स व्रती, किमास्पदः सन्देहः? उच्यते-विशिष्ट एव सम्बन्धे व्रतित्वम्। नात्र मत्वर्थीयः सम्बन्धसामान्यमात्रविवक्षायाम्। किं तर्हि?, [किं]विशिष्टस्य सम्बन्धिनो व्रताभिसम्बन्धाद् व्रतित्वम्। तथाचाह—

"भूमनिन्दाप्रशंसासु, नित्ययोगेऽतिशायने।
संसर्गेऽस्तिविवक्षायां, भवन्ति मतुबादयः॥ १॥"

इति प्रशंसायामिनिः प्रत्ययो भूमार्थेऽतिशायने वा। तत्र प्रशंसार्थे मिथ्यादर्शननिदानमायाशल्यादिरहितत्वात् प्रशस्तस्य सम्बन्धिनो व्रताभिसम्बन्धाद् व्रतित्वम्, अतिशायनार्थेऽपि अयमेव मिथ्यादर्शनाद्यपगमात् प्रकृष्टस्य सम्बन्धिनो व्रताभिसम्बन्धाद् व्रतित्वम्, भूमार्थेऽपि पूर्वोक्तभावनाभिः स्थिरीकृतचेतसोऽपायावद्यदर्शिनो विचक्षणस्य सर्वसंसारिक्रियाकलापदुःखबुद्ध्या निरुत्सुकविषयकुतूहलस्य मैत्रीप्रमोदकारुण्यमाध्यस्थ्यप्रणिधानापादितसौहार्दस्य जन्ममरणपरिखेदितमतेरवलोकितशरीरस्वभावस्य मुक्तिं प्रत्यवहितचेतसो मायानिदानमिथ्यादर्शनशल्यशून्यस्य व्रताभिसम्बन्धाद् व्रतित्वमिति चेतसि सन्निवेश्य आचार्यः अत्रोच्यत इत्याह।

व्रतव्रतिनोः सम्बन्धः

## सूत्रम्—निःशल्यो व्रती ॥ ७-१३ ॥

टी०—शलतीति शल्यम्। औणादिको यप्रत्ययः। अन्तर्भिनत्ति कायादि, तच्चावतिष्ठमानं वपुषि बलारोग्यपरिहाणिमापादयति शरीरिणः, तद्वन्मायानिदानमिथ्यात्वानि अन्तर्गतानि वर्तमानानि संयमस्वरूपभेदित्वादनारोग्यमात्मनः क्लेशज्वरलक्षणं ज्ञानावरणवीर्यहानिं च विदधतीत्येतद् शल्यानीव शल्यानि। निष्क्रान्तः शल्येभ्यो निःशल्यः प्राणातिपातादि-

१ 'गार्धः' इति ङ-पाठः। २ इदं पद्यं दृश्यते सिद्धान्तकौमुद्यां ( पा० अ० ५, पा० २, सू० ९४ )।

विरतियुक्तो व्रती भवति, न शल्यवानिति-शल्यवतो व्रतित्वं नास्ति इति सूत्रार्थः । न चात्र विकल्पः समुच्चयो वा वाक्यार्थः । विकल्पस्तावन्न भवति-निःशल्यो वा व्रती वेति । यतः समानफलानां विकल्पेन प्रवृत्तिरिन्द्रियादिशब्दवत्, अभिधेयाभेदश्चानयोर्निःशल्यव्रतिशब्दयोरतो न विकल्पः । नापि समुच्चयः, समुच्चये हि कालभेदो दृश्यते । अहरहर्नीयमान इत्यादौ तथेहाप्यन्यस्मिन् काले निःशल्योऽन्यत्र काले व्रती स्यात् । अनिष्टं चैतत् । इष्यते चैककालेन तदुभयम्, अतोऽङ्गाङ्गिभावोऽत्राश्रीयते । निःशल्यताऽङ्गम्, अङ्गी व्रतीति । वाक्यार्थश्चायम्-न हिंसादिविरमणमात्रसम्बन्धाद् व्रतीति, किं तर्हि ? शल्यापगमे सति व्रतसम्बन्धित्वाद् व्रती, बहुक्षीरघृतो गोमानिति यथा, तदभावे सतीष्वपि गोषु न गोमानित्यभिप्रायः । प्रधानानुविधायी च गुणो भवतीत्यप्रधानमङ्गी व्रती, निःशल्यता गुणो प्रधानमिति । तस्मादङ्गाङ्गिभावाभ्युपगमाददोष इति । आह च—

वाक्यार्थविचारः

" निःशल्यस्यैव पुनः, सर्वं व्रतमिष्यतेऽर्हतां लोके ।
उपहन्यते व्रतं खलु, निदानमिथ्यात्वमायाभिः ॥ १ ॥"-आर्या

एनमेवार्थं भाष्येण प्रतिपादयति—

भा०—मायानिदानमिथ्यादर्शनशल्यैस्त्रिभिर्वियुक्तो निःशल्यो व्रती भवति । व्रतान्यस्य सन्तीति व्रती । तदेवं निःशल्यो व्रतवान् व्रती भवतीति ॥ १३ ॥

टी०—मायेत्यादिना । माया शाठ्यम् उपधिः छद्म कषायविशेषः । शल्यशब्दः प्रत्येकमभिसम्बध्यते-मायाशल्यं निदानशल्यं मिथ्यादर्शनशल्यमिति । मिमीते परानिति माया, स्वेन शाठ्येन परेषां सारासारप्रमाणमादत्त इति इयन्त एत इति सुखसाध्या गृहीतहृदयावष्टम्भानवष्टम्भाः । निदायते-लूयतेऽनेनेति निदानं-अध्यवसायविशेषः-देवेश्वरचक्रवर्तिकेशवादीनामृद्धीर्विलोक्य तदीययोषितां वा सौभाग्यगुणसम्पदमार्तध्यानाभिमुखीकृतमहामोहपाशसंभृतभूरितपाश्चिन्तापरिखेदितमानसोऽध्यवस्यति ममाप्यमुष्य तपसः प्रभावादेवंविधा एव भोगा भवेयुर्जन्मान्तरे सौभाग्यादिगुणयोगश्चेत्येवं निदानी लुनाति-क्षुद्रत्वाच्छिनत्ति मोक्षं सुखमिति । तच्च शल्यं महदन्तर्व्यवस्थितमनेकेन शारीरेण मानसेन च दुःखेन योजयत्यात्मानम्, अतिभूरिभूतोपमर्दनाद् बह्वारम्भपरिग्रहत्वादिदोषोपपत्तेश्चेति । तत्त्वार्थाश्रद्धानं मिथ्यादर्शनमभिगृहीतानभिगृहीतसन्देहभेदात् त्रिधा । तदेव शल्यं व्याघ्राग्निविषसमुद्रव्याधिकुपितनृपतिशत्रुवर्गादप्यधिकभयकारि, जन्मान्तरशतसहस्रेष्वागामिष्वविच्छिन्नदुःखसन्तानकसङ्कटप्रपातकारित्वात्, संसारसागरपरिभ्रमणमूलकारणमशेषापायप्रसवमार्जवर्जवीभावविधायि गूढकर्मग्रन्थिविजृम्भमाणदुश्चिकित्सकविपाकमात्मसात्करोति सर्वशल्यातिशायि मिथ्यादर्शनशल्यम्, एवमे-

१ 'नैयमान' इति ङ-पाठः । २ 'सम्बन्धात्' इति ङ-पाठः । ३ 'मार्जवं जवीभाव०' इति क-ख-पाठः ।

भिर्मायादिशल्यैस्त्रिभिरिति त्रीण्येव शल्यानि तैर्वियुक्तोऽन्तर्विशुद्धिप्रशस्त्यान्निःशल्यो व्रती भवतीति। तदेतदनेन प्रतिपादयति—अन्तर्विशुद्धस्य मार्गवर्तिनो यथाशक्ति क्रियानुष्ठायिनः सम्यक्त्वार्जनादिभावतः सम्पूर्णव्रतित्वमिति। व्रतविशुद्धेश्च भाविन्यन्तर्विशुद्धिरिति ॥ ननु च कषायाः कोपादयः सर्वे एव सशल्यं मायामेकां निःकृष्य किमिति शल्यतया नियम्यत इति ?। उच्यते—एषा हि लब्धात्मलाभा तिरोधाय कोपादीन् ततोऽप्यात्मसामर्थ्येन वर्तते भुजङ्गीवोपचितविषा छलशतैर्निर्दयं दशति तथा नास्याः कश्चित् साधुवर्गादृते सुकुशलोऽपि विपवेगं निरुणद्धि, अतः सकलदोषजातप्रच्छादननिपुणा कुलटेव मायैव शल्यं, न शेषाः कषाया इति प्रधानत्वात् तन्मूलत्वाच्च मायाशल्यग्रहणम्। अतः शल्यरहितो व्रतीति स्फुटमिदम्। आह च—

" निःशल्यस्यैव पुनः, सर्वं व्रतमिष्यतेऽर्हतां लोके।
उपहन्यते व्रतं खलु, निदानमिथ्यात्वमायाभिः ॥ १ ॥"

निःशल्यतापूर्वकं व्रतित्वमिति प्रदर्शयन्नाह—व्रतान्यस्य सन्तीति व्रती। व्रतानि[4] हिंसाविरमणादीनि तानि, व्रतित्वमश्नुवते निःशल्यता आधार इति प्रागभिहितं भूमप्रशंसातिशायनेषु मत्वर्थीयप्रत्ययविधानात् व्रतीति। तदेवमित्यादिना भाष्येण निगमयति प्रकृतमर्थम्—निःशल्यो व्रतवान् व्रती भवतीति। निःशल्यस्यैव व्रतित्वं, न सशल्यस्येति। उक्तमप्यर्थं भूय आदराभिधानार्थमभिधत्ते मतुविनोश्च समावेशार्थं व्रती व्रतवानित्येकोऽर्थ इति ॥ १३ ॥

सूत्रसम्बन्धो मुक्तक एव किमेष व्रती व्यपगतशल्यत्रयो हिंसाद्यभावात् यथोक्तक्रियासमूहविजृम्भितपरिणामः परित्यक्तगृहस्थव्यापारः सर्वं एवागारसम्बन्धेष्वतिनिवृत्तौत्सुक्यः प्रतिज्ञायते, उताविरतोऽपि सर्वतः कश्चिद् गृही निश्चीयत इति ?। अत्रोच्यते—सामान्येन व्रतिनो लक्षणमभिधाय एषामेवाहिंसादीनां सकलविरतिविशेषादधिकृतो द्वेधा भवति—

## सूत्रम्—अगार्यनगारश्च ॥ ७-१४ ॥

टी०—अगारं—वेश्म तदुपलक्षणमारम्भपरिग्रहवत्तायाः, आरम्भः सूनापञ्चकं पृथिव्यादिजीवकायोपमर्दहेतुः, परिग्रहश्चेतनाचेतनो द्विपदचतुष्पदादिर्धान्यहिरण्यकनकमणिमुक्ताप्रवालादिः। एवं द्वयमप्यगारशब्देनोपलक्ष्यते। तदेतावारम्भपरिग्रहावगारं यथासम्भवमस्ति यस्य भविष्यतीति वा जाताशंसस्यापरित्यक्ततत्सम्बन्धस्य सर्वोऽप्यगारी तदभिसम्बन्धाद् गृहस्थ इत्यर्थः। परित्यक्तारम्भपरिग्रहो भवेत् तद्विपरीतोऽनगारः—प्रतिपन्नमूलोत्तरगुणकलापः। चशब्दादगारिणोऽनगारस्य च बहुभेदत्वं प्रतिपादयिषितमिति। अ-

१ 'अन्तर्विशुद्धेश्च' इति ङ-पाठः। २ 'कोपात् सतोऽपि' इति ङ-पाठः। ३ 'तथाप्यद्धा' इति ङ-पाठः। ४ 'वति निःशल्य आधार' इति क-ख-पाठः।

गारिणस्तावद् द्विविधाः—सम्यग्दर्शनसम्पन्नत्वे सति गृहीताणुव्रताः प्रतिपन्नोत्तरगुणाश्च, अपरे सम्यग्दर्शनमात्रभाजो वक्ष्यमाणाः षड्विकल्पाः, सम्यक्त्वोत्तरगुणप्रतिपत्ती चाष्टौ विकल्पाः। तथा द्वात्रिंशद् विकल्पाः। तत्र ये गृहीताणुव्रतास्तैरणुव्रतानि षड्भिः प्रकारैरात्तानि—द्विविधं त्रिविधेन, द्विविधं द्विविधेन, द्विविधमेकविधेन, एकविधं त्रिविधेन, एकविधं द्विविधेन, एकविधमेकविधेनेति एकैकस्मिन्नणुव्रते षड् विकल्पाः। षट् पञ्चकास्त्रिंशत् प्रतिपन्नोत्तरगुणेन सहैकत्रिंशत् सम्यग्दर्शनेन सह द्वात्रिंशत् ॥ ननु च नव विकल्पास्त्रिविधं त्रिविधेनेत्यादयः सप्तचत्वारिंशदुत्तरशतभेदनिष्पत्तेः ? सत्यं, सम्भवन्ति साधोः, न त्वगारिणः, सर्वसावद्ययोगप्रत्याख्यानप्रस्तावाभिधानाद्, विशिष्टविषयं तत्, सर्वसावद्यव्यापारप्रत्याख्यानं अनुमतेःसम्भवान्नास्ति गेहिनः, तत्पूर्वप्रयुक्तसावद्यकर्मारम्भानुमतिमपहायैवासौ शेषं प्रत्याचष्टे इति। अत एव निर्युक्तिकारेण[1] षड्विधो विकल्प उपन्यस्तः—द्विविधं त्रिविधेनेत्यादि। द्विविधमिति न करोमि न कारयामि। त्रिविधेनेति मनोवाक्कायत्रयेण। एवं शेषविकल्पा अपि भाव्याः। त्रिविधं त्रिविधेनेत्यादिषु च त्रिषु विकल्पेषु सहानुमत्या करणत्रयमितीत्युक्तं निर्युक्तिकारेण ॥ ननु च भगवत्यादावागमे—त्रिविधं त्रिविधेनेत्यपि विकल्पोऽस्ति प्रत्याख्यानमगारिणो भगवतीश्रुतप्रतिबद्धं च तदेव तन्निर्युक्तिकारमतविघातकारि। उच्यते—नास्ति विघातः, उत्सर्गापवादद्वारेण प्रवृत्तेः। द्विविधं त्रिविधेनेत्यादिरुत्सर्गः, सर्वस्यागारिण एभिः षड्भिर्विकल्पैः सर्वमेव प्रत्याख्यानं प्राप्तमापाद्यते, क्वचिद् विषये यः किल प्रविव्रजिषुः प्रतिमां प्रतिपद्यते पुत्रादिसन्ततिपरिपालनार्थं[2] तस्यैष संगच्छते[3] विकल्पः। अथवाऽल्पाल्पं विशेष्य किञ्चिद् वस्तु यदि त्रिविधं त्रिविधेन प्रत्याचक्षीत स्वयम्भूरमणमत्स्यादिकमेवमप्युपपद्यते स्थूलप्राणातिपातादिविषयं वा, न सकलसावद्यव्यापारविषयमिति ॥ ननु च निर्युक्तिकारेण स्थूलप्राणातिपातादिविषयत्वेनोपन्यस्तः (किमिति) त्रि(द्वि)विधं त्रिविधेनेत्यादिर्विकल्पः ?। सत्यमेतत्, उत्सर्ग एव बहुलप्रसिद्धत्वान्निर्युक्तिकारेणावाचि। यत् पुनः क्वचिदवस्थाविशेषे कदाचिदेव समाचर्यते न सुष्ठु समाचारानुपाति तन्नोक्तं, द्विविधसूत्रेषु च विविधमेव भूयसा दृश्यत इति न कश्चिद् दोषः ॥ प्रकृतमुच्यते। भूयोऽगारिणां भेदाः—

> “ सोलॅस चेव सहस्सा, अट्ठेव सया हवंति अट्ठहिया।
> एसो उवासयाणं, वयगहणविहा समासेण ॥ १ ॥ ”—आर्या
>
> —आवश्यकवृत्तौ

अगारिणां भेदाः

---

१ श्रीभद्रबाहुस्वामिना। २ ‘ पालनाय ’ इति ङ-पाठः। ३ ‘ चलते ’ इति ङ-पाठः।

४ छाया—

षोडश चैव सहस्राणि अष्टैव शतानि भवन्ति अष्टाधिकानि।
एष उपासकानां व्रतग्रहणविधिः समासेन ॥

अनगारभेदास्तु गच्छवासिनो गच्छनिर्गताश्च, आचार्यादिभेदात् पञ्चधा गच्छवासिनः पुनः पुरुषाः, साध्व्योऽपि प्रवर्तिन्यादिभेदात् पञ्चधैव सदा च गच्छवासिन्य एवैताः, गच्छनिर्गताः पुनर्जिनकल्पिकपरिहारविशुद्धिप्रतिमाप्रतिपन्नकादयः। अत्र गच्छवास्यादिषु नास्ति व्रतभेदः। सामाचारीकृतस्तु महान् विशेषोऽस्तीति तदाश्रयो भेदः सूत्रकारेणाविवक्षित इति। अधुना भाष्येण सूत्रार्थं स्पष्टीकुर्वन्नाह—

अनगारभेदाः

**भा०—स एष व्रती द्विविधो भवतीति–अगारी अनगारश्च। श्रावकः श्रमणश्चेत्यर्थः॥ १४॥**

टी०—स एष व्रतीत्यादि। अनन्तरसूत्रार्थेन सहामुं सूत्रार्थमनुसन्धत्ते। योऽयमनन्तरसूत्रे निःशल्यो व्रतीत्याख्यातः सामान्येन स एष व्रती द्विविधो–द्विप्रकार एव मूलभेदतो भवति। मौलभेदद्वयनिर्दिदिक्षया चाह—अगारी अनगारश्चेति। अगारमस्यास्तीत्यगारी, परिग्रहारम्भवान् गृहस्थ इत्यर्थः। अविद्यमानोऽगारोऽनगारः, परित्यक्तारम्भपरिग्रह इत्यर्थः। एतयोरेव पर्यायकथनेन व्याख्यानं तनोति—श्रावकः श्रमणश्चेत्यर्थः। अभ्युपेतसम्यक्त्वः प्रतिपन्नाणुव्रतोऽपि प्रतिदिवसं यतिभ्यः सकाशात् साधूनामगारिणां च सामाचारीं शृणोतीति श्रावकः। श्राम्यतीति श्रमणः। "कृत्यल्युटो बहुलं" ( पा० अ० ३, पा० ३, सू० ११३ ) इति वचनात् कर्तरि ल्युट्। श्राम्यति–तपश्चरति प्रव्रज्यादिवसादारभ्य सकलसावद्ययोगविरतो गुरूपदेशात् स्वाध्यायादिकं यथाशक्ति समाचरत्याप्राणपरिक्षयादिति। एवं च श्रावकोऽगारी श्रमणश्चानगार इति प्रसिद्धाभ्यामत्यन्तं पर्यायशब्दाभ्यामगारिसामान्यं अनगारिसामान्यं च व्यवच्छिन्नं दर्शितमिति॥ १४॥

श्रावकश्रमणशब्दार्थः

अत्राहेत्यादिना सम्बध्नाति—

**भा०—अत्राह–कोऽनयोः प्रतिविशेष इति? । अत्रोच्यते—**

टी०—अगार्यनगारश्च व्रती भवतीत्युक्ते अत्र परः प्रश्नयति–कोऽनयोरगार्यनगारिणोर्व्रतिनोः प्रतिविशेषो–वृत्तिविशेष इति। प्रतिविशेषो भेद इत्यर्थः। आचार्यस्तु तं विशेषमभिधातुकामः अत्रोच्यते इत्याह। योऽनयोर्विशेषः सोऽभिधीयते—

## सूत्रम्—अणुव्रतोऽगारी॥ ७–१५॥

टी०—महाव्रतापेक्षया अणु स्तोकं अल्पं देश इति पर्यायाः। महाव्रतानि सर्वपापमेदविरतिलक्षणानि। सर्वस्मात् प्राणातिपातात् विरमामीत्यादि। अयं तु न सर्वतो विरतिमातिष्ठते,

---

१ 'भवति' इति घ-पाठः।

किं तर्हि ? कुतश्चिदेव प्राणिघातात् । यत एकेन्द्रियाः पृथिव्यादिकायाः पञ्च प्रायो दुष्परिहाराः सद्मवासिनाम् । स्थूलाश्च द्वित्रिचतुःपञ्चेन्द्रियाः । स्थूलत्वं सकललौकिकजीवत्वप्रसिद्धेः सूक्ष्मत्वं विगानेन जीवत्वप्रसिद्धेर्लोके । तत्रापि सङ्कल्पजं प्राणातिपातं प्रत्याख्याति, न आरम्भजम् । आरम्भो हि हलदन्तालखननस्नानपञ्चकप्रकारः । तत्रावश्यंतयैव गण्डूपदकपिपीलिकाधान्यगृहकारिकामण्डूकादयः संघट्टपरितापापद्रवणक्रियाभिः स्पृश्यन्ते । तस्मान्न समस्ति प्रत्याख्यानं तद्विषयम् । संकल्पजस्य तु संभवति, मनसा संकल्प्य द्वीन्द्रियादिप्राणिनो मांसास्थिचर्मनखवालदन्ताद्यर्थं न हन्मीति, असुमतो निवर्तते सङ्कल्पकृतात् प्राणातिपातात् । न करोमि न कारयामि मनसा वाचा कायेनेत्येवंविषयं प्राणातिपातमित्यादिविकल्पानामन्यतमेन प्रत्याचष्टे । तथा मृषावादान्न सर्वस्माद्, किं तर्हि ? स्थूलाद् भिन्नकन्यकां सतीमेवं भूमिं (उपरभूमिं) अल्पक्षीरामेव गां बहुक्षीरां नाभिदधेऽहमित्यादिकात् । तथा कूटसाक्षित्वदानादेश्च व्यावर्तते, न पुनः स्नेहद्वेषमोहाभिभवाद् विपरीतभाषी भवति । प्रत्याख्यानविधिस्तु पूर्ववत् । तथा अदत्तादानाच्च सर्वस्मात्, किन्तु स्थूलात्, चौर्यारोपणहेतुत्वेन प्रसिद्धाद् द्विपदचतुष्पदाऽपदविषयान्निवर्तते, न पुनः अल्पतृणेन्धनगोमयादिग्रहणात् । प्रत्याख्यानं पूर्ववत् । तथा मैथुनाद् न सर्वस्मात्, किन्तु स्थूलात्; स्थूलं च परदारगमनं, तद्विषयं[1]मस्य प्रत्याख्यानं, अन्यपक्षे न । प्रत्याख्यानविधिः ( च ) पूर्ववत् । तथेच्छापरिमाणं प्रतिजानीते, अन्यतः परिग्रहात् विरमति सचित्तादेः स्थूलात्, स्थूलाच्चापरिमाणतः सर्वेषां क्षेत्रवास्त्वादीनामभिलषितपरिमाणव्यतिरेकं प्रत्याचष्टे । कालनियमेन भक्तवस्त्रभृत्यदारादीनामेतावता मम कार्यमिति । शेषात् प्रत्याख्यानं, तद्विधिश्च पूर्ववत् । एवमेतानि पञ्चाप्यणूनि—स्वल्पविषयाणि न यथोक्तसमस्तविषयाणि व्रतानि यस्य सोऽणुव्रतोऽगारी व्रती भवतीति ॥ ननु च सोऽणुव्रत इत्येवं सूत्रं कार्यम् । उच्यते—सत्यमेवमनगारिव्रतपरामर्शः स्यात् तच्छब्देन, " अनन्तरस्य विधिः ( वा भवति ) प्रतिषेधो वा " इति (परिभाषे०)वचनात् । अगारिणश्च महाव्रतधारित्वप्रसङ्गः । तच्चासमीचीनम् । अथ द्वयमभिसम्बध्यते अगार्यनगारश्च सोऽणुव्रतो भवतीति सुतरां महाव्रतानि निराधाराणि स्युः । अतोऽगारिग्रहणं कार्यं, न कार्यं महदित्यनेन शब्देन विशेषितानि तु तानि व्रतानि यस्य सोऽनगारो महाव्रतीत्यु(पयु)क्तत्वात्, पारिशेष्यादगार्येव संभन्त्स्यते सोऽणुव्रत इति । एवं तर्ह्यधिकारार्थमगारिग्रहणम् । इतः प्रभृति यद् वक्ष्यते तत् सर्वमगारिणो भवति आ अध्यायपरिसमाप्तेरिति ॥

सम्प्रति भाष्यमुक्तार्थानुसारेणाश्रीयते—

भा०—अणून्यस्य व्रतानीत्यणुव्रतः । तदेवमणुव्रतधरः श्रावकोऽगारी भवति ॥ १५ ॥ किञ्चान्यत्—

---

१ ' तद्विपर्यय ' इति ट-पाठः । २ ' क्षीरानेवगामदधे ' इति ग-पाठः । ३ ' यमस्य प्रत्याख्यान्यक्षेण प्रत्या० ' इति ङ-पाठः । ४ ' व्रती भवति ' इति घ-पाठः ।

टी०—अणून्यस्य व्रतानीत्यणुव्रत इत्यादि वृत्त्याऽर्थं दर्शयति अनेन बहुव्रीहिवाक्येन । अणूनि देशविषयाणि न समस्तविषयाणीति प्रतिपादयति । अस्येत्यन्यपदार्थप्राधान्यख्यापनम् । व्रतशब्दः प्राग् व्याख्यातो निवृत्तिपर्यायः । तदेवमित्यादिना निगमयति सामान्यार्थेन शब्देनानेकभेदसङ्ग्राहिणा । यत्तदोर्नित्यसम्बन्धात् यस्मादणूनि व्रतान्यस्य तस्मादेवम्–उक्तेन प्रकारेणाणुव्रतधरः प्रतिपन्नाणुव्रत इति । धरणं यथागृहीतव्रताविस्मरणं वक्ष्यमाणातीचारपरिहारेण चानुपालनम् । अत एवंविधः श्रावक इति अगारी व्रती च भवति । पर्यायकथनं चेदं भेदबहुत्वप्रतिपादनार्थम् । एकादशोपासकभेदाः सम्यग्दर्शनप्रभृतयः सकलश्रावकभेदाधारभूता इति । आगमश्च—

"[1]दंसणवयसामाइयपोसहपडिमाअबंभसचित्ते ।
आरंभपेसउद्दिट्ठवज्जए समणभूए य ॥ १ ॥"

—आवश्यकवृत्तौ ( पत्रा० ६४६ )

दर्शनप्रतिपत्तेरारभ्य स्वशक्त्यपेक्षया व्रतधारणादिष्वध्यवसायक्रियाविशेषेषु प्रवर्तते प्रवर्धमानश्रद्धः श्रमणभूतान्तेषु स्थानेष्वित्येवमणुव्रतोऽगारी व्रती भवतीति ॥ १५ ॥

किञ्चान्यदित्यनेन प्रस्तुतस्यार्थस्य सम्बन्धं कथयति, गृहीतमिदमुक्तलक्षणान्यणुव्रतानि धारयति गृहीति । किञ्चान्यत् प्रतिपाद्यते( ? आह )—

गुणशिक्षाव्रताधिकारः

**सूत्रम्—दिग्देशानर्थदण्डविरतिसामायिकपौषधोपवासोपभोगपरिभोगपरिमाणातिथिसंविभागव्रतसम्पन्नश्च ॥ ७–१६ ॥**

टी०—कृतद्वन्द्वा दिगादयस्तैः सम्पन्नः–समृद्धः संयुक्तः । चशब्दः समुच्चयवचनः । शीलं च प्रतिपन्नाणुव्रतस्यागारिणस्तेषामेवाणुव्रतानां दार्ढ्योपादनाय शीलोपदेशः । शीलं च गुणशिक्षाव्रतम् । तत्र गुणव्रतानि त्रीणि–दिग्भोगपरिभोगपरिमाणानर्थदण्डविरतिसंज्ञान्यणुव्रतानां भावनाभूतानि । यथाऽणुव्रतानि तथा गुणव्रतान्यपि सकृद् गृहीतानि यावज्जीवं भावनीयानि । शिक्षापदव्रतानि–सामायिकदेशावकाशिकपौषधोपवासातिथिसंविभागाख्यानि चत्वारि । प्रतिदिवसमनुष्ठेये द्वे सामायिकदेशावकाशिके, पुनः पुनरुच्चार्येते इतियावत् । पौषधोपवासातिथिसंविभागौ तु प्रतिनियतदिवसानुष्ठेयौ, न प्रतिदिवससमाचरणीयौ, पुनः पुनरष्टम्यादितिथिष्वनुष्ठीयेते इति, शिक्षा-अभ्यासस्तस्याः पदानि-स्थानानि अभ्यासविषयस्ता-

१ छाया—
दर्शनव्रतसामायिकपौषधप्रतिमाऽब्रह्मसचित्तानि ।
आरम्भप्रेष्योद्दिष्टवर्जकः श्रमणभूतश्च ॥

२ 'म्यादिपर्वतिथि०' इति ग-पाठः ।

न्येव व्रतानि शिक्षापदव्रतानीति। गुणव्रतानि तु न प्रतिदिवसग्राह्याणि, किन्तु सकृद्ग्रहणान्येव। गुण्यन्ते-संख्यायन्त इति गुणा दिगादयः। दिशोऽपरिमाणाः पूर्वादिका दश, तासामिष्टसंख्यावच्छेदेन परतः प्रत्याख्यानमातिष्ठते। एवमुपभोगपरिभोगं परिमितसंख्यया परिमाणेऽवस्थापयति। शेषं प्रत्याचष्टे। तथाऽनर्थदण्डमुपभोगमात्रव्यतिरिक्तस्य सकलस्य निवृत्तिमभ्युपैति, परिगणयतो गुणव्रतसंख्या, एवमेतानि शिक्षाव्रतादीनि देशकालावस्थापेक्षाणि शीलमुत्तरगुणाख्यानि अणुव्रतपरिवृद्ध्यर्थमेव भावनीयानीति ॥

दिग्व्रतव्याख्या

भा०—एभिश्च दिग्व्रतादिभिरुत्तरव्रतैः सम्पन्नोऽगारी व्रती भवति। तत्र दिग्व्रतं नाम तिर्यगूर्ध्वमधो दशानां दिशां यथाशक्ति गमनपरिमाणाभिग्रहः ॥

टी०—एभिश्चेत्यादि भाष्यम्। एभिरिति दिगादिव्रतैः। आदिग्रहणात् शिक्षापदव्रतैः चशब्दादणुव्रतैश्च सम्पन्नोऽगारी व्रती भवतीति। कानि पुनस्तानि दिगादिव्रतानीत्याह—तत्र दिग्व्रतं नामेत्यादि। तत्र-तेषूत्तरगुणेषु सप्तसु दिग्व्रतं नाम, दिशोऽनेकप्रकाराः शास्त्रेऽभिहिताः। तत्र सूर्योपलक्षिता पूर्वा शेषाश्च पूर्वदक्षिणादिकाः तदनुक्रमेण, दिशां सम्बन्धि दिक्षु वा व्रतम्-एतावत्सु पूर्वादिदिग्भागेषु मया गमनाद्यनुष्ठेयं, न परत इति। नामशब्दो वाक्यालङ्कारार्थः। एतदेव स्पष्टतरं विवृणोति—तिर्यगूर्ध्वमित्यादिना। तिर्यगिति पूर्वादिका दिशोऽष्टौ निर्दिष्टाः, ऊर्ध्वमिति नवमी दिक्, अध इति दशमी। एवमासां दशानां दिशां यथाशक्ति गमनपरिमाणाभिग्रह इति। यथाशक्तीति यथासामर्थ्यं कायापेक्षया गमिक्रियादिपरिमाणम्-एतावती दिक् पूर्वेणावगाहनीया, एतावती च पूर्वदक्षिणेनेत्यादि। अभिग्रहोऽभिमुखं ग्रहणम्। आभिमुख्यं तु निश्चित्य ज्ञानेन गुणदोषाविति गृह्णाति।

ततः को गुणोऽवाप्यत इत्याह—

भा०—तत्परतश्च सर्वभूतेष्वर्थतोऽनर्थतश्च सर्वसावद्य(योग)निक्षेपः ॥

टी०—तत्परतश्चेत्यादि। गुणमुपदर्शयति प्रष्टुः। चशब्दः क्रमावद्योतनार्थः। तस्माद्-गमनपरिमाणात् परतः सर्वभूतेषु-स्थावरजङ्गमाख्येषु पृथिव्यादिद्वीन्द्रियादिषु अर्थः-प्रयोजनमतिशयोपकारि, सत्यपि तस्मिन् न तत्र गमनाद्यनुतिष्ठति, अतस्तत्रत्यभूतानामनुपमर्दः। अर्थेनोऽनर्थतश्चेति। चशब्दः समुच्चये। अनर्थोऽप्रयोजनं विना प्रयोजनेन भूखननोल्लिखनजलावगाहवनस्पतिच्छेदकृकलासादिव्यापादनादिरनेकविधः। स एष सर्वः

---

१ 'पातः' इति ङ-पाठः। २ 'मधो वा दशानां' इति घ-पाठः। ३ 'शक्तिपरिणामां' इति ङ-पाठः। ४ 'शयोपकारि' इति ङ-पाठः।

सावद्यः–सपापो योगो–व्यापारः कायादिकः तेन चैवंपरिमाणात् परतो निवृत्तेन निक्षिप्तो–निरस्तो भवतीति महती गुणावाप्तिः ॥

सम्प्रति क्रमनिर्दिष्टं देशव्रतमुच्यते–अत्राह—वक्ष्यति भवान् देशव्रतम् । पारमार्षवचनक्रमः कैमर्थ्याद् भिन्नः सूत्रकारेण ? । आर्षे तु गुणव्रतानि क्रमेणादिश्य शिक्षाव्रतान्युपदिष्टानि, सूत्रकारेण त्वन्यथा । तत्रायमभिप्रायः–पूर्वतो योजनशतपरिमितं गमनमभिगृहीतम् । न चास्ति सम्भवो यत् प्रतिदिवसं तावती दिगवगाह्या, ततस्तदनन्तरमेवोपदिष्टं देशव्रतमिति देशे–भागेऽवस्थानं प्रतिदिनं प्रतिप्रहरं प्रतिक्षणमिति देशव्रतमिति सुखावबोधार्थमन्यथा क्रमः ॥

क्रमभेदे हेतुः

सम्प्रति भाष्येण स्पष्टयत्येनमेवार्थम्—

देशव्रतव्याख्या

भा०—देशव्रतं नाम अपवरकगृहग्रामसीमादिषु यथाशक्ति प्रविचाराय परिमाणाभिग्रहः । तत्परतश्च सर्वसावद्ययोगनिक्षेपः ॥

टी०—देशव्रतं नामेत्यादि । दिक्परिमाणस्यैकदेशो देशः तद्विषयं व्रतं देशव्रतं–देशनियमः । तच्च प्रयोजनापेक्षमेकादिदिकं सर्वदिकं वा । नामशब्दो वाक्यभूषार्थः । देशनिरूपणार्थमाह—अपवरकेत्यादि । अपवरको विशिष्ट एव गृहैकदेशः तत्रैव नियमः–प्रदोषादिकाले आ प्रभातसमयादर्वाक् न मया निर्गन्तव्यमस्मुतो देशाद् अन्यत्रानाभोगादिभ्य इति । एवं कुड्यमर्यादावच्छिन्नाद् गृहात्[1] तथा वृत्तिपरिक्षेपावच्छिन्नाद् ग्रामात् सीमावच्छेदाच्च । आदिग्रहणं नगरखेटखर्वट[2]विषयखण्डजनपदार्थम् । एतच्च प्रदर्शनमात्रम् । एवं च यत्र[3] देशे यावन्तं कालमिच्छति स्थातुं विहर्तुं च तत्र विवक्षितदेशात् परतो निवृत्तिरित्येवमस्यैवार्थस्य प्रतिपादनार्थमिदमाह—यथाशक्तीत्यादि । यथाशक्तीति करणापेक्षया यावति देशे प्रविचारो–गमनादिक्रिया समस्ति गृहिणस्तदर्थः परिमाणाभिग्रहः प्रविचारनियमार्थ इतियावत् । ततश्च तत्परतः प्रविचारजनितः स्थूलसूक्ष्म[4]भूतग्रामोपमर्दपरिहारः कृतो भवतीति दर्शयति—तत्परतश्चेत्यादिना प्राग् व्याख्यातार्थमेतद् भाष्यमिति ॥

अनर्थदण्डव्याख्या

भा०—अनर्थदण्डो नाम उपभोगपरिभोगावस्यागारिणो व्रतिनोऽर्थः । तद्व्यतिरिक्तोऽनर्थः । तदर्थो दण्डोऽनर्थदण्डः । तद्विरतिर्व्रतम् ॥

---

१ 'गेहात्' इति ग-पाठः । २ 'कर्पट' इति ङ-पाठः, 'कर्बट' इति तु क-पाठः । ३ 'वा तत्र' इति ङ-पाठः । ४ 'सूक्ष्मस्थूलभूत' इति ङ-पाठः ।

टी०—अनर्थदण्डो नामेत्यादि । अर्थः-प्रयोजनं गृहस्थस्य क्षेत्र-वास्तु-धन-शरीरपरिजनादिविषयस्तदर्थ आरम्भो-भूतोपमर्दोऽर्थदण्डः। दण्डो निग्रहो यातना विनाशनमिति पर्यायाः। अर्थेन-प्रयोजनेन दण्डोऽर्थदण्डः। स चैष भूतविषय उपमर्दलक्षणो दण्डः क्षेत्रादिप्रयोजनमपेक्षमाणोऽर्थदण्ड उच्यते । तद्विपरीतोऽनर्थदण्डः प्रयोजननिरपेक्षः, अनर्थोऽप्रयोजनमनुपयोगो निष्कारणता विनैव कारणेन भूतानि दण्डयति, यथा शतधारकुठारेण प्रकृष्टस्तरुस्कन्धशाखादिषु प्रहरति। कृकलासपिपीलिकादीन् व्यापादयति कृतसङ्कल्पः। न च तद्व्यापादने किञ्चिदतिशयोपकारि प्रयोजनमस्ति येन विना गार्हस्थ्यं प्रतिपालयितुं न शक्यते, सोऽयमनर्थदण्डः पापादानहेतुरिति प्रेक्षापूर्वकारिणा प्रोज्झ्यः। नामशब्दः पूर्ववत्। अनर्थदण्डस्वरूपनिरूपणायाह—उपभोगेत्यादि। उपभुज्यत इत्युपभोगः। उपशब्दः सकृदर्थे। सकृद् भोग उपभोगः पुष्पाहारादेः। अथवाऽन्तर्भोग उपभोग आहारादिः। अत्रान्तर्वचन उपशब्दः। परिभुज्यत इति परिभोगः। परिशब्दोऽभ्यावृत्तौ वर्तते। पुनः पुनर्भोगो वा वस्त्रगन्धमाल्यालङ्कारादेः। समासतः सर्वमुपयुज्यमानं शरीरादीनामगारिणो व्रतिन उपकारकोऽर्थः, तस्मादुपकारकादर्थाद् व्यतिरिक्तोऽनुपकारकस्त्वात् अनर्थः तदर्थ इत्यनुपकारको योऽर्थः तदर्थो दण्डो भूतोपमर्दलक्षणोऽनर्थदण्डः धर्मार्थकाममोक्षाणामन्यतमस्याप्यभावात्, अतस्तस्माद् विरतिर्व्रतमगारिणो भवति ॥ ननु च व्रतग्रहणाद् विरतिशब्दार्थो गम्यत एव, किमर्थं विरतिग्रहणम्? । उच्यते—परिजिहीर्षत आदराधानार्थं, दण्डप्रवृत्तो हि निष्कारणमेव पापमुपादत्ते । दूरतश्चायमत आदृतः कथं नाम परिहरेदिति विरतिग्रहणम् ॥

सामायिकलक्षणम्

भा०—सामायिकं नामाभिगृह्य कालं सर्वसावद्ययोगनिक्षेपः ॥

टी०—सामायिकं नामेत्यादि । सामायिकमिति समो-रागद्वेषवियुक्तो यः सर्वभूतान्यात्मवत् पश्यति, आयो-लाभः-प्राप्तिः । समस्यायः समायः प्रतिक्षणमपूर्वापूर्वज्ञानदर्शनचरणपर्यायैर्युज्यते स एवं समायः प्रयोजनमस्य क्रियानुष्ठानस्येति सामायिकम् । समाय एव वा सामायिकम्। नामशब्दोऽलङ्कारार्थः। अभिगृह्य कालमिति कालं नियम्य यावत् चैत्यानि पर्युपासे साधून् वा अन्यद् वा किञ्चिदुपलक्षणमास्थाय कालस्य गोदोहादि स्थिरतरचित्तवृत्तिर्गृहपौषधशालादिषु निर्व्यापारः सन् सर्वत्र सामायिकमातिष्ठति, अमुना विधानेन करोमि भदन्त! सामायिकं द्विविधं त्रिविधेनेति। प्रतिपद्य चैवं ततश्चैत्यादि पर्युपास्ते । निक्षिप्तसावद्ययोगः । अवद्यं-गर्हितं पापम् । सहावद्येन सावद्यः योगो-व्यापारः कायिकादिस्तस्य सावद्यव्यापारस्य निक्षेपः-परित्यागः प्रोज्झनं न करोमि न कारयामि मनोवाक्कायैरिति भावस्तद्विशेषणम्। सर्वशब्दः प्रकृतविकल्पापेक्षया, अतः सर्वसावद्ययोग

---

१ 'आराधनार्थं' इति ङ-पाठः । २ 'प्रतिक्षापू-' इति ङ-पाठः ।

इति न करोमि न कारयामि तस्य विकल्पस्य प्रत्याख्येयो यः सावद्ययोगः स सर्व इत्यनेन विशेष्यते, न पुनः सामान्येन सावद्ययोगविशेषणमिति, असम्भवात् तस्यागारिण इति ॥

पौषधलक्षणम् भा०—पौषधोपवासो नाम पौषधे उपवासः। पौषधः पर्वेत्यनर्थान्तरम्। सोऽष्टमीं चतुर्दशीं पञ्चदशीं अन्यतमां वा तिथिमभिगृह्य चतुर्थाद्युपवासिना व्यपगतस्नानानुलेपनगन्धमाल्यालङ्कारेण न्यस्तसर्वसावद्ययोगेन कुशसंस्तारफलकादीनामन्यतमं संस्तारकमास्तीर्य स्थानं वीरासननिषद्यानां वाऽन्यतममास्थाय धर्मजागरिकापरेणानुष्ठेयो भवति ॥

टी०—पौषधोपवासो नामेत्यादिना पौषधस्वरूपं निरूपयति। रूढ्या पौषधशब्दः पर्वसु वर्तते। पर्वाणि चाष्टम्यादितिथयः, पूरणात् पर्व, धर्मोपचयहेतुत्वात्। तत्र पौषधे पर्वणि उपवासः पौषधोपवासः। त्रिविधस्य चतुर्विधस्य वाऽऽहारस्य छेदः "साधनं कृते"ति समासो योगविभागेन वा सप्तमीति समासः। नामशब्देन तु वाक्यालङ्कृतिः। तस्य वा नियमविशेषस्येदं नाम पौषधोपवास इति सोऽयमाख्यातो पौषधे उपवास इत्यादिना भाष्येण। अनर्थान्तरमित्येकार्थता। सोऽष्टमीमित्यादि। स पौषधोपवासः–उभयपक्षयोरष्टम्यादितिथिमभिगृह्य–निश्चित्य बुद्ध्या अन्यतमां चेति प्रतिपदादितिथिम्, अनेन चान्यासु तिथिषु अनियमं दर्शयति, नावश्यंतयाऽन्यासु कर्तव्यः। अष्टम्यादिषु तु नियमेन कार्यः। चतुर्थाद्युपवासिनेति कर्तृलक्षणा तृतीया। पृथग्जनस्यानियतानि भक्तानि मुमुक्षूणां सकृद् भोजनं, मध्यमजनस्य भक्तद्वयं, तत्र मध्यमां प्रतिपत्तिमाश्रित्य चतुर्थादितपोगणना। अतीतेऽहनि भुक्त्वा प्रत्याख्यानमित्येको भोजनकालः। द्वितीयेऽहनि भक्तद्वयच्छेदः। तृतीयेऽहनि चतुर्थभक्तकाले भुङ्क्त इति चतुर्थभक्तमुच्यते। एक उपवासः, कदाचिदुत्तरपदलोपा-

चतुर्थभक्तस्यार्थः चतुर्थभक्तमेव चतुर्थं तदाद्युपवसति यस्तच्छीलश्च स चतुर्थाद्युपवासी। आदिग्रहणात् पूर्वगणितयैव षष्ठाष्टमादिसमस्ततपोविकल्पग्रहणम्। स्नानमुदकेन, अनुलेपनं चन्दनकुङ्कुमकस्तूरिकादिना, गन्धाः पवित्रमादिभेदेनानेकविधाः, मालार्हं माल्यं–पुष्पप्रकरः, अलङ्कारो वस्त्रकेशकटकादिः। व्यपगताः स्नानादयो यस्येति। न्यस्तो–निक्षिप्तः सर्वसावद्ययोगो येन। सर्वशब्दः पूर्ववत्। कुशास्तृणजातिरशुषिरा कुन्थ्वाद्यादीनामनाश्रयास्तत्कृतः संस्तरः कुशसंस्तरः, संस्तीर्यतेऽसाविति संस्तरः। "अध्यायन्याय०" ( पा० अ० ३, पा० ३, सू० १२२ ) इत्यत्र सूत्रे चशब्दोऽनुक्तसमुच्चयार्थो व्याख्यातः। ततश्च "पुंसि संज्ञायां०" ( पा० अ० ३, पा० ३, सू० ११८ ) इति घप्रसङ्गे घञ्, "कृत्यल्युटो बहुलं" ( पा० अ० ३, पा० ३, सू० ११३ ) इति वा, फलकमप्यशुषिरं चम्पकाशोकादिपट्ट-

१ 'पौषधोपवासः' इत्यधिको घ-पाठः।

खण्डम्। आदिग्रहणाद् द्विदलवस्त्रकम्बलीपरिग्रहः। अन्यतममिति उक्तानां मध्ये यथालाभमास्तीर्य विरचय्य प्रवचननिर्देशेनानुष्ठेयः। अथवा स्वशक्त्यपेक्षया स्थानादिविधिनाऽनुष्ठेयः, तदाह—स्थानमूर्ध्वलक्षणं कायोत्सर्गाख्यम्, वीराणां संहननयुक्तानामासनं जान्वधोभागतुल्यमञ्चिकादिनिविष्टस्यापनीताधोमञ्चिकस्य तथाऽवस्थानं वीरासनमुच्यते। निषद्या समस्फिग्निवेशनं पर्यङ्कबन्धादि। वाशब्दो विकल्पार्थः। स्थानादि वा शयनं वा। अन्यतममिति यदेवाभ्यस्तम्, आस्थायेति परिगृह्य। धर्मस्तु श्रुतचरणभेदाद् द्विधा। तत्र श्रुतधर्मो वाचनाप्रच्छनाऽनुप्रेक्षास्वाध्यायधर्मोपदेशलक्षणः, चरणधर्मो महाव्रताणुव्रतोत्तरगुणभेदस्तद्विषयं जागरणं जागरिका। धर्मे जागरिका। न चार्तरौद्रविकथाद्याश्रिता जागरिकेति। "इच्छा" (पा० अ० ३, पा०३, सू० १०१) इत्यत्रसूत्रे जागर्तेरिकारो वेत्युक्तं जागर्या जागरेतिरूपद्वयसिद्धयर्थम्। तत्र जागरैव जागरिका। स्वार्थे कविधानम्। एवमयं पौषधोपवासः सम्यग् गृहिणाऽनुष्ठेय इति॥

• उपभोगपरिभोगव्रतस्य लक्षणम्

भा०—उपभोगपरिभोगव्रतं नाम अशनपानखाद्यस्वाद्यगन्धमाल्यादीनां प्रावरणालङ्कारशयनासनगृहयानवाहनादीनां बहुसावद्यानां च वर्जनम(ल्पसावद्यानाम)पि परिमाणका(क)रणमिति॥

टी०—उपभोगपरिभोगशब्दार्थौ व्याख्यातौ। तच द्विविधं व्रतं भोजनकर्मविषयत्वात्। तत्राशनान्मांसानन्तकायादेर्निवर्तते, पानतो मद्यमधुसुरामांसरसकादेः, खाद्याद् बहुबीजसत्त्वौदुम्बरफलादेः, स्वाद्यान्माक्षिकान्मधुप्रभृतेः। एवं यथासम्भवमन्यदपि सचित्तमाहारजातं परिहरति प्रतिदिवसम्। कर्मतः पञ्चदशकर्मादानान्यङ्गारकरणादीनि अल्पसावद्यजीवनोपायाभावे, तत्प्रवृत्तौ ज्ञानावरणादिकर्मणां हेतुत्वाद्दानात् कर्मादानादीन्युच्यन्ते। तानि चाङ्गारवनशकटभाटकस्फोटनदन्तलाक्षारसविषकेशवाणिज्यायन्त्रपीडानिर्लाञ्छनदवदानसरोहदादिपरिशोषणासतीपोषणकर्माणि। प्रदर्शनं चैतद् बहुसावद्यानां कर्मणां, न परिगणनमित्यागमार्थः॥ ननुच भाष्यकृता न कर्मादानग्रहणमकारि साक्षात्। सत्यम्, आदिग्रहणात् तु व्याख्येयानि, प्रवचने तथोपदिष्टत्वात्। गन्धमाल्यादीनामिति। आदिशब्दात् पटवासधूपस्रक्पर्यताम्बूलग्रहणम्। समासतो यानि बहुसावद्यानि तानि यावज्जीवं वर्जनीयानि, अल्पसावद्यानां तु कर्मणां कार्यम्। शेषाणि प्रत्याख्येयानीति॥

पञ्चदश कर्मादानानि

अतिथिसंविभागस्य व्याख्या.

भा०—अतिथिसंविभागो नाम न्यायागतानां कल्पनीयानामन्नपानादीनां [च] द्रव्याणां देशकालश्रद्धासत्कारक्रमोपेतं पर(या)ऽऽत्मानुग्रहबुद्धया संयतेभ्यो दानमिति॥१६॥किञ्चान्यदिति—

१ 'महाव्रतोत्तर' इति ङ-पाठः। २ 'आच्छादनप्रावरणा' इति घ-पाठः। ३ यद्धिदितोऽयं घ-पाठः। ४ 'भावतः प्रवृत्तो' इति -पाठः।

टी०—अतिथिसंविभागो नामेत्यादि । अतिथिर्भोजनार्थं भोजनकालोपस्थायी,-स्वार्थं निर्वर्तिताहारस्य गृहिव्रतिनः साधुरेवातिथिः, तस्य संविभागोऽतिथिसंविभागः । संविभागग्रहणात् पश्चात् कर्मादिदोषपरिहारः । अत्र च पापधोपवासपारणकाले नियमः—अदत्त्वा साधुभ्यो न स्वयं पारणीयमिति । अन्यदा तु दत्त्वा वा पारयति पारयित्वा वा ददातीत्यनियमः । तच्च देयं देशकालापेक्षं सर्वमेवोद्गमादिविशुद्धं मोक्षफलमभिलषता संयतासंयतेन कदाचित्, [1]कैचिदाधाकर्माद्यपि देशकालापेक्षं स्वर्गादिफलमेव भवतीति विजानता देयमेव, उत्सर्गापवादप्रवचनस्वभावत्वात् भगवदर्हत्प्रणीतप्रवचनस्येति । नामशब्दः पूर्ववत् । न्यायागतानामिति । न्यायो द्विजक्षत्रियविट्[2]शूद्राणां च स्ववृत्त्यनुष्ठानम् । स्ववृत्तिश्च प्रसिद्धैव प्रायो लोकाद्देर्या, तेन तादृशा न्यायेनागतानाम् । कल्पनीयानामिति । उद्गमादिदोषवर्जितानामशनीयपानीयखाद्यस्वाद्यवस्त्रपात्रप्रतिश्रयसंस्तारभेषजादीनाम् । द्रव्याणामिति पुद्गलविशेषणाम् । देशो नानाव्रीहिकोद्रवकङ्गुगोधूमादिनिष्पत्तिभाग् । कालः सुभिक्षदुर्भिक्षादिः । श्रद्धा विशुद्धश्चित्तपरिणामः पात्राद्यपेक्षः । सत्कारोऽभ्युत्थानासनदानवन्दनानुव्रजनादिः । क्रमः परिपाटी । देशकालापेक्षो यः पाको निर्वृत्तः स्वगेहे तस्य पेयादिक्रमेण दानम् । यो वा यत्र देशे काले वा यः क्रमः प्रसिद्धस्तैर्देशादिभिः । उपेतशब्दः प्रत्येकमभिसम्बध्यते । परयेति प्रकृष्टया आत्मनोऽनुग्रहबुद्ध्या ममायमनुग्रहो महाव्रतयुक्तैः साधुभिः क्रियते यदशनीयाद्यादद्त इति । अतः संयता मूलोत्तरसम्पन्नास्तेभ्यः संयतात्मभ्यो दानमिति ॥ १६ ॥

किञ्चान्यदित्यनेनाभिसम्बध्नाति । सम्यक्त्वसम्पन्नोऽणुव्रतधरः शीलसम्पदा युक्तः किञ्चान्यदनुपालयेदित्याह—

## सूत्रम्—मारणान्तिकीं संलेखनां जोषिता ॥ ७—१७ ॥

टी०—यद्यपि प्रतिक्षणमावीचिकमरणमस्ति तथापि न तद्ग्रहणं, किं तर्हि? सर्वायुषः क्षयो मरणं, मरणमेवान्तो मरणान्तः—मरणकालः । प्रत्यासन्नं मरणमितियावत् । जन्मनः पर्यव[3]सानं तत्र भवा मारणान्तिकी "बह्वच" ( पा० अ० २, पा० ४, सू० ६६ ) इति घञ् । संलेखनाऽभिसम्बध्यते । संलेख्यतेऽनया शरीरकषायादीति संलेखना—तपोविशेषः । यथोक्तमार्षे—

[4]"चत्तारि विचित्ताइं वि[5]गंतीनिज्जूहिताइं चत्तारि ।
[6]एगंतरमायामं अविगिट्ठविगिट्ठकोडिक ॥ १ ॥"

---

१ 'केचित्' इति ङ-पाठः । २ 'वैश्य' इति ङ-पाठः । ३ '०सानात्' इति ङ-पाठः ।

४ छाया—
चत्वारि ( वर्षाणि ) विचित्राणि ( तपांसि ) विकृतिनिर्यूढानि चत्वारि ।
एकान्तरमाचाम्लं ( द्वे ) अविकृष्टं ( एकं ) विकृष्टं ( एकं ) कोट्या ( एकम् ) ॥ १ ॥

५ 'विज्जीवयाइ' इति ङ-पाठः । ६ 'एगुत्तरयोग' इति ङ-पाठः ।

द्वादशवर्षाण्युत्कर्षतः संलेखनाकालः, तदनु स्वशक्त्यपेक्षो मासार्धमासपरिणामया द्वादशवर्षेण्यवस्थयैवागमोक्तया संलेखनाकालोऽवसेयः। संलेखनाऽवश्यं समाधिमरणपर्यन्ते विधेयाऽनगारागारिभ्याम्। जोषितेति कर्तरि ताच्छीलिकस्तृन्। मारणान्तिकीं संलेखनां जोषिता–सेविता कर्तेति। एनमेवार्थं भाष्येण स्पष्टयति—

**भा०—कालसंहननदौर्बल्योपसर्गदोषाद् धर्मावश्यकपरिहाणिं मरणं वाऽभितो ज्ञात्वाऽवमौदर्यचतुर्थषष्ठाष्टमभक्तादिभिरात्मानं संलिख्य संयमं प्रतिपद्योत्तमव्रतसम्पन्नश्चतुर्विधाहारं प्रत्याख्याय यावज्जीवं भावनाऽनुप्रेक्षापरः स्मृतिसमाधिबहुलः मरणान्तिकीं संलेखनां जोषिता उत्तमार्थस्याराधको भवतीति ॥ १७ ॥**

टी०—कालसंहननेत्यादिना। कालदोषो दुष्षमायां दुःशकं बहूनि वर्षाणि साधुगृहिधर्मानुष्ठानं मन्दधृतित्वात् पुरुषैः यथोक्तं दुर्भिक्षवाच्यं दुर्भिक्षं वा। कालो दुर्लभान्नपानः। संहननं वज्रर्षभनाराचादि षोढा। संहननस्य दौर्बल्यं–दुर्बलता वज्रर्षभनाराचादारभ्य हीयमानं यावत् सेवार्तमिति सर्वदुर्बलम्। उपसर्गास्तु दिव्यमानुषतिर्यक्कृतात्मसमुत्थाः। दोषशब्दः प्रत्येकमभिसम्बध्यते। कालदोषात् संहननदौर्बल्यादुपसर्गदोषाद् वा। धर्मो दशलक्षणकस्तद्विषयाण्यवश्यं कर्तव्यानि आवश्यकानि साधोः प्रत्युपेक्षणादीनि। अनगारिणोऽपि चैत्यवन्दनवैयावृत्यपौषधप्रतिपत्त्यादीनि तेषां परिहाणिः–अवसादः कालादिदोषात् तामवगम्य कालादिदोषमन्तरेण वा मरणं अभितः प्रत्यासन्नमवबुद्ध्येदं कर्तव्यमित्याह—अवमौदर्येत्यादि। अवमं-न्यूनमुदरं तद्भावः अवमौदर्यं अविकृतवदनकुक्कुट्यण्डकमानेन द्वात्रिंशत्कवलाहारः पुरुषः स्त्री वा (?)। ततः किञ्चिन्न्यूनतादिभेदेनावमौदर्यमनेकविधमागमेऽभिहितम्। चतुर्थादिभक्तभावना पूर्वोक्तैव। आदिग्रहणादर्धमासक्षपणादिपरिग्रहः। एभिस्तपोविशेषैरात्मानं संलिख्य–तनूकृत्य विरूक्ष्य रुधिरमेदोमांसाद्यपचयं कृत्वा कषायांश्च क्रोधादीनपास्य प्रोज्झ्य च गृहिव्रतित्वमभ्युपगम्य संयमं सर्वसावद्ययोगविरतिलक्षणमुत्तमैः–महाव्रतैः सम्पन्नश्चतुर्विधमशनादिकमाहारं प्रत्याख्याय त्रिविधं यथासमाधि यावज्जीवमिति विशिष्टावधिकं भावनाऽनुप्रेक्षापरः। भावनाः पूर्वोक्ताः। अनुप्रेक्षास्तु वक्ष्यमाणा नवमे (सू०७)। तत्पर इति–तत्र निहितचेतास्तदध्यवसानः स्मृतिबहुलः सर्वं स्मरति यत् प्रतिज्ञातं महाव्रतादि, मुषितस्मृतेर्न निर्जराऽस्ति प्रमादवतः। समाधिरिति चेतसः स्वस्थता तद्बहुलः। नार्तरौद्राध्यायीति। एवं बहुकुर्वन्नुत्तमार्थस्येति प्रकृष्टपुरुषार्थस्य–मोक्षस्याराधको भवतीति ॥ १७ ॥

---

१ 'मरणं' इति घ-पुस्तके नास्ति। २ 'भावेनानुप्रेक्षा०' इति क-ख-पाठः। ३ 'प्रत्यवेक्षणा०' इति ग-पाठः।

सम्प्रति व्याख्यातस्वरूपाणि शीलानि निगमयति—

भा०—एतानि दिग्व्रतादीनि शीलानि भवन्ति । " निःशल्यो व्रती " (अ० ७, सू० १३) इति वचनादुक्तं भवति व्रती नियतं सम्यग्दृष्टिरिति ॥ तत्र—

टी०—एतानीत्यादिनोत्तरसूत्रस्य च सम्बन्धमाचष्टे । दिक्षु व्रतं दिग्व्रतम् । तदादौ येषां तान्येतानि दिग्व्रतादीनि सप्तापि सह संलेखनया शीलानि भवन्ति । शील्यन्तेऽभ्यस्यन्ते वाऽऽत्मनि पुनः पुनरिति शीलानि । एवमयमगार्यणुव्रतसम्पन्नो व्रती उच्यते । स च व्रती निःशल्य इत्यमुष्माद् वचनादिदमपि सामर्थ्यतः प्रतिपादितं भवति-व्रती नियतं सम्यग्दृष्टिरिति । व्रतिलक्षणादेव विशिष्टार्थावधारणम् । यो व्रती सोऽवश्यंतया सम्यग्दर्शनी भवतीति । यतः शङ्कादिदोषदूषितमनसो मिथ्यादर्शनशल्यत्रुट्यमानसकलमूलोत्तरगुणाधारतत्त्वश्रद्धानस्य नियमत एव नास्ति व्रतित्वम्, अतो व्रतीति नियतं सम्यग्दृष्टिरिति । तस्य च सम्यग्दृष्टेरतीचारः सम्यग्दर्शनव्यतिक्रमो मलीमसता स्खलनं विभ्रंशो वाऽभिधीयते, सम्यग्दर्शनमूलत्वाच्च व्रतित्वस्य । प्राक् तावत् सम्यग्दर्शनातिचाराभिधानम् । शुद्धे हि तस्मिन् व्रतविशुद्धिरिति ॥

सम्यग्दर्शनस्य पञ्चातीचाराः

सूत्रम्—शङ्काकाङ्क्षाविचिकित्साऽन्यदृष्टिप्रशंसा-संस्तवाः सम्यग्दृष्टेरतीचाराः ॥ ७-१८ ॥

टी०—तत्र-तेषु सम्यक्त्वाणुव्रतशिक्षाव्रतेषु सम्यग्दर्शनातिचारः पञ्चविधः । ते तु शङ्केत्यादि शङ्काकाङ्क्षाविचिकित्साऽन्यदृष्टिप्रशंसासंस्तवाः सम्यग्दृष्टेरतीचाराः, कृतद्वन्द्वाः शङ्कादयो भवनविभक्त्या निर्दिष्टाः, सम्यग्दृष्टेरिति सम्यग्दर्शनभाजोऽतीचारा भवन्ति, मोहनीयकर्मणो वैचित्र्यादात्मनः परिणतिविशेषाः । तानि द्वन्द्वपदानि पञ्चापि वृत्त्या दर्शयति—

भा०—शङ्का काङ्क्षा विचिकित्सा अन्यदृष्टिप्रशंसा संस्तवः इत्येते पञ्च सम्यग्दृष्टेरतिचारा भवन्ति । अतिचारो व्यतिक्रमः स्खलितमित्यनर्थान्तरम् । अधिगतजीवाजीवादितत्त्वस्यापि भगवतः शासनं भावतोऽभिप्रपन्नस्यासंहार्यमतेः सम्यग्दृष्टेरर्हत्प्रोक्तेषु, अत्यन्तसूक्ष्मेष्वतीन्द्रियेषु केवलागमगम्येष्वर्थेषु यः सन्देहो भवत्येव स्यादिति सा शङ्का ॥

शङ्कायाः स्वरूपम्

१ 'सदने' इति ङ-पाठः । २ 'संस्तवाः' इति ख-पाठः । ३ '०रतीचाराः' इति ख-घ-पाठः । ४ 'स्खलनमित्य०' इति घ-पाठः । ५ 'जीवाधिगततत्त्वस्यापि' इति क-ख-ग-पाठश्चिन्तनीयः । ६ 'अर्हत्प्रोक्तेषु' इति घ-पाठः । ७ 'मग्राह्येष्वर्थेषु' इति घ-पाठः । ८ 'भवत्येवं स्यादेवं न स्यादिति' इति घ-पाठः ।

टी०—शङ्केत्यादिकया। अतिचारो व्यतिक्रम उल्लङ्घन(स्खलन?)मित्येकोऽर्थः। अधिगतेत्यादि। अधिगतं-सुपरिज्ञातं जीवाजीवादितत्त्वं यस्य तस्याप्येवंविधस्य। भगवत इति धर्मलक्ष्मीयशोभाजः श्रीवर्धमानस्य शासनं-प्रवचनं अभिप्रपन्नस्य-अभिमुखं भावतः, प्रतिपन्नस्येतियावत्। असंहार्यमतेरिति। संहार्या-क्षेप्या परकीयागमप्रक्रियाभिरसमञ्जसाभिर्बुद्धिर्यस्यासौ संहार्यमतिः, न संहार्यमतिरसंहार्यमतिर्भगवदर्हत्प्रणीततत्त्वश्रद्धा तया (?) तस्य सम्यग्दृष्टेरर्हत्प्रोक्तेषु जीवादिष्वर्थेषु यथाऽऽत्मा लोकाकाशतुल्यप्रदेशः गतिस्थितिहेतू जीवपुद्गलानां धर्माधर्मावपेक्षाकारणमित्येवमादिरनेकः पदार्थोऽत्यन्तसूक्ष्मः, तेषु। अत्यन्तग्रहणाल्लिङ्ग(लिङ्गागम?)गम्येषु। यतः परमाणवः सूक्ष्माश्चातीन्द्रियाश्च, तथापि लिङ्गेन-कार्येण आगमेन वाऽवगम्यन्ते, नैवं संख्येयप्रदेशादय इति, अत्यन्तसूक्ष्माः समुच्छिन्नचक्षुरादिविषयभावाः, केवलागमग्राह्येष्विति, नाप्रमाणकास्तेऽत्यन्ताभाववदिति दर्शयति, केवलमेकं मत्यादिसहायभावविनिर्मुक्तमात्यन्तिकज्ञानावरणक्षयप्रभेद(भव)मात्मस्वरूपं सकलज्ञेयग्राहि यत् ज्ञानं तेन गृह्यन्ते, आगमो-द्वादशाङ्गं प्रवचनमर्हत्प्रोक्तार्थं गणधरप्रत्येकबुद्धस्थविरविरचितसूत्रप्रबन्धम्। यदाह—

("अर्हत्प्रोक्तं गणधरदृब्धं प्रत्येकबुद्धदृब्धं वा।
स्थविरग्रथितं च तथा प्रमाणभूतं त्रिधा सूत्रम्॥")
"श्रुतकेवली च तस्मादधिगतदशपूर्वकश्च तौ स्थविरौ।
आप्ताज्ञाकारित्वात् तु सूत्रमितरत् स्थविरदृब्धम्॥
गीतार्थः संविग्नश्चरणस्थो नोपदेशने शक्यः (भाज्यः?)।
भाज्यः स एव सद्भावदेशने मन्दवृत्तश्चेत्॥"

अत आगमपरिच्छेद्येषु प्रज्ञापनीयेष्वर्थेषु यः संशयो भवति एवं स्यादसंख्येयप्रदेश आत्मा, अथ निष्प्रदेशो निरवयवत्वान्नैवं स्यादिति वा, सेयमेवंविधा शङ्का। तथा चागमः—"संसयकरणं सङ्का" (आव०) मिथ्यादर्शनं च त्रिविधम्, अभिगृहीतानभिगृहीतसंशयभेदात्, तत्र संशयो मिथ्यात्वमेव, यथाऽऽह (सङ्ग्रहण्याम्)—

"पयमक्खरं च एक्कंपि जो न रोएति सुत्तनिद्दिट्ठं।
सेसं रोयंतोवि हु मिच्छद्दिट्ठी मुणेयव्वो॥ १॥"
तथा—"सूत्रोक्तस्यैकस्याप्यरोचनादक्षरस्य भवति नरः।
मिथ्यादृष्टिः सूत्रं हि नः प्रमाणं जिनाज्ञा च॥ १॥

१ 'यतः परमाणवः सूक्ष्माश्चातीन्द्रियाश्च' इति क-ख-ग-प्रतीनामधिकः पाठः, परन्तु स पाठः प्रामादिक इति प्रतिभाति। २ 'भावादिति सूक्ष्ममात्यन्तिक' इति ङ-पाठः। ३ 'पूर्वधरश्च तौ' इति ख-पाठः। ४ 'मन्दवृत्तत्वात्' इति ङ-पाठः। ५ 'परिज्ञेयेषु' इति ङ-पाठः। ६ संशयकरणं शङ्का।
७ छाया—पदमक्षरं चैकमपि यो न रोचते सूत्रनिर्दिष्टम्।
शेषं रोचमानोऽपि खलु मिथ्यादृष्टिर्ज्ञातव्यः॥

एकस्मिन्नप्यर्थे संदिग्धे प्रत्ययोऽर्हति हि नष्टः ।
मिथ्यैव दर्शनं तत् स चादिहेतुर्भवगतीनाम् ॥ २ ॥"

तस्मान्मुमुक्षुणा व्यपगतशङ्केन सता जिनवचनं सत्यमेव सामान्यतः प्रतिपत्तव्यम् । संशयास्पदमपि सत्यमेव, सर्वज्ञाभिहितत्वात् तदन्यपदार्थवत्, मतिदौर्बल्यादिदोषात् तु कार्त्स्न्येन सकलपदार्थस्वभावावधारणमशक्यं छद्मस्थेन । यथाऽऽह ( भगवतीवृत्तौ )—

" न हि नामानाभोगश्छद्मस्थस्येह कस्यचिन्नास्ति ।
यस्माज्ज्ञानावरणं ज्ञानावरणप्रकृति कर्म ॥ १ ॥"

काङ्क्षास्वरूपमभिधातुकाम आह—

काङ्क्षायाः स्वरूपम्

भा०—ऐहलौकिकपारलौकिकेषु[1] विषयेष्वाशंसा काङ्क्षा । सोऽतिचारः सम्यग्दृष्टेः । कुतः ? । काङ्क्षिता ह्यविचारितगुणदोषः स्वसमयमतिक्रामति ॥

टी०—ऐहलौकिकपारलौकिकेष्वित्यादि । इहलोके भवा ऐहलौकिकाः शब्दादयो विषयाः । सुगतेन हि भिक्षूणामक्लेशको धर्म उपदिष्टः स्नानान्नपानाच्छादनशयनीयादिसुखानुभवद्वारेण । सोऽपि हि घटमानक एव, न दूरापेतः । तथा परिव्राजकभौतब्राह्मणादीनामैहिकान् विषयानुपभुञ्जाना एव परलोकेऽपि सुखेन युज्यन्ते, साधीयान् धर्मोपदेशः । तथा परलोके भवाः पारलौकिकाः—स्वर्गमानुषजन्मप्रभवाः शब्दादयो विषयाः प्रकर्षापकर्षवृत्तित्वाद् अन्यान्यदर्शने सति ग्राहोऽभिलाषस्तद्विषयः, आशंसा प्रीतिरभिलाषः काङ्क्षेत्यनर्थान्तरम् दर्शनेषु वा । तथाचागमे ( आवश्यकसूत्रनाम्नि चतुर्थे विभागे )—"कंखा अण्णण्णदंसणग्गाहो[2] "। प्रस्तुतोऽतिचारस्तच्छब्देन तस्य परामर्शः । सोऽतिचारो मलीमसताध्यामलता । कस्य ? सम्यग्दृष्टेरित्याह । न निर्मलमेव सम्यक्त्वं भवति, मलिनमात्रता तस्य जायते इति । कस्मात् पुनः काङ्क्षा अतिचार इति प्रश्नेनोपक्रमते कुत इति । एवं मन्यते प्रष्टा—जिनवचनं श्रद्धत्त एव, न न श्रद्धत्ते, अश्रद्दधतश्च मिथ्यादर्शनम् । आचार्यस्त्वाह—काङ्क्षिता हीत्याहि । यस्मादन्यशासनतत्त्वाभिलाषी काङ्क्षिता, न विचारिता गुणदोषा येनासावविचारितगुणदोषः सांसारिकसुखमल्पकमभिलषत्यैहलौकिकं पारलौकिकं वा विनश्वरमवसानकटुकं दुःखानुविद्धमुद्धतकषायकलुषितत्वात् संसारानुबन्धि, सर्वं चैवंविधं भगवद्भिः प्रतिषिद्धं, प्रतिषिद्धानुष्ठानं च भावतो दूषयति सम्यक्त्वं, सिद्धान्तव्यवस्थोल्लङ्घनात् । तदाह—सम-

1 ' ०लौकिकेषु विषये० ' इति घ-पाठः, ख-पाठस्तु '०लौकिकविषये०' इति ।

२ छाया—

काङ्क्षा अन्यान्यदर्शनग्राहः ।

३ ' स्वयंत ' इति क-ख-पाठः ।

यमतिक्रामतीति। समयः-सिद्धान्तः, अनतिक्रमणीया वा कार्येष्वव्यवस्था, कोशपानादिवत्, एवमनतिलङ्घनीया या वृत्तिः स समयः, सम्यग्ज्ञानं वा, गत्यर्थानां ज्ञानार्थत्वात्, तं समयमतिक्रामति, उल्लङ्घयतीत्यर्थः। कः पुनरसौ समयः?-"णो इहलोयट्ठयाए" इत्यादि (दशवैकालिके अ० ९, उ० ४) केवलं कर्मनिर्जरणायैवेति। तस्मादैकान्तिकात्यन्तिकाव्याबाधसुखहेतुरयं सकलः प्रयास इति अन्यत्र निराकाङ्क्षेण मुनिना भवितव्यमिति ॥

विचिकित्साविचारः भा०—विचिकित्सा नामेदमप्यस्तीति मतिविप्लुतिः ॥

टी०—विचिकित्सा नामेत्यादि। मतिविभ्रमो विचिकित्सा। युक्त्यागमोपपन्नेऽप्यर्थे भ्राम्यति मतिः, यथा-अस्य महतस्तपःक्लेशस्य सिकताकणकवलनिःस्वादस्य लोचमौण्ड्यादेरायत्यां फलसंपद् भवित्री, अथ च क्लेशमात्रमेवेदं निर्जराफलविकलमिति? । नामशब्दो वाक्यालङ्कारार्थः। इदमप्यस्तीत्यादि। उभयथेह क्रियाः फलवत्यो निष्फलाश्च दृश्यन्ते। कृषीवलानां कर्षणादिक्रिया कदाचित् फलवती जातुचिन्निष्फलेति, अत इदमप्यस्तीदमप्यस्तीत्युभयथा दृष्टत्वात् क्रियासामान्यस्य मतेर्विभ्रमो भवति, न च शङ्कातो न भिद्यत इत्याशङ्कनीयम्, शङ्का तु सकलासकलपदार्थभाक्त्वेन द्रव्यगुणविषया लक्ष्यते, इयं तु क्रियाविषयैव विचिकित्सा। तामेव विवृणोति स्पष्टेनाभिधानेन-मतिविप्लुतिरिति। मतिर्मिथ्यात्वपुद्गलानुविद्धा प्लवते-भ्रमत्यनवतिष्ठमाना सर्वप्रवचन इति। सर्वे एव चैते प्रायो मिथ्यादर्शनभेदाः केनचिद् विशेषेण सिद्ध(जाय?)मानाः सम्यक्त्वातिचारतां प्रतिपद्यन्त इति नातिसूक्ष्मेक्षिका कार्येति। आगमे तु विचिकित्सा विद्वज्जुगुप्सा वेत्यभिहितं तदिहापि सम्भवत्येव। विद्वांसः साधवो विदितसंसारस्वभावाः परित्यक्तसमस्तसङ्गाः तेषां जुगुप्सा-निन्दा, अस्नानात् प्रस्वेदजलक्लिन्नमलत्वाच्च दुर्गन्धिवपुषस्तान् निन्दति-को दोषः स्याद् यदि प्रासुकवारिणाऽङ्गप्रक्षालनं कुर्वीरन् भगवन्त इति? ॥

शेषातिचारद्वयम् भा०—अन्यदृष्टिरित्यर्हच्छासनव्यतिरिक्तां दृष्टिमाह। सा द्विधा-अभिगृहीता चानभिगृहीता च। तद्युक्तानां क्रियावादिनामक्रियावादिनामज्ञानिकानां वैनयिकानां च प्रशंसासंस्तवौ सम्यग्दृष्टेरतिचार इति ॥

---

१ छाया—

न इहलोकार्थम्।

२ '०मप्यस्तीदमपीति मति०' इति घ-पाठः। ३ 'फलवद्' इति ग-पाठः। ४ 'न च शङ्कातो' इति क-ख-पाठः। ५ 'कुर्वतामव्रत(?)' इति ङ-पाठः। ६ '०ज्ञानिकानां प्रशंसासंस्तवाविति' इति क-ख-ग-पाठश्चिन्तनीयः।

टी०—अन्यदृष्टिरित्यादि। अन्यशब्दः प्रतियोग्यपेक्षः। अन्या चासौ दृष्टिश्चान्यदृष्टिः—अन्यद् दर्शनम्, अन्यथा पदार्थप्रणयनात्। तदाह—अर्हच्छासनव्यतिरिक्तां दृष्टिमाहेति। सूत्रकारस्यायमभिप्रायः—जिनवचनव्यतिरिक्ता दृष्टिरन्यदृष्टिरसर्वज्ञप्रणीतवचनाभिरतिः। सा च द्विधा—द्विप्रकारा। तत्राभिमुखं गृहीताऽभिगृहीता दृष्टिः—इदमेव तत्त्वमिति बुद्धवचनं साङ्ख्यकणादादिवचनं वा। अनभिगृहीता चेति चशब्दः समुच्चये। अनेकाऽऽभिमुख्येन गृहीता। सर्वप्रवचनेष्वेव साधुदृष्टिरनभिगृहीतमिथ्यादृष्टिरित्यर्थः। सर्वमेव युक्त्युपपन्नमयुक्तिकं वा समतया मन्यते मौढ्यात्। तत्र तद्युक्तानामित्यादिना अभिगृहीतमिथ्यादृष्टेरियत्तां निरूपयति। तया—अभिगृहीतमिथ्यादृष्ट्या युक्तास्तद्युक्ता मिथ्यादर्शनभाजः। मिथ्यादर्शनं ह्यनेकप्रकारमुपजायते मोहवैचित्र्यात् नयानामानन्त्यात्, अतः स्थूलतरकतिपयमेवोपदर्शनं क्रियते। तेषां तद्युक्तानां क्रियावादिनामिति। क्रिया कर्त्रधीना, न कर्त्रा विना क्रियायाः सम्भवः, तामात्मसमवायिनीं क्रियां वदन्ति ये तच्छीलाश्च ते क्रियावादिनः—आत्मास्तित्वादिप्रतिपत्तिलक्षणाः, ते चाशीत्यधिकशतसंख्यया, समधिगम्याश्चामुनोपायेन—जीवाजीवास्रवबन्धसंवरनिर्जरापुण्यापुण्यमोक्षाख्यान् नव पदार्थान् विरचय्य परिपाट्या जीवपदार्थस्याधः स्वपरभेदावुपन्यसनीयौ, तयोरधो नित्यानित्यभेदौ, तयोरप्यधः कालेश्वरात्मनियतिस्वभावभेदाः पञ्च न्यसनीयाः। ततो विकल्पानुत्पादयति—अस्ति जीवः स्वतो नित्यः कालत इत्येको विकल्पः। विकल्पार्थश्चायम्—विद्यते खल्वयमात्मा स्वेन रूपेण नित्यश्च कालवादिनः, उक्तेनैवाभिलापेन द्वितीयो विकल्पः ईश्वरकारणिनः, तृतीयविकल्पः आत्मवादिनः "पुरुष एवेदं सर्व"मित्यादि, नियतिवादिनश्चतुर्थविकल्पः, पञ्चमविकल्पः स्वभाववादिनः स्वत एव। स्वत इत्यजहता लब्धाः पञ्च विकल्पाः। परत इत्यनेनापि पञ्चैव लभ्यन्ते। नित्यत्वापरित्यागेन चैते दश विकल्पाः। एवमनित्यत्वेनापि दशैव, एकत्र विंशतिर्जीवपदार्थेन लब्धाः।

क्रियावादिनां १८० भेदाः

---

१ स्थापना यथा—



अजीवादिष्वप्यष्टास्वेवमेव प्रतिपदं विंशतिर्विकल्पानाम् अतो विंशतिर्नवगुणाः शतमशीत्युत्तरं क्रियावादिनामिति ॥

अक्रियावादिनां स्वरूपकथनं नामत एव क्रियते । तद्युक्तानामित्यनुवर्तते । आत्मनास्तित्वादिप्रत्ययापत्तिलक्षणा भवन्त्यक्रियावादिनः । नहि कस्यचिदवस्थितस्य पदार्थस्य क्रिया समस्ति, "भूतिर्येषां क्रिया सैव, कारकं सैव चोच्यते" । एतेषां चतुरशीतिर्भेदाः, तेषां पुण्यापुण्यविवर्जितः पदार्थसप्तकन्यासः तथैव, जीवस्याधः स्वपरविकल्पभेदद्वयोपन्यासः । असत्त्वादात्मनो नित्यानित्यभेदौ तु न स्तः । कालादीनां षष्ठी यदृच्छा न्यस्यते, पश्चाद् विकल्पाभिलापः—नास्ति जीवः स्वतः कालत इत्येको विकल्पः । एवमीश्वरादिभिरपि, यदृच्छावसानाः सर्वे च षड् विकल्पाः । तथा नास्ति जीवः परतः कालत इति षडेव विकल्पाः, एकत्र द्वादश । एवमजीवादिष्वपि षट्सु प्रतिपदं द्वादशैव विकल्पाः । एकत्र द्वादश सप्तगुणाश्चतुरशीतिविकल्पा नास्तिकानामिति ॥

अक्रियावादिनां ८४ भेदाः

कुत्सितं ज्ञानमज्ञानं तदेषामस्तीति अज्ञानिकाः ॥ नन्वेवं लघुत्वात् प्रक्रमस्य प्राग् बहुव्रीहिणा भवितव्यम् । ततश्चाज्ञाना इति स्यात् । नैष दोषः । ज्ञानाज्जात्यन्तरमेवाज्ञानं, मिथ्यादर्शनसहचरितत्वात् । ततश्च जातिशब्दत्वाद् गौरखरवदरण्यमित्यादिवदज्ञानिकत्वमिति । अथवा अज्ञानेन चरन्ति तत्प्रयोजना वा आज्ञानिका इति पाठः । असञ्चिन्त्यकृतबन्धवैफल्यादिलक्षणाः सप्तषष्टिभेदाः, तत्र जीवादीन् नव पदार्थान् पूर्ववद् व्यवस्थाप्य पर्यन्ते चोत्पत्तिमुपन्यस्याधः सप्त सदादय उपन्यसनीयाः, सत्त्वमसत्त्वं सदसत्त्वमवाच्यत्वं सदवाच्यत्वमसदवाच्यत्वं सदसदवाच्यत्वमिति च, एकैकस्य जीवादेः सप्त सप्त विकल्पाः । त एते नवसप्तकास्त्रिषष्टिः । उत्पत्तेस्तु चत्वार एवाद्या विकल्पाः । तद्यथा—सत्त्वमसत्त्वं सदसत्त्वमवाच्यत्वं चेति, त्रिषष्टिमध्ये क्षिप्ताः सप्तषष्टिर्भवति । को जानाति जीवः सन्नित्येको विकल्पः । एवमसदादयो वाच्याः । उत्पत्तिरपि किं सतः असतः सदसतोऽवाच्यस्येति वा को जानात्येतत् ? न कश्चिदपीत्यभिप्रायः ॥

अज्ञानिकानां ६७ भेदाः

वैनयिकानां चेति । चशब्दः समुच्चये । विनयेन चरन्ति, विनयो वा प्रयोजनमेषामिति वैनयिकाः । ते चामीष्वष्टासु स्थानेष्वनवधृतलिङ्गाचारशास्त्रविनयप्रतिपत्तिलक्षणा विनयप्रधानाः सपर्यां विदधति कायेन वाचा मनसा दानेन च । एभिश्चतुर्भिः प्रकारैः सुरनृपतियतिज्ञातिस्थविराधममातृपितृषु । एवं चाष्टकाश्चत्वारो द्वात्रिंशद् विकल्पा भवन्तीति । एवमभिगृहीतमिथ्यादृष्टेः सर्वसङ्ख्यया त्रीणि शतानि त्रिषष्ट्यधिकानि ।

वैनयिकानां ३२ भेदाः

अनभिगृहीता तु भोगसुखपराणामास्तां निःश्रेयससुखं, इदमेव पर्याप्तं यत् प्रकृष्टैश्वर्याभिजनादिषु नीरोगतादियुक्तं जन्मेति । सर्वदेवतासु सर्वपापण्डिषु च तुल्यतामौदासीन्यं भावयतीति । एतत्सम्बन्धेनाह–प्रशंसासंस्तवौ सम्यग्दृष्टेरतिचार इति । एषामुक्तलक्षणानां क्रियाऽक्रियावादिनामज्ञानिकानां च प्रशंसा स्तुतिः अभिष्टवः पुण्यभाज एते सुलब्धमेषिजन्म सत्यसन्धाः सन्मार्गदर्शननिपुणा इत्यादिः, संस्तवः–तैः सहैकत्र संवासात् परिचयः परस्परालापादिजनितः । तथा हि-एकत्र वासे तत्प्रक्रियाश्रवणात् तत्क्रियादर्शनाच्च असंहार्यमतेरपि दृष्टिभेदः श्रूयते, किमुत संहार्यमतेः ? । अत एव भगवद्भिः पार्श्वस्थादियथाच्छन्दिकैरपि सार्धं निषिद्धमेकत्र वसनमेकरात्रमपि सम्यग्दृष्टेरुत्सर्गात् । तस्मादतीचारावेतौ मलीमसताहेतू तत्प्रशंसासंस्तवौ सम्यग्दृष्टेर्भ्रंशहेतू वा ।

भा०—(अत्राह—प्रशंसासंस्तवयोः कः प्रतिविशेष इति ?। अत्रोच्यते–)[1]

टी०—प्रसिद्धार्थवशादुपजातसन्देहः कश्चिदत्राह–प्रशंसासंस्तवयोः कः प्रतिविशेष इति ? । अत्रोच्यते–एवं मन्यते "शंसु स्तुतौ" ( पा० धा० ७२८ ) । प्रशंसनं प्रशंसा–स्तुतिः । "ष्टुञ् स्तुतौ" (पा० धा०१०४३) । संस्तवः सम्यक्स्तुतिरेव । अतस्तुल्यार्थत्वात् प्रश्नयति– कः प्रतिविशेष इति । अत्रोच्यते—

भा०—ज्ञानदर्शनगुणप्रकर्षोद्भावनं भावतः प्रशंसा । संस्तवस्तु सोपधं निरुपधं च भूतगुणवचनमिति[2] ॥ १८ ॥

टी०—ज्ञानेत्यादि । ज्ञानम्–आगमः ॥ १८ ॥

## सूत्रम्[3]—व्रतशीलेषु पञ्च पञ्च यथाक्रमम् ॥ ७–१९ ॥

भा०—व्रतेषु पञ्चसु शीलेषु च सप्तसु पञ्च पञ्चातीचारा भवन्ति । यथाक्रममिति ऊर्ध्वं वक्ष्यामः ॥ १९ ॥

टी०—व्रतेष्वित्यादि सामान्येनापि व्रताभिधाने सामर्थ्यादगारिणो यानि व्रतानि तेषु विषयभूतेषु । पञ्चस्वित्यन्यूनानतिरिक्तेषु शीलेषु च सप्तस्विति । चशब्दः समुच्चायकः । सप्तैव शीलानि तेषु च । पञ्च पञ्चेति नियमवचनम् । प्रतिव्रतं प्रतिशीलं पञ्चातिचारा भवन्ति, न चत्वारः षड् वा । अतिचारपरिगणनं च सुखपरिहारार्थम् । यथाक्रममिति व्यतिकरनिवृत्त्यर्थम् । अन्यथा बन्धवधादयः स्थूलमृषावादनिवृत्तेरप्यतीचाराः स्युः । एवमितरेऽपि व्यतिकरेण प्राप्नुयुः । ऊर्ध्वं वक्ष्याम इति नियमप्रदर्शनं यदुपरिष्टादतीचारजातमभिधास्यामस्तदुक्तेषु व्रतादिषु यथाक्रममिति ॥ १९ ॥

भा०—तद्यथा—

---

१ धनुश्चिह्नान्तर्गतोऽयं पाठो घ-पुस्तक एव । २ 'भूताभूतगुण' इति घ-पाठः ।
३ अयं सूत्र-भाष्य-पाठो नोपलभ्यते कतमस्यामपि प्रत्याम्, इदमवतरणं तु घ-पुस्तकाधारेण कृतं मया ।

टी०—तद्यथेत्यनेन सम्बन्धमाचष्टे। यथा तदेतदतिचारजातं क्रमेण[1] व्रतादिषु सम्बध्यते संप्रति तथोच्यते। प्राक् तावत् स्थूलप्राणातिपातव्रतमुक्तं तस्यामी पञ्चातिचारा भवन्तीति निर्दिशति—

स्थूलप्राणातिपातविरमणव्रतस्यातीचाराः पञ्च

सूत्रम्—बन्ध-वध-च्छविच्छेदाऽतिभारारोपणा-ऽन्नपाननिरोधाः ॥ ७-२० ॥

टी०—तत्र बन्धनं बन्धः-संयमनं रज्जुदामकादिभिः, हननं वधः-ताडनं कशादिभिः, छविः-शरीरं त्वग् वा तच्छेदः-पाटनं द्विधाकरणं, भरणं भारः-पूरणं अतीव-बाढं सुष्ठु भारोऽतिभारस्तस्यारोपणं-स्कन्धपृष्ठादिस्थापनमतिभारारोपणम्, अन्नं अशनादि, पानं पेयमुदकादि तयोरदानं निरोधः। सर्व एव कृतद्वन्द्वा निर्दिष्टाः स्थूलप्राणातिपातविरतेरतीचाराः ॥

भा०—त्रसस्थावराणां जीवानां बन्धवधौ त्वक्छेदः काष्ठादीनां पुरुषहस्त्यश्वगोमहिषादीनां चातिभारारोपणं तेषामेव चान्नपाननिरोधः अहिंसाव्रतस्यातिचारा भवन्ति ॥ २० ॥

टी०—त्रसस्थावराणामित्यादि। त्रस्यन्तीति त्रसाः-द्वित्रिचतुःपञ्चेन्द्रियाः। तिष्ठन्तीति स्थावराः-स्थानशीला वृक्षादयो यथासम्भवमायोज्याः। द्रव्यभावप्राणैरजीवन् जीवन्ति जीविष्यन्ति चेति जीवाः तेषां त्रसस्थावराणां जीवानां बन्धवधौ, तत्र बन्धः शङ्खपिपीलिकादीनामपि सम्भवति। स च प्रायो निष्प्रयोजन इति नानुष्ठेयोऽणुव्रतिना, उत्सर्गतो[2] गृहिणा तादृशान्येव द्विपदचतुष्पदादीनि परिग्राह्याणि यान्यबद्धान्येवाऽऽसते, असम्भवात् तादृशामन्यत्र बन्धः सप्रयोजनः सोऽपि सापेक्षः[3], दयावता नातिगाढमूढग्रन्थिः कार्यो दुर्विनीतपुत्रकदासीदाससेवकादीनां गोमहिषीतुरगकरिकरभादीनां वा। वधोऽप्येवमेव द्विपदादिविषयो विकल्प्यः। प्राक् तावद् भीतपरिषत्केनैव भवितव्यमगारिणा। समुत्पन्नप्रयोजनस्तु सापेक्षो निर्दयप्रहारान् परिहरन् कशादिभिर्वयोऽपेक्षया[4] कर्णवलनचपेटादिभिश्च साधयेत्। तथा निष्प्रयोजनः छविच्छेदः परिहार्य एव, तदाह-त्वक्छेदः काष्ठादीनामिति। काष्ठशब्देन वृक्षपरिग्रहः, वृक्ष आदिरेषामिति, आदिग्रहणाद् भूमितेजःकरकद्विपदचतुष्पदपरिग्रहः। सप्रयोजनस्तु सापेक्षः कर्णपाटनाङ्कनादिरङ्गुलिसंदंशकश्रवणनासिकाच्छेदो वा मनाग् भयजननाय तस्करादीनामिति। पुरुषेत्यादि। पुरुषादयः कृतद्वन्द्वाः। आदिग्रहणात् खरकरभमेषच्छागपरिग्रहः। यथासम्भवं वा, एषामतिभारारोपणमतिचारः, उत्सर्गतो

---

१ 'चारक्रमेण' इति ङ-पाठः। २ 'व्युत्सर्गे' इति ग-पाठः। ३ 'सापेक्षात्' इति ङ-पाठः
४ 'क्षयोपेक्षया' इति ङ-पाठः।

भाटकशकटाद्याजीवः परित्याज्य एवान्यस्मादृते जीवनोपायाद्, बलीवर्दादीनां यथोचितभारादपि किञ्चिन्न्यूनभारारोपणं तृणपानीयाभ्यवहारोऽत्युष्णवेलायां च परिमोक्षणम्। द्विपदानि तु यं भारमात्मनोत्क्षेप्तुमवतारयितुं च शक्नुवन्त्यक्लेशेन तावत आरोपणापदेशः[1]। तेषामेव चान्नपाननिरोध इति पञ्चमोऽतिचारः। तेषामिति द्विपदचतुष्पदानामन्नपाननिरोधोऽप्रयोजनः परिहरणीय एव। सप्रयोजनं तु सापेक्षं कुर्यात्। दुर्विनीतानामपत्यादीनां मन्दतीक्ष्णाशयानामुदन्यतां[2][3] ज्वराद्यभिभूतानां चान्नपानं निरुणद्धि। स्वभोजनवेलायां तु ज्वरितादेरन्यान् नियमत एव तावद् भोजयित्वा स्वयं भुञ्जीतेत्युपदेशः। अहिंसाव्रतस्यातिचारा भवन्तीत्यव्यतिकरं दर्शयति। समासतोऽणुव्रती सर्वमेव बन्धादि प्रदर्शितमनुकम्पया जहदवश्यंभाविनि प्रयोजनेऽनुतिष्ठन्नातिचरति स्थूलां प्राणातिपातविरतिमिति ॥ २० ॥

स्थूलमृषावादविरतेरतिचाराभिधित्सयेदमाह—

स्थूलमृषावादविरमणव्रतस्यातीचाराः पञ्च

**सूत्रम्—मिथ्योपदेश-रहस्याभ्याख्यान-कूटलेखक्रिया-न्यासापहार-साकारमन्त्रभेदाः ॥ ७–२१ ॥**

टी०—**मिथ्योपदेशः**—असदुपदेशः परेणान्यस्यातिसन्धानं[4] स्वयं वाऽतिसन्धानमन्यस्येति। रहः—एकान्तस्तत्र भवं रहस्यं रहस्येनाभ्याख्यानम्—अभिशंसनमसदध्यारोपणं[5] रहस्याभ्याख्यानम्। कूटं—असद्भूतं लिख्यत इति लेखः करणं क्रिया कूटलेखक्रिया अन्यमुद्राक्षरबिम्बस्वरूपलेखकरणमिति। न्यस्यते—निक्षिप्यत इति न्यासः रूपकाद्यर्पणं तस्यापहारः—अपलापः, योऽत्र द्रव्यापहारः परस्वस्वीकरणलक्षणः स न विवक्षितः, तस्यादत्तादानविषयत्वात्, यत् तत्र वचनमपलापकं येन करणभूतेन न्यासोऽपह्रियते—अपलप्यते तद् वचनं न्यासापहारः। आकारोऽङ्गुलिहस्तभ्रूनेत्रक्रियाशिरःकम्पादिरनेकरूपः परशरीरवर्ती, तेन तादृशा आकारेण सहाविनाभूतो यो मन्त्रो—गूढः पराभिप्रायस्तमुपलभ्य सहाकारं मन्त्रमसूययाऽऽविःष्करोत्येष साकारमन्त्रभेदः प्रकाशनम्। मिथ्योपदेशादयः कृतद्वन्द्वाः पञ्चातिचाराः स्थूलानृतविरतेरिति।

सम्प्रति भाष्यमनुस्त्रियते—

भा०—एते पञ्च मिथ्योपदेशादयः सत्यवचनस्यातिचारा भवन्ति। तत्र मिथ्योपदेशो नाम प्रमत्तवचनमयथार्थवचनोपदेशो विवादेष्वतिसन्धानोपदेश इत्येवमादिः ॥

---

१ 'पणादेशः' इति ङ-पाठः। २ 'मतीक्ष्ण' इति ङ-पाठः। ३ 'मौदन्यता' इति ङ-पाठः
४ 'सन्धापनं' इति ङ-पाठः। ५ 'मिशमनमध्यारोपणं' इति ङ-पाठः।

टी०—एते पञ्चेत्यादि। एत इति सूत्रोक्ताः पञ्चैति पञ्चैव, मिथ्योपदेशादय इति नामग्राहमाचष्टे। स्थूलमृषापरित्यागे न असत्यं वक्तव्यमित्यत्र सत्यवचनस्यातिचारा भवन्ति। तत्र मिथ्येत्यादिषु पञ्चस्वतीचारेषु मिथ्योपदेशस्तावत्। नामशब्दः क्रमाद्योतकः। प्रमत्तस्य वचनं परपीडाजननम्—वाह्यन्तां खरोष्ट्राः हन्यन्तां दस्यव इति, यथा अर्थः स्थितस्तथा वचनोपदेशः साधुः, तद्विपरीतस्त्वयथार्थवचनोपदेशः यथा परेण पृष्टः सन्देहापन्नेन तथोपदेश इति। विवादेष्वित्यादि। विवादः—कलहः तत्रान्यत्रान्यतरस्यातिसन्धानोपायमुपदिशति, अतिसन्धानं—छलनम्। आदिशब्दात् फाणितकद्यूतग्रहणम्। एवमादिः—एवंप्रकारः सर्व एव मिथ्योपदेशोऽवसेयः॥

भा०—रहस्याभ्याख्यानं नाम स्त्रीपुंसयोः परस्परेणान्यस्य वा रागसंयुक्तं हास्यक्रीडासङ्गादिभिः रहस्येनाभिशंसनम्॥

टी०—रहस्येत्यादि। रहस्येन कर्मणाऽभ्याख्यानं स्त्रीपुंसयोः परस्परेणेति प्रतारणद्वारेण—यदि वृद्धा स्त्री ततस्तस्यै कथयति—अयं तव भर्ता कुमार्यामतिप्रसक्तः, अथ तरुणी तत एवमाह—अयं ते भर्ता प्रौढचेष्टितायां मध्यमवयसि योषिति प्रसक्तस्तथाऽयं खरकामो मृदुकाम इति वा परिहसति। तथा स्त्रियमभ्याख्याति भर्तुः पुरः—पत्नी ते गर्हयत्येवमयं मां रहसि कामगर्दभः खलीकरोतीत्यादि। अन्यस्य वेति। दम्पतीव्यतिरिक्तस्य वैकैकस्य पुंसः स्त्रिया वा तत्कालयोग्यम्। रागसंयुक्तमिति दम्पत्योरन्यस्य वा येन रागः—प्रहर्ष उत्पद्यते तेन तादृशा रहस्येनानेकप्रकारेण कर्मणाऽभिशंसनमिति। हास्येत्यादि। अभ्याख्याताऽपि परिहासक्रीडानुबन्धात् तादृशं भाषते, नाभिनिवेशेन। हास्यं—परिहासः सैव क्रीडा, आसक्तिः आसङ्गः—अनुबन्धः। आदिशब्दः प्रकारवचनः। हास्यक्रीडाप्रकारैः, अथवा हास्यप्रकारैः क्रीडाप्रकारैर्वेति पृथगभिसम्बन्धः॥

भा०—कूटलेखक्रिया लोकप्रतीता॥ न्यासापहारो विस्मरणकृतपरनिक्षेपग्रहणम्॥ साकारमन्त्रभेदः पैशुन्यं गुह्यमन्त्रभेदश्च॥ २१॥

टी०—कूटलेखक्रिया लोकप्रतीतेति अत्यन्तप्रसिद्धा सुज्ञाना, मुद्राक्षरादिविन्यासः कूटतुल्य इति। अत्रापि यत् तद् भूर्जत्वगादिन्यस्तं च वचनं तत् कूटलेखक्रियाशब्देनोच्यत इति सत्यव्रतातिचारः। न्यासापहार इत्यादि। गोपायनाय स्वद्रव्यार्पणमन्यस्य न्यासः तस्यापहारः—अपलापः सुश्लिष्टवचनेन। एतदेव स्पष्टयति—विस्मरणकृतपरनिक्षेपग्रहणं विस्मरणेन कृतं परनिक्षेपस्य ग्रहणम्—येन निक्षिप्तानि पञ्च शतानि, शतसङ्ख्या विस्मृता, सा च,

---

१ 'द्योतनार्थः' इति ङ-पाठः। २ 'लोके प्रतीता' इति क-ग-पाठः। ३ 'भेदैः' इति ग-पाठः। ४ 'भेदैश्च' इति ग-पाठः।

अधुना निक्षेपमार्गणाकाले ब्रवीति—न सुष्ठु स्मरामि किं चत्वारि शतान्यर्पितानि तव तदा अथ पञ्च शतानीति ? । यदर्पितं तद् देहीति, निक्षेपकस्य गोपायिता प्रत्याह—चत्वार्येवेति । एवं परेण निक्षिप्तस्य परविस्मरणकृतस्य शतस्य ग्रहणं येन करणतामापन्नेन क्रियते स सत्यव्रतातिचार इति । साकारमन्त्रभेद इति । आकारः शरीरावयवसमवायिनी क्रियाऽन्तर्गताकूतसूचिका तेन विशिष्टेनाकारेण सहाविनाभूतो योऽभिप्रायः स साकारमन्त्रस्तस्य भेदः—प्रकाशनम् । एतदुक्तं भवति—अनधिकृतसन्निधौ चेष्टाविशेषैः स्वाकूतप्रकाशनमाकारः । तमेव स्पष्टतरमुदाहरति—पैशुन्यं गुह्यमन्त्रभेदश्चेति । प्रीतिं शूनयतीति पिशुनस्तद्भावः पैशुन्यम्, द्वयोः प्रीतौ सत्यामेकस्याकारैरुपलभ्याभिप्रायमितरस्य तथा कथयति यथा प्रीतिः प्रणश्यतीति । गुह्यं—गूहनीयं न सर्वस्मै यत् कथनीयम् । मन्त्रणं मन्त्रो—गुप्तभाषणं राजादिकार्यसम्बन्धस्तस्य भेदः—प्रख्यापनम् । एवमेतत् सत्यव्रतमप्यस्तातिचारं सम्यगनुपालनीयमिति ॥२१॥

स्थूलादत्तादानविरतेरप्यमी पञ्चातिचाराः परिहार्याः—

स्थूलादत्तादानविरमणव्रतस्यातिचाराः पञ्च

**सूत्रम्—स्तेनप्रयोग-तदाहृतादान-विरुद्धराज्यातिक्रम-हीनाधिकमानोन्मान-प्रतिरूपकव्यवहाराः ॥ ७–२२ ॥**

**टी०—**स्तेनाः—चौरास्तान् प्रयुंक्ते—हरत यूयं इति हरणक्रियायां प्रेरणमभ्यनुज्ञानं वा प्रयोगः, अथवा परस्वादानोपकरणानि कर्तरीघर्घरकादीनि । तदाहृतादानमिति तच्छब्देन स्तेनपरामर्शः तैराहृतम्—आनीतं कनकवस्त्रादि तस्यादानं—ग्रहणं (अल्प)मूल्येन मुधिकया वा । विरुद्धराज्यातिक्रम इति । विरुद्धयोर्नृपयोः राज्यं तस्यातिक्रमः—अतिलङ्घनमाक्रमणम्, अन्यतरराज्यनिवासिन इतरस्य राज्यं प्रविशन्तीतरराज्यनिवासिनो वाऽन्यतरराज्यमभिगच्छन्तीति विरुद्धराज्यातिक्रमः । स चानेकप्रत्यवायः । हीनाधिकमानोन्मानमिति । हीनं—न्यूनं अधिकं—अतिरिक्तं मानं उन्मानं वा । तत्र मानं—कुडवादि । उन्मानं—तुलादि । हीनं मानमुन्मानं वा अन्यदानकाले करोति । स्वयं पुनर्गृह्णन्नधिकं करोति । प्रतिरूपकव्यवहार इति । प्रतिरूपकः—तादृशः तस्य विविधमवहरणं व्यवहारः—प्रक्षेपः प्रतिरूपकप्रक्षेप इति यावत् । यद् यत्र घटते व्रीह्यादि तैलादिषु पलञ्जिवसादि तत् तत्र प्रक्षिप्य विक्रीणीत इति । स्तेनप्रयोगादयः कृतद्वन्द्वाः पञ्चास्तेयाणुव्रतस्यातिचारा बोद्धव्याः ॥

सम्प्रति भाष्यमनुस्रियते—

**भा०—**एते पञ्चास्तेयव्रतस्यातिचारा भवन्ति । तत्र स्तेनेषु हिरण्यादिप्रयोगः ॥ स्तेनैराहृतद्रव्यस्य मुधा क्रयेण वा ग्रहणं तदाहृतादानम् ॥

---

१ 'मार्गणकाले' इति ङ-पाठः । २ 'कूटसूचिका' इति ङ-पाठः । ३ 'अन्यथाकृतसन्निधौ चेष्टाविशेषः' इति ङ-पाठः । ४ 'माधिकया' इति ङ-पाठः । ५ 'पलनादि' 'पलञ्ज्यादि' इति पाठौ । ६ 'हृतस्य द्रव्यस्य' इति घ-पाठः ।

टी०—एते इत्यादि गतार्थम्। तत्रेत्यादि। तत्र–तेष्वतीचारेषु। स्तेनप्रयोगस्तावद-यम्–स्तेनेषु–तस्करेषु सम्भवति हिरण्याद्यर्थं प्रयोगो हिरण्यादिप्रयोगः हिरण्यं रजतं घटिता-घटितरूपम्। आदिशब्दात् कनकं च। घर्घरका याभिर्ग्रन्थिं छित्त्वा गृह्णातीति। तथा खात्रखन-नकादि, एवंविधमुपकरणं नाणुव्रतिना निवर्तनीयं न विक्रेयमिति। स्तेनैरित्यादि। तस्करो-पनीतस्य द्रव्यस्य रजतादेर्मुधा–विना मूल्येन क्रयेण वा मूल्यप्रदानेन ग्रहणं तदाहृतादानं अनेकप्रत्यवायमिति परिहार्यम् ॥

भा०—विरुद्धराज्यातिक्रमश्चास्तेयव्रतस्यातिचारः। विरुद्धे हि राज्ये सर्व-मेव स्तेययुक्तमादानं भवति॥ हीनाधिकमानोन्मानप्रतिरूपकव्यवहारः।

टी०—विरुद्धेत्यादि। विरुद्धराज्यातिक्रमः। अतिक्रमो–व्यवस्थोल्लङ्घनम्। व्यवस्था च परस्परविरुद्धराज्यकृतैव। चशब्दः समुच्चायकः। एष चास्तेयव्रतस्यातिचारः। विरुद्धे हीत्यादि। यस्माद् विरुद्धे राज्ये सर्वमादानं–ग्रहणं तृणकाष्ठादेरपि स्तेययुक्तं–चौरतया सम्बद्धं भवति। तस्माद् विरुद्धराज्यातिक्रमो न कार्यः॥ हीनाधिकेत्यादि। समस्यातिचारद्वयं निर्दिष्टं भाष्यकारेण व्यवहारसम्बन्धनार्थं, हीनमानव्यवहारोऽधिक-मानव्यवहारः हीनोन्मानव्यवहारोऽधिकोन्मानव्यवहारश्चेति। एतदेव विवृणोति—

भा०—कूटतुलाकूटमानवञ्चनादियुक्तः क्रयो विक्रयो वृद्धिप्रयोगश्च।

टी०—कूटतुलेत्यादि। प्रसिद्धटङ्कादिटङ्किता अकूटतुला। ततोऽपरा कूटतुला। एवं मानमपि, आभ्यां कूटतुलाकूटमानाभ्यां वञ्चनं–दम्भनं छलनं, आदिशब्दाद् वञ्चनकार्य-क्रियाग्रहणं तैर्युक्तस्तद्युक्तः सम्बद्धः क्रयबद्धः। क्रयो–ग्रहणं विक्रयो–मूल्येन दानं, सर्वमे-तन्न कार्यम्। वृद्धिप्रयोगश्चेति हीनाधिकव्यवहारः, सामान्यवृद्धिप्रयोगोपन्यासः। स्वरू-पकादि वृद्ध्याऽन्यस्य ददाति, सा च वृद्धिरन्याय्या न्याय्या च। तत्रान्याय्या परिहरणीया दशै-कादशकप्रभृतिः। यद्यप्युभयरुच्या सा क्रियते तथाप्यतितृष्णाभिभूत इत्यपोद्यते लोकेन। न्याय्या नूतन( तूना सा ? ) आदेयेति॥

भा०—प्रतिरूपकव्यवहारो नाम सुवर्णरूप्यादीनां द्रव्याणां प्रतिरूपक-क्रिया व्याजीकरणानि चेत्येते पञ्चास्तेयव्रतस्यातिचारा भवन्ति॥ २२॥

टी०—प्रतिरूपेत्यादि। नामशब्दः स्वरूपार्थः। प्रतिरूपकव्यवहारस्वरूपमिति। सुवर्णस्य प्रतिरूपक्रिया यादृक् सुवर्णं तादृशमेवापरद्रव्यं वर्णगौरवादिगुणयुक्तं निष्पादयति प्रयोगविशेषात्। तथा रूप्यं–रजतं कतिपयदिवसस्थायीति। आदिग्रहणात् तैल-घृत-क्षीर-दधि-

---

१ 'घटितरूपं' इति ग-पाठः। २ 'कानि' इति ङ-पाठः। ३ 'मानग्रहणं' इति ङ-पाठः। ४-५ 'तुल्या' इति ग-पाठः। ६ 'भूतत आदे०' इति च-पाठः। ७ 'प्रतिरूपक्रिया' इति क-ग-पाठः।

तक्र-ताम्र-कांस्यादिपरिग्रहः । व्याजीकरणानि चेति । व्याजीकरणमपहृतानामन्यैर्गवादीनां सशृङ्गाणामग्निपक्वकालिङ्गीफलस्वेदितानि शृङ्गाण्यधोमुखानि प्रगुणानि तिर्यक् कलितानि वा यथारुचि शक्यन्ते कर्तुं येथाऽन्यत्वमिव प्रतिपद्यन्ते गवादयः । तथा कृतेषु शृङ्गेषु न सुखेनावधार्यन्तेऽन्यहस्ते वा विक्रीयन्त इति व्याजः । छन्नाच्छन्नरूपाणां छन्नरूपत्वापादनं व्याजीकरणम् । एवमेते पञ्चास्तेयव्रतस्यातिचारा भवन्ति ॥ २२ ॥

चतुर्थाणुव्रतस्यातिचाराभिधित्सयेदमुच्यते—

स्थूलमैथुनविरमण-व्रतस्य पञ्चातिचाराः

सूत्रम्—परविवाहकरणे-त्वरपरिगृहीता-ऽपरिगृहीता-गमना-ऽनङ्गक्रीडा-तीव्रकामाभिनिवेशाः ॥७–२३॥

टी०—एते पञ्च ब्रह्मव्रतस्यातिचाराः कृतद्वन्द्वा निर्दिष्टाः । परविवाहकरणं, इत्वरपरिगृहीतागमनं, अपरिगृहीतागमनं, अनङ्गक्रीडा, तीव्रकामाभिनिवेशश्चेति । तत्र परविवाहकरणमिति । स्वापत्यस्यागारिणोऽवश्यंतयैव विवाहः कार्यः, परविवाहकरणात् तु निवर्तते । गृहस्थश्च द्वाभ्यां प्रकाराभ्यामब्रह्मणो निवर्तते स्वदारसन्तोषप्रतिपत्त्या परपरिगृहीतदारानभिगमनेन वा । स्वदारसेवनमेव प्रथमोऽभ्युपैति, शेषात् निवर्तते । द्वितीयस्तु परपरिगृहीतदारासेवनात् निवर्तते, न स्वदारेभ्यो न वा अपरिगृहीतवेश्यादिभ्यः । तयोश्च यथासम्भवमतिचारा स्वमतानुसारेणाभ्यूह्याः । तत्र स्वापत्यव्यतिरिक्तमन्यापत्यं परशब्देनोच्यते तस्य विवाहकरणं–विवाहक्रिया, कन्याफललिप्सया वा स्नेहसम्बन्धेन वा । इत्वरपरिगृहीतागमनम् । प्रतिपुरुषगमनशीला इत्वरा–वेश्याऽनेकपुरुषगामिनी भवति । तस्यै च यदाऽन्येन कश्चित् कालमभिगृह्य भाटी दत्ता भवति तावन्तं कालं अगम्याऽसौ निवृत्तपरदारस्य भवति । इत्वरा चासौ परिगृहीता चेति इत्वरपरिगृहीता । गमनम्–अभिगमो–मैथुनासेवनम् । अथवा इत्वरं स्तोकमप्युच्यते । इत्वरं–स्तोकमल्पं परिगृहीता इत्वरपरिगृहीता, अकृतलक्षणस्तत्पुरुषो मयूरव्यंसकादौ क्षेप्यः । अथवा इत्वरकालं परिगृहीता । शाकपार्थिवादित्वात् समासः काल(शब्द)लोपश्च । अपरिगृहीतागमनम् । वेश्या स्वैरिणी प्रोषितभर्तृकादिरनाथा अपरिगृहीता तदभिगममाचरतः स्वदारसन्तुष्टस्यातिचारः, न तु निवृत्तपरदारस्य[1] । अनङ्गः–कामः कर्मोदयात् पुंसः स्त्रीनपुंसकपुरुषासेवनेच्छा हस्तकर्मादीच्छा वा योषितोऽपि योषिन्नपुंसकपुरुषासेवनेच्छा हस्तकर्मादीच्छा वा नपुंसकस्यापि नपुंसकपुरुषस्त्रीसेवनेच्छा हस्तकर्मादीच्छा वा स एवंविधोऽभिलापोऽभिप्रायो मोहोदयादुद्भूतः काम उच्यते, नान्यः कश्चित् कामः[2] । तेन तत्तत्क्रीडा[3]–रमणमनङ्गक्रीडा आहार्यैः काष्ठपुस्तफलमृत्तिकाचर्मादिघटितप्रजननैः, कृतकृत्योऽपि च स्वलिङ्गेन भूयो मृद्नात्येव[4]वाच्यप्रदेशं योषितां तथा केशकर्षणप्रहारदानदन्तनखकदर्थनाप्रकारैर्मोहनीयकर्मवशात्[5] किल क्रीडति, तथा-

१ 'ततश्चान्य०' इति च-पाठः । २ 'करणमित्वर.' इति क-ख-ग-पाठः । ३ 'तत्र क्रीडा' इति ङ-पाठः । ४ 'गृह्णात्येव' इति ङ-पाठः । ५ 'कर्मावेशात्' इति ङ-पाठः ।

प्रकारा कामसेवा सर्वेपामनङ्गक्रीडा बलवति रागे प्रसूयते। समाचरतश्चैवमधैर्येण क्लिष्टचित्तस्य कियत् फलम्?, तात्कालिकी छिद्रा व्याधेस्तावदेव फलं, इतरस्य च मार्गेणर्जुना सेवमानस्येति, नानङ्गक्रीडया कश्चिद् गुणोऽतिरिक्तो लभ्यत इति उभयोरुभयमतिचार इति। तीव्रकामाभिनिवेश इति। तीव्रः-प्रकर्षप्राप्तः कामेऽभिनिवेशस्तीव्रकामाभिनिवेशस्तावत् पर्यन्तचित्तता परित्यक्तान्यसकलव्यापारस्य तदध्यवसायिता मुखपोपोपस्थकक्षान्तरेष्ववितृप्ततया प्रक्षिप्य लिङ्गमास्ते मृत इव महतीं वेलां निश्चलश्चटकैर इव मुहुर्मुहुश्चटकायामारोहति योपिति, वाजीकरणानि चोपयुंक्ते जातकलमलकः। अनेन खल्वौषधप्रयोगेण गजप्रसेकी तुरङ्गावमर्दी च भवति पुरुष इत्ययमप्युभयोरतीचार इति। एते पञ्च ब्रह्मव्रतस्यातीचारा भवन्तीति।

सूत्रपाठ-परामर्शः अन्ये पठन्ति सूत्रम्-"परविवाहकरणेत्वरिकापरिगृहीतापरिगृहीतागमनानङ्गक्रीडातीव्रकामाभिनिवेश" इति। तत्र न बुद्ध्यामहे इत्वरिकापरिगृहीतागमनमिति। यदि कर्मधारयस्ततः पुंवद्भावः। अथासमासस्ततः सम्बन्धोऽपि दुर्घटः। न चान्यः प्रकारः समस्ति। अन्ये त्वन्यथा पदानि वदन्ति। परविवाहकरणं इत्वरिकागमनं परिगृहीताऽपरिगृहीतागमनं अनङ्गक्रीडा तीव्रकामाभिनिवेश इति त एवंवादिन इत्वरिकां व्याचक्षते। कुत्सितसंकीर्णयोपिदित्वरिका। तद्यथा-उन्मत्ता बधिरा अन्धा मूंकिका बाला दीक्षितेत्यादिका। एतदभिगमात् किल राजभयलोकाकीर्तिप्रत्यवायसम्भवः। परिगृहीता किल प्रोपितभर्तृकेति सर्वमिदमननुपाति व्याख्यानमित्यपकर्ण्यम् ॥

भा०—परविवाहकरणं इत्वरपरिगृहीतागमनं अपरिगृहीतागमनं अनङ्गक्रीडा तीव्रकामाभिनिवेश इत्येते पञ्च ब्रह्मव्रतस्यातिचारा भवन्ति॥ २३ ॥

टी०—गतार्थमेवेति ॥ २३ ॥

इच्छापरिमाणव्रतातिचारव्याचिख्यासयेदमाह—

स्थूलपरिग्रहपरिमाणव्रतस्य पञ्चातीचाराः

## सूत्रम्—क्षेत्रवास्तु-हिरण्यसुवर्ण-धनधान्य-दासीदास-कुप्य-प्रमाणातिक्रमाः॥ ७–२४ ॥

टी०—क्षेत्रवास्त्वादीनां कुप्यान्तानां कृतद्वन्द्वानां प्रमाणानि प्राक् संकल्प्य यानि विशिष्टकालावधिकानि गृहीतानि तेषामुल्लङ्घनम्—अतिक्रमः, प्रमाणातिक्रम इति प्रत्येकमभिसम्बध्य भाष्यकृद् दर्शयति—

---

१ 'पर्यन्तच्छिन्नता' इति ङ-पाठः, 'पर्यन्ताश्रितता' इति तु क-ग-पाठः। २ 'मुखाय स्वकक्षान्तरे।' इति ङ-पाठः। ३ 'छिदन्ति' इति च-पाठः। ४ 'तार्किका' इति ङ-पाठः, 'अस्तकिका' इति तु च-पाठः' ५ 'परिगृहीतापरिगृहीता' इति च-पाठः। ६ 'वर्ण्यते' इति क-ग-पाठः।, ७ 'तीव्रोऽतिकामा०' इति ग-पाठः।

भा०—क्षेत्रवास्तुप्रमाणातिक्रमः हिरण्यसुवर्णप्रमाणातिक्रमः धनधान्यप्रमाणातिक्रमः दासीदासप्रमाणातिक्रमः कुप्यप्रमाणातिक्रमः इत्येते पञ्च इच्छापरिमाणव्रतस्यातिचारा भवन्ति ॥ २४ ॥

टी०—क्षेत्रवास्तुप्रमाणातिक्रम इत्यादि। तत्र क्षेत्रं सस्योत्पत्तिभूमिः। तच्च सेतुकेतुभेदाद् द्विविधम्। तत्र सेतुक्षेत्रं अरघट्टादिसेक्यम्। मेघाकाशपतितोदकनिष्पाद्यसस्यं केतुक्षेत्रम्। वास्तु अगारं गृहमुच्यते। तदपि त्रिविधं खातं भूमिगृहकादि, उच्छ्रितं प्रासादादि, खातोच्छ्रितं भूमिगृहस्योपरि प्रासादादिसन्निवेशः, तेषां क्षेत्रवास्तूनां प्रमाणं प्रत्याख्यानकालेऽभिगृहीतम्—एतावन्ति क्षेत्राणि वास्तूनि च विहाय शेषस्य प्रत्याख्यानं यावच्चतुर्मासीं संवत्सरं यावज्जीवं वा। अवधिकृतकालाभ्यन्तरे संकल्पितप्रमाणातिरेकक्षेत्रवास्तुग्रहणं इच्छापरिमाणव्रतातिचारः। हिरण्यं रजतं घटितमघटितं वाऽनेकप्रकारं पात्र्यादिकम्[2]। तथा सुवर्णमपि। एतद्ग्रहणाच्चेन्द्रनीलमरकताद्युपलकपरिग्रहः। सर्वेषामभिगृहीतप्रमाणातिक्रमेऽतिचारः। धनं गो-महिष्य-ऽजाविका-करभ-तुरग-करिप्रभृतिचतुष्पदपरिग्रहः। धान्यं व्रीहि-कोद्रव-मुद्ग-माष-तिल-गोधूम-यवप्रभृति सर्वमगारिणा परिमितं ग्राह्यं, उपरि प्रमाणाद् ग्रहणमतिचारः। दासीदासाः[1] कर्मकराः उपरुधिका वा परिणयनादिविधिना स्वीकृता वा पत्नीत्यादि-सकलद्विपदाभिगृहीतपरिमाणातिक्रमोऽतीचारः। ततश्च हंस-मयूर-कुर्कुट-सारिकादीनां च प्रमाणातिक्रमेऽतिचारः। कुप्यं कांस्य-लोह-ताम्र-सीसक-त्रपु-मृद्भाण्डक-त्वचिसार-विकारोदन्तिका-रोदन्तिका-काष्ठ-कुण्डक[3]-पारी-मञ्चक-मञ्चिकादिप्रमाणातिरेकग्रहणमतिचार इति। एवमेते इच्छापरिमाणव्रतस्यातिचाराः पञ्च भवन्तीति ॥ २४ ॥

क्षेत्रवास्तुभेदाः

एवमणुव्रतातिचारानभिधाय सम्प्रति दिगादिव्रतानां क्रमेणातिचारानभिधातुमिच्छन्नाह। तत्र दिग्व्रतस्य तावत्—

दिग्व्रतस्य पञ्चातीचाराः

## सूत्रम्—ऊर्ध्वाधस्तिर्यग्व्यतिक्रमक्षेत्रवृद्धिस्मृत्यन्तर्धानानि ॥ ७–२५ ॥

भा०—ऊर्ध्वव्यतिक्रमः अधोव्यतिक्रमः तिर्यग्व्यतिक्रमः क्षेत्रवृद्धिः स्मृत्यन्तर्धानमित्येते पञ्च दिग्व्रतस्यातिचारा भवन्ति। स्मृत्यन्तर्धानं नाम[4] स्मृतेर्भ्रंशोऽन्तर्धानमिति ॥ २५ ॥

टी०—ऊर्ध्वमधस्तिर्यक् प्राक्परिगृहीतस्य परिमाणस्य व्यतिक्रमः इति। व्यतिक्रमः प्रत्येकमभिसम्बन्धनीयः। क्षेत्रवृद्धिः स्मृत्यन्तर्धानं चेति। सर्वे कृतद्वन्द्वा दिक्परिमाणस्याती-

---

१ 'दासदासी–' इति क–ग–पाठः। २ 'पत्रादि' इति ग-पाठः। ३ 'कुतुक-' इत्यपि पाठः। ४ 'नियमं ऊर्ध्वं स्मृते०' इति ग-पाठः।

चाराः पञ्च दिग्व्रतस्यातीचारा भवन्ति। ऊर्ध्वं पर्वततरुशिखरारोहणादिपरिमाणम्। अधश्चाधोलौकिकग्रामभूमिगृहकूपादिपरिमाणम्। तिर्यगपि योजनमर्यादाभिग्रहव्यतिक्रमः। क्षेत्रवृद्धिरित्येकतो योजनशतपरिमाणमभिगृहीतम्, अन्यतो दश योजनानि अभिगृहीतानि, दिशि तस्यामुत्पन्ने प्रयोजने योजनशतमध्यादपनीय अन्यानि दश योजनानि तत्रैव स्वबुद्ध्याऽग्रे प्रक्षिपति संवर्धयत्येकत इति क्षेत्रवृद्धिरेषा। स्मृत्यन्तर्धानस्वरूपमाचष्टे। स्मृतेर्भ्रंशोऽन्तर्धानमिति अविस्मृतिमूलं नियमानुष्ठानम्। स्मृतिभ्रंशे तु नियमत एव नियमभ्रंशः किं मया परिगृहीतं कया मर्यादयेति व्रतमित्यस्मरतोऽन्तर्धानम्-अपाकरणं, तिरस्करणं नियमस्येति ॥ २५ ॥

देशव्रतविरतेरतिचाराभिधानायाह—

देशावकाशिकव्रतस्य पञ्चातीचाराः

**सूत्रम्—आनयनप्रेष्यप्रयोगशब्दरूपानुपात-पुद्गलक्षेपाः ॥ ७-२६ ॥**

भा०—द्रव्यस्यानयनं प्रेष्यप्रयोगः शब्दानुपातः रूपानुपातः पुद्गलक्षेप इत्येते पञ्च देशव्रतस्यातिचारा भवन्ति ॥ २६ ॥

दिग्देशव्रतयोर्विशेषः

टी०—दिग्व्रतविशेष इव देशव्रतम्। इयांस्तु विशेषः-एकं यावज्जीवं संवत्सरं चतुर्मासपरिमाणं वा। देशव्रतं तु प्रतिदिवसं प्रतिप्रहरं प्रतिमुहूर्तादिपरिमाणम्। अस्यातिचाराः पञ्च भवन्ति—द्रव्यस्यानयनमित्यादि। विशिष्टावधिके भूप्रदेशाभिग्रहे परतो गमनासम्भवात् ततो यदन्योऽनधिकृतदेशाद् बहिर्वर्तिनः सचित्तादिद्रव्यस्यानयनाय प्रयुज्यते त्वयेदमानेयं सन्देशकप्रदानादिनाऽऽनयनप्रयोगः। आनायनप्रयोगः इत्यपरे पठन्ति। बलाद् विनियोज्यः प्रेष्यप्रयोगः यत्राभिगृहीतप्रविचार(?)देशव्यतिक्रमभयात् प्रेष्यं प्रहिणोति त्वयाऽवश्यमेव गत्वा मम गवाद्यानेयं इदं वा कर्तव्यं तत्रेति प्रेष्यप्रयोगः। स्वगृहवृतिप्राकारादिविच्छिन्नभूप्रदेशाभिग्रहे बहिः प्रयोजने उत्पन्ने स्वयमगमनात् वृतिप्रकारप्रत्यासन्नवर्ती भूत्वा अभ्युच्छ्वसितादि शब्दकरणेन समवसतिकान् बोधयति। ते च तच्छब्दश्रवणात् तदुपकण्ठमाढौकन्त इति स देशव्रतातिचारः। अनुपातशब्दः प्रत्येकमभिसम्बध्यते। शब्दमनु पततीति शब्दानुपातः। स एव श्रोता पुरुषः। अथवा शब्दस्यानुपतनम्-उच्चारणं तादृग् येन परकीयश्रवणविवरमनुपतति शब्दः, तथा रूपानुपातः शब्दमनुच्चारयन्नुत्पन्नप्रयोजनः स्वशरीररूपं परेषां दर्शयति, तद्दर्शनाच्च तत्समीपमागच्छन्ति ते द्रष्टार इति रूपानुपातः। तथा पुद्गलप्रक्षेपातिचारः। पुद्गलाः परमाण्वादयः। तत्संयोगाद् द्व्यणुकादयः स्कन्धाः सूक्ष्मस्थूलभेदाः। तत्र ये बादराकारपरिणता लोष्टेष्टकाष्ठशकलादयस्तेषां क्षेपः-प्रेरणम्। कार्यार्थी हि विशिष्टदेशाभिग्रहे सति परतो गमनाभा-

१ 'पुद्गलप्रक्षेपाः' इति घ-टी-पाठः। २ 'संदाना' इति ङ-पाठः। ३ 'तत्र कर्तव्यमिति' इति ङ-पाठः।

वात् लोष्टादीन् परेषां प्रतिबोधनाय क्षिपति। लोष्टादिपातसमनन्तरमेव च ते तत्समीपमनुधावन्तीत्येते पञ्च देशव्रतस्यातिचारा भवन्ति यस्माद् गमनागमनजनितप्राणव्यपरोपणपरिजिहीर्षया देशावकाशिकव्रतमभिगृह्यतेऽगारिणः तत्र स्वयमुपमर्दः कृतोऽन्येन वा कारित इति न कश्चित् फले विशेषः प्रत्युत स्वयं गमने कियानपि गुणो लभ्यते। ईर्यापथविशुद्धौ स्वयं निपुणत्वात्, परस्य च प्रमादवतो गमने ( आगमने ) भूतोपमर्दसम्भवादिति ॥ २६ ॥

एवं प्रज्ञप्ते देशव्रतातिचारेऽनर्थदण्डविरतेरतिचाराभिधित्सयेदमुच्यते—

अनर्थदण्डविरमणव्रतस्य पञ्चातीचाराः

## सूत्रम्—कन्दर्प-कौत्कुच्य-मौखर्या-ऽसमीक्ष्याधिकरणोपभोगाधिकत्वानि ॥ ७-२७ ॥

टी०—कन्दर्पः—कामस्तद्धेतुः विशिष्टो वाक्प्रयोगः कन्दर्प उच्यते। रागोद्रेकात् प्रहासमिश्रोऽशिष्टवाक्प्रयोगः कन्दर्पः। मुखनयनोष्ठचरणभ्रूविकारपूर्वकः परिहासादिजनको भाण्डावकरस्येव कायिको व्यापारः। कौत्कुच्यं कुत्सितसङ्कोचनादिक्रियायुक्तः कुत्कुचः तद्भावः कौत्कुच्यम्—अनेकप्रकारा भाण्डादिविडम्बनक्रियाः। कुदिति कुत्सायां निपातो निपातानामानन्त्यात्। अन्ये पठन्ति कौकुच्यमिति तेषां कुत्सितः कुचः संकोचनादिक्रियाभाक् तद्भावः कौकुच्यम्। धार्ष्ट्यप्रायमसभ्यासम्बद्धबहुलप्रलापित्वं मौखर्यम्। असमीक्ष्य—अनालोच्य प्रयोजनमात्मनोऽर्थमधिकरणं उचितादुपभोगादतिरेककरणमसमीक्ष्याधिकरणं मुसलदात्रशिलापुत्रकशस्त्रगोधूमयन्त्रकशिलाग्न्यादिदानलक्षणम्। उपभोग आत्मनः पान-भोजन-चन्दन-कुङ्कुम-कस्तूरिकाविलेपनादिः। अतिरिक्तोऽन्यार्थो दण्डोऽनर्थदण्डः केवलमेनसो हेतुः। प्रत्येकमुपभोगस्तुल्य एवेत्युपभोगादधिकत्वमुपभोगाधिकत्वमिति, कृतद्वन्द्वाः पञ्चाप्यनर्थदण्डविरतिव्रतस्यातिचारा भवन्तीति ॥

भा०—कन्दर्पः कौत्कुच्यं मौखर्यमसमीक्ष्याधिकरणमुपभोगाधिकत्वमित्येते पञ्चानर्थदण्डविरतेरतिचारा भवन्ति। तत्र कन्दर्पो नाम रागसंयुक्तोऽसभ्यो वाक्प्रयोगः हास्यं च। कौत्कुच्यं नाम एतदेवोभयं दुष्टकायप्रचारसंयुक्तम् ॥

टी०—कन्दर्प इत्यादि भाष्यं प्रायो गतार्थम्। तत्र कन्दर्पो नामेत्यादि। तत्र-तेषु पञ्चस्वतीचारेषु कन्दर्पस्तावद् वाग्व्यापारः तत्स्वरूपकथनं रागसंयुक्त इति, रागः-कामानुषङ्गी स्नेहस्तत्सम्बद्धः, समार्हः—सभ्यः, न सभ्योऽसभ्यः अयुक्तो वाक्प्रयोगः वाचः प्रयोग—उच्चारणं वाक्प्रयोगः। हास्यं हि यावदस्पष्टवर्णश्रुतिरूपमिति। हास्यं चेति।

---

१ 'विरत्यति' इति ङ-पाठः। २ 'कौकुच्य०' इति घ-पाठः। ३ 'भण्डेऽवकरणस्येव' 'भण्डचरणस्येव' इति पाठौ। ४ 'रतिव्रतस्यातिचारा' इति घ-पाठः। ५ 'नाम सरागसं०' इति ग-पाठः। ६ 'कायप्रचोचार' इति घ-टीपाठः। ७ 'मोहोदयादवसङ्ग०' इति घ-पाठः।

कौत्कुच्यं नामेत्यादि । नामशब्दोऽलङ्कारार्थः । एतदेव च वाचो व्यापारणं हसनं चोभयं-द्वयमपि, दुष्टकायप्रवीचारसंप्रयुक्तमिति । दुष्टः कायप्रवीचारो मोहनीयकर्मोदयसमावेशाद् तद्युक्तं—तत्सम्बद्धमुभयमपि वाग्व्यापारोपसर्जनं कायव्यापारप्रधानं कौत्कुच्यमिति ।

**भा०—मौखर्यमसम्बद्धबहुप्रलापित्वम् । असमीक्ष्याधिकरणं लोकप्रतीतम् । उपभोगाधिकत्वं चेति ॥ २७ ॥**

टी०—**मौखर्यमित्यादि** । मुखरोऽनालोचितभाषी तुण्डिलः, तदेवाचष्टे–**असम्बद्धबहुप्रलापित्वमिति** । असम्बद्धमिति पूर्वापरेणाघटमानं, बहु प्रलपति तच्छीलश्च बहुप्रलापी तद्भावो बहुप्रलापित्वम्, यत्किञ्चिदसम्बद्धं जल्पति, न च स्वात्मनः कञ्चिदर्थं साधयतीति । **असमीक्ष्याधिकरणं** अनालोच्याधिकरणम् । असमीक्ष्य कुर्वाणः, स्वात्मानं नरकादिष्वधिकरोति येन तदधिकरणं, तच्च लोकप्रतीतमिति । यन्नात्मनः कञ्चिदुपकारं करोति परप्रयोजनमेव केवलं साधयति तदसम्यीक्ष्याधिकरणं आत्मनोऽनुपयोगादिति विवेकिजनप्रतीतम् । **उपभोगाधिकत्वं चेति** । लोकप्रतीतमेवेत्यभिसम्बध्य स्नानालङ्कारादि यावदुपभुज्यते स्वात्मनस्तावदेव पेषयतीत्यादिक्रियालक्षण उपभोगस्ततोऽन्यस्याधिक्यमित्युपभोगाधिकत्वम्, अनर्थदण्डविरतेः पञ्चातिचारा भवन्ति ॥ २७ ॥

अनर्थदण्डानन्तरोपदिष्टसामायिकातिचारप्रसिद्ध्यर्थमिदमुच्यते—

सामायिकव्रतस्य पञ्चातीचाराः

## सूत्रम्—योगदुष्प्रणिधानानादरस्मृत्यनुपस्थापनानि ॥ ७–२८ ॥

**भा०—कायदुष्प्रणिधानं वाग्दुष्प्रणिधानं मनोदुष्प्रणिधानं अनादरः स्मृत्यनुपस्थापनं इत्येते पञ्च सामायिकव्रतस्यातिचारा भवन्ति ॥ २८ ॥**

टी०—युज्यन्त इति योगाः—कायादयः । प्रणिधानं प्रयोगः । दुष्टं प्रणिधानं दुष्प्रणिधानम् । दुष्प्रणिधानशब्दस्य च प्रत्येकमभिसम्बन्धं दर्शयति–**कायदुष्प्रणिधानमिति** । शरीरावयवाः पाणिपादादयस्तेषामनिभृततावस्थापनं कायदुष्प्रणिधानम् । वर्णसंस्काराभावार्थानवगमचापल्यानि वाक्क्रिया वाग्दुष्प्रणिधानम् । क्रोधलोभाभिद्रोहाभिमानेर्ष्यादिकार्यव्यासङ्गजातसम्भ्रमो दुष्प्रणिधत्ते मन इति मनोदुष्प्रणिधानम् । अनादरोऽनुत्साहः, प्रतिनियतायां वेलायामकरणं सामायिकस्य, यथाकथञ्चित् प्रवृत्तिरनादरः—अनैकाग्र्यं, स्मृत्यनुपस्थापनमुद्भ्रान्तचित्तता, स्मृतेरनुपस्थापनं स्मृत्यभावः । किंविषयायाः स्मृतेः? सामायिकप्रस्तावात् तद्विषयाया इति । सामायिकं मया कर्तव्यं न कर्तव्यमिति वा कृतं न कृतमिति वा स्मृतिभ्रंशः । स्मृतिमूलत्वाच्च मोक्षसाधनानुष्ठानस्येति, एते पञ्च सामायिकव्रतस्यातिचारा भवन्तीति॥२८॥

---

१ 'भवन्तीति' इति च-पाठः । २ 'मनोदुःप्रणिधानं वाग्दुःप्रणिधानं' इति क-पाठः ।

कथिताः सामायिकातिचारास्तत्समीपोद्देशभाजः खलु पौषधोपवासस्य केऽतिचारा इत्याह—

पौषधोपवासव्रतस्य पञ्चातीचाराः

सूत्रम्—अप्रत्यवेक्षिताप्रमार्जितोत्सर्गादाननिक्षेपसंस्तारोपक्रमणानादरस्मृत्यनुपस्थापनानि ॥७–२९॥

भा०—अप्रत्यवेक्षिताप्रमार्जिते उत्सर्गः अप्रत्युपेक्षिताप्रमार्जितस्यादाननिक्षेपौ अप्रत्यवेक्षिताप्रमार्जितसंस्तारोपक्रमः अनादरः स्मृत्यनुपस्थापनमित्येते पञ्च पौषधोपवासस्यातिचारा भवन्ति ॥ २९ ॥

टी०—प्रत्यवेक्षणं-चक्षुषा निरीक्षणं स्थण्डिलस्य सचित्ताचित्तमिश्रस्थावरजङ्गमजन्तुशून्यता। प्रमार्जनं वस्त्रप्रान्तादिना, विशुद्धिहेतोर्यथा युज्यमानम्, आगमोपयुक्तस्य प्रतिपन्नपौषधोपवासस्यायं क्रियाकलापोऽगारिणः प्रतिनिर्दिश्यते। उत्सर्गः-त्यागो निष्ठ्यूत-स्वेद-मल-मूत्र-पुरीषादीनां, प्रत्यवेक्षिते प्रमार्जिते चोत्सर्गः कार्यः। अथवा अप्रत्यवेक्षिताप्रमार्जिते उत्सर्गं करोति ततः पौषधोपवासव्रतमतिचरतीति। आदानं-ग्रहणं यष्टिपीठफलकादीनाम्। तदपि प्रत्यवेक्ष्य प्रमृज्य च कार्यम्। अन्यथाऽप्रत्यवेक्षिताप्रमार्जितस्यादानमतिचारो, निक्षेपश्च। तथाऽप्रत्यवेक्षितेऽप्रमार्जिते च भूप्रदेशे संस्तारोपक्रमः। संस्तारः संस्तीर्यते यः प्रतिपन्नपौषधोपवासेन दर्भकुशकम्बलीवस्त्रादिस्तस्योपक्रमः-करणमनुष्ठानं, भूप्रदेशे, यद्वा दर्भादि संस्तीर्यते तत् प्रत्यवेक्ष्य प्रमृज्य चेति, अन्यथाऽतीचारः। अनादरः स्मृत्यनुपस्थापनं च प्राग् व्याख्यातम्। अनादरः पौषधोपवासप्रतिपत्तिकर्तव्यताक्रियायां, तद्विषयमेव स्मृत्यनुपस्थापनमित्येते पञ्च पौषधोपवासस्यातिचारा[3] भवन्तीति ॥ २९ ॥

सम्प्रति प्रस्तावायातानुपभोगपरिभोगातिचारान् वक्तुकाम आह—

सूत्रम्—सचित्त-सम्बद्ध-संमिश्रा-ऽभिषव-दुष्पक्वाहाराः ॥ ७–३० ॥

टी०—भोजनकृतमुपभोगं विशिनष्टि भाष्येण—

उपभोगपरिभोगव्रतस्य पञ्चातीचाराः

भा०—सचित्ताहारः सचित्तसम्बद्धाहारः सचित्तसंमिश्राहारः अभिषवाहारः दुष्पक्वाहारः इत्येते पञ्च [4]भोगव्रतस्यातिचारा भवन्ति ॥ ३० ॥

टी०—चित्तं चेतना संज्ञानमुपयोगोऽवधानमिति पर्यायाः। सचित्तश्चासावाहारश्च सचित्ताहारः। सचित्त आहारो वा यस्य, सचित्तमाहारयतीति वा सचित्ताहारः, मूलकन्दली-

१-२ 'अप्रत्युपेक्षिता०' इति ग-पाठः। ४ 'उपभोग०' इति घ-पाठः।

कन्दार्द्रकादिसाधारणवनस्पतिप्रत्येकतरुशरीराणि सचित्तानि तदभ्यवहारः। पृथिव्यादिकायानां वा सचित्तानाम्। तथा सचित्तेन सम्बद्धं कर्कटिकबीजकौलिकाकुलस्य पक्वदरोदुम्बराम्रफलादि भक्षयतः सचित्तसम्बद्धाहारत्वम्। तथा सचित्तेन सम्मिश्राहारः पुष्प-फल-व्रीहि-तिलानां व्यतिमिश्रमोदकादिखाद्यस्य वा। कुन्थुपिपीलिकादिसूक्ष्मजन्तुव्यतिमिश्रस्याभ्यवहारः अभिषवाहार इति। सुरासौवीरकमांसप्रकारपर्णक्याद्यनेकद्रव्यसङ्घातनिष्पन्नः सुरासीधुमधुवारादिरभिवृष्यवृक्षद्रव्योपयोगो वा। दुष्पक्वाहार इति। दुष्पक्वं मन्दपक्वमभिन्नतन्दुलफललोष्टयवगोधूमस्थूलमण्डककण्डुकादि तस्याभ्यवहार ऐहिकप्रत्यवायकारी, यावता वाऽंशेन सचेतनस्तावता परलोकमप्युपहन्तीति ॥ ३० ॥

उक्तमुपभोगपरिभोगव्रतातिचारविधानम्, तदनन्तरं व्याख्यातातिथिसंविभागातिचारप्रदर्शनार्थमिदमुच्यते—

अतिथिसंविभागव्रतस्य पञ्चातीचाराः

**सूत्रम्—सचित्तनिक्षेपपिधानपरव्यपदेशमात्सर्यकालातिक्रमाः ॥७-३१॥**

भा०—अन्नादेर्द्रव्यजातस्य सचित्तनिक्षेपः सचित्तपिधानं परस्येदमिति परव्यपदेशः मात्सर्यं कालातिक्रम इत्येते पञ्चातिथिसंविभागस्यातिचारा भवन्ति ॥ ३१ ॥

टी०—अन्नादेरित्यादि। अन्नमोदनखाद्यकादि चतुर्विधं आहारो वाऽशनादिः तस्य सचित्तेषु व्रीहि-यव-गोधूम-शाल्यादिषु निक्षेपः। तच्चान्नादि कया बुद्ध्या निक्षिपति?—अदानबुद्ध्या। एतच्च जानात्यसौ—सचित्ते निक्षिप्तं सत् न गृह्णन्ति साधव इत्यतो देयं चोपस्थाप्यते न चाददते साधव इति लाभोऽयं ममेति। सचित्तपिधानमिति। सचित्तेन पिधानं—स्थगनं सूरणकन्दपत्रपुष्पादिना तत्रापि तथाविधयैव बुद्ध्या सचित्तेन स्थगयति। परव्यपदेश इति साधोः पौषधोपवासपारणाकाले भिक्षार्थं समुपस्थितस्य प्रकटमन्नादि पश्यतः श्रावकोऽभिधत्ते—परकीयमिति नास्माकीनं अतो न ददामीति, न चैष परमार्थः, परमार्थतस्तु तदीयमेव तत्। अथवा परस्य—अन्यस्येदमस्तीति तत्र गत्वा मार्गयत यूयमिति। मात्सर्यमिति। मार्गितः सन् कुप्यति, सदपि मार्गितं न ददाति। अथवा तेन तावत् द्रमकेण दत्तं किमहं ततोऽपि न्यून इति मात्सर्याद् ददाति। परोन्नतिवैमनस्यं च मात्सर्यम्, कषायरूषितेन वा चित्तेन ददतो मात्सर्यमिति। कालातिक्रम इति। उचितो यो भिक्षाकालः साधूनां तमतिक्रम्यानागतं वा भुङ्क्ते पौषधोपवासी, स च कालातिक्रमो ग्रहीतुरप्रीतिकरोऽप्रस्तावाददानं चेत्यतीचारः। इत्येते पञ्चातिथिसंविगस्यातीचारा भवन्ति ॥ ३१ ॥

---

१ 'कोकिलिकाकुलादिना' इति ङ-पाठः। २ 'मस्विन०' इति च-पाठः। ३ 'हारादिकप्रत्य०' इति च-पाठः। ४ 'सचित्ते निक्षेपः' इति घ-पाठः।

शीलसप्तकातिचारानभिधाय सम्प्रति मारणान्तिकसंलेखनायाः कति अतिचारा भवन्तीत्याह—

सूत्रम्—जीवितमरणाशंसामित्रानुरागसुखानुबन्ध-
निदानकरणानि ॥ ७-३२ ॥

टी०—आशंसाशब्दं जीवितमरणाभ्यां सहाभिसम्बध्ननाह—

भा०—जीविताशंसा मरणाशंसा मित्रानुरागः सुखानुबन्धो निदानकरण-मित्येते मारणान्तिकसंलेखनायाः पञ्चातिचारा भवन्ति ॥

टी०—जीविताशंसेत्यादि। संलेखनायाः अन्ते प्रतिपन्नप्रत्याख्यानस्यामी भवन्त्य-तीचाराः। जीवितं—प्राणधारणं तत्राशंसा—अभिलाषो यदि बहुकालं जीवेयमिति। वस्त्रमाल्य-पुस्तकवाचनादिपूजादर्शनात् बहुपरिवारदर्शनाच्च लोकश्लाघाश्रवणाच्चैवं मन्यते—जीवितमेव श्रेयः प्रत्याख्यातानशनस्यापि, यत एवंविधा मदुद्देशेनेयं विभूतिर्वर्तते इति। मरणाशंसा त्वेतद्विप-रीता, न कश्चित् तं प्रतिपन्नानशनं गवेपयति न सपर्यति न चाद्रियते न कश्चित् श्लाघते ततस्त-स्यैवंविधश्चित्ते परिणामो जायते—यदि शीघ्रं म्रियेयाहमपुण्यकर्मेति मरणाशंसा। मित्रानुराग इति। मेद्यन्तीति मित्राणि—स्नेहमत्यन्तं कुर्वन्ति सहजीवितमरणानि तेषु मित्रेषु अनुरागः—स्नेहो यस्तं तादृश्यामप्यवस्थायां न जहातीति मित्रानुरागोऽतिचारः। तथा पुत्रादिष्वपीति योज्यम्। मित्रस्योपकारमकृत्वा पुत्रादीन् वा स्थानेष्वनवस्थाप्य यदि न म्रियेयेति, सर्वसङ्गत्यागस्तस्या-मवस्थायां कार्य इत्युपदेशः। सुखानुबन्ध इति। अनुभूतप्रीतिविशेषस्मृतिसमाहरणं चेतसि सुखानुबन्धः। निदानकरणमिति। निदानम्—अवखण्डनं तपसश्चारित्रस्य वा, यदि अस्य तपसो ममास्ति फलं ततो जन्मान्तरे चक्रवर्ती स्यामर्धभरताधिपतिर्महामण्डलिकः सुभगो रूपवानि-त्यादि। एतच्चात्यन्ताधममनन्तसंसारानुबन्धित्वात् परित्याज्यम्। इत्येते पञ्चषष्टिरतिचारा ज्ञेयाः परिहार्याश्च ज्ञात्वेत्थमगारिधर्म एवंप्रकारः॥ ननु सम्यक्त्वातिचारपञ्चकसम्भवात् सप्ततिर-तिचाराः स्युरिति? उच्यते—सम्यक्त्वं हि मूलप्रसादपीठरचनावत् आधारभूतमणुव्रतादीनाम्, अतस्तस्याधारत्वान्न व्रतशीलेष्वतिचारग्रहणम्। तदेतेष्वित्यादिनोपसंहरति—

भा०—तदेतेषु सम्यक्त्वव्रतशीलव्यतिक्रमस्थानेषु पञ्चषष्टिष्वतिचारस्था-नेषु अप्रमादो न्याय्य इति ॥ ३२ ॥

टी०—तस्मादपायदर्शनादेतेषु पञ्चषष्टिष्वतिचारेषु प्रमादो न कार्यः, अप्रमादस्तु न्याय्य इति ॥ ३२ ॥

भा०—अत्राह—उक्तानि व्रतानि व्रतिनश्च। अथ दानं किमिति? अत्रोच्यते—

टी०—अत्राहोक्तमित्यादिना सम्बन्धमाचष्टे। अत्र—व्रतेषु व्रतिषु च व्याख्यातेषु

१ 'वाच्यादि' इति च-पाठः। २ 'अनुबन्धमूलप्रीतिविशेष०' इति ग-पाठः। ३ 'सम्यगति' इति ङ-पाठः।

सेदनुवादद्वारेण दानं प्रस्तौति । उक्तानि–अभिहितानि लक्षणतो व्रतानि व्रतिनश्च । तदनन्तरमुद्दिष्टं अथ दानं किमिति । सद्वेद्यकर्मास्रवाभिधानक्रममाश्रित्य प्रश्नयति–दानं किंलक्षणकमिति, तत् दानलक्षणं वक्तुकामः अत्रोच्यत इत्याह ।

## सूत्रम्—अनुग्रहार्थं स्वस्यातिसर्गो दानम् ॥ ७–३२ ॥

टी०—अपरे मुक्तसम्बन्धमाचक्षते–अतिथिसंविभागे चोदनात् दानधर्मोऽगारिणः शेषधर्मश्चोदितः । तत्र किंलक्षणं दानमित्याह–अनुग्रहार्थं स्वस्यातिसर्गो दानम् । अनुगृह्यतेऽनेनेत्यनुग्रहोऽन्नादिरुपकारकः प्रतिग्रहीतुः, दातुश्च प्रधानानुषङ्गिकफलं प्रधानं मुक्तिः, आनुषङ्गिकं स्वर्गादिप्राप्तिः प्रच्युतस्येह सुकुलप्रत्ययातिविभवबोधिलाभादिः सोऽर्थः–प्रयोजनं यस्य तदनुग्रहार्थं–अनुग्रहप्रयोजनम्, अर्थशब्दस्य प्रयोजनवाचित्वात् । स्वस्येति स्वशब्द आत्मात्मीयज्ञातिधनादिषु वर्तते इत्यात्मीयवचनः प्रयुक्तः । स्वमात्मीयन्यायेन स्वीकृतं पूर्वजक्रमागतं न्यायवृत्त्या वा स्वसामर्थ्योपात्तं तस्यातिसर्गः–त्यागः । न चोज्झनमात्रं त्यागशब्देनोच्यते, किं तर्हि ?, दानं विशिष्टसंप्रदानकमित्यर्थः । तच्च सम्प्रदानं द्विविधम्–अर्हद्भगवन्तः साधर्मिकाश्च, तत्रार्हद्भ्यो दीयते पुष्प-बलि-धूप-चामरा-ऽऽतपत्र-कलश-ध्वज-चन्द्रातप-किरीटाभरणादिः । साधर्मिकास्तु द्विप्रकाराः–साधवः श्रावकाश्च । साधवो यथोक्तज्ञानदर्शनक्रियानुष्ठानसम्पन्नाः । श्रावकाश्च सम्यक्त्वाणुव्रतादिद्वादशविधधर्मभाजः । तेभ्यो दानमन्नादेर्देशकालोपपन्नमिति । एवंविधसूत्रार्थप्रतिपादनाय आत्मपरानुग्रहार्थमित्यादि भाष्यम् ।

भा०—आत्मपरानुग्रहार्थं स्वस्य द्रव्यजातस्यान्नपानवस्त्रादेः पात्रेऽतिसर्गो दानम् ॥ ३२ ॥ किञ्च—

टी०—अनेन च भाष्येण विशुद्धबुद्धित्वं[2] दातुराख्यायते । श्रद्धादिगुणयोग उपायः प्रतिग्रहीता पात्रविशेषः देयसम्पच्चेति । आत्मा च परश्च आत्मपरौ तयोरनुग्रहः आत्मपरानुग्रहः सोऽर्थो यस्य तदात्मपरानुग्रहार्थम् । अनुग्रह उपकारः । स च विशुद्धया धिया ददतः, कर्मनिर्जरणादि फलं ममास्तीत्यनुग्रहग्रहणाद् विशुद्धबुद्धित्वं लभ्यते, अन्यथा तु अनुग्रहाभाव[3] एव स्यात् । तच्च निर्जरादिफलमुपेयं उपायादृते न सम्पद्यत इत्युपेयपरिग्रहः[4] । देशकालपुरुषावस्थाः संप्रेक्ष्यागमानुसारिणा रागप्रमोदनिर्भरेण[5] चेतसा रोमाञ्चकञ्चुकोपगूढवपुषा चाऽभ्युत्थानासनप्रदानवन्दनचरणप्रमार्जनसत्कारपूर्वकं समाधार्थं काम्यमित्यादिरुपायः । आत्मेति दाता श्रद्धाशक्तिसत्त्वक्षमाविनयवितृष्णतागुणसम्पन्नो ददामीत्येवं परिणतः, परोपादानात् प्रतिग्रहीता ज्ञानक्रियान्वितो विजितेन्द्रियकषायः स्वाध्यायतपोध्यानसमाधिभाग् मूलोत्तरगुणसम्पदुपेतः पात्रमिष्यते । स्वस्य द्रव्यजातस्यान्नपानवस्त्रादेरित्यनेन देयनिर्देशः । स्वस्येत्यात्मीयस्य लोकविरुद्धचौर्यव्यवहाराद्यनुपात्तस्य । द्रव्य-

---

१ 'हेतुवादद्वारेण' इति ङ-पाठः । २ 'विशुद्धत्वं' इति ङ-पाठः । ३ 'श्रद्धाऽभाव' इति ग-पाठः । ४ 'पायपरि०' इति च-पाठः । ५ 'दातिभरेण' इति ङ-पाठः ।

जातस्येति द्रव्यविशेषस्य पुद्गलद्रव्यस्य जीवद्रव्यस्य च, पुद्गलद्रव्यस्यापि न सर्वस्य कुठारहलदात्रशस्त्रादेरनेकप्राणिदुःखहेतोः। किं तर्हि?, अन्नपानवस्त्रादेः। आदिग्रहणादौधिकौपग्रहिकसकलोपकरणपरिग्रहः। सर्वथा आहारो भेषजं शय्योपधिर्वा साधोः परत एव लभ्यः। स च पुद्गलोत्पादनेनैषणाशुद्धः। स च दातुः प्रतिग्रहीतुश्चोपकारको निर्जराफलत्वात्, जीवद्रव्यस्यापि न सर्वस्य, दासदासीबलीवर्दवाहनादेः स्वयमेव दुःखितत्वात् क्लिश्यमानत्वात्। यथाऽऽह—

"जं न य दुहियं न य दुक्खकारणं होइ दिण्णमण्णेसिं।
वट्टइ अणुग्गहे तं विहिए दिन्नं असावज्जं ॥ १ ॥"

द्विपदमपि गृहिणा प्रव्रज्याभिमुखं प्रव्रज्यार्हं पुत्रदुहितृभ्रातृपत्नीप्रभृति स्वामिना दत्तमनुज्ञातं प्रव्राज्यं, इत्थमुक्तेन न्यायेन देशकालोपपन्नमचेतनं सचेतनं वा द्रव्यजातं पात्रे गुणवति देयम्। अत्राधाकर्माद्यपि देशकालापेक्षपात्रविनियुक्तं स्वर्गानुकूलप्रत्ययातिफलमेव भवति, पारम्पर्यान्मुक्तिफलमपीति ॥ ननु च सम्प्रदानं यत् साक्षात् प्रतिगृह्णाति यथा साधुरणुव्रती वा। यत् पुनर्भगवते दीयते निर्वाणप्राप्तये पुष्पबलिधूपादि तत्र कथं भगवतः सम्प्रदानत्वम्? अत्रोच्यते—त्रिविधं सम्प्रदानं, प्रेरका-ऽनुमन्तृ-अनिराकर्तृभेदात्। तत्र प्रेरकं यदर्थित्वमुपदर्शयत् कर्तारं क्रियायां प्रेरयति। यत्रेदमुच्यते साधुभ्यो भिक्षां ददातीति। अनुमन्तृ यथा—आचार्याय वासोयुगं ददातीति। आचार्यो हि यद्यप्यनर्थित्वान्न प्रेरयति दाने परं तथापि दातुरनुग्रहक्रियाचिकीर्षया दीयमानमनुमन्यते। अनिराकर्तृ यथा—भगवते पुष्पाणि ददाति धूपं वा, भगवान् न प्रेरयति नानुमन्यते, किन्तु परहितोदयप्रतिघातपरिहारार्थमसन्निधानाद् दातारं न निराकरोति। अतो युज्यत एव सम्प्रदानत्वं भगवतः। यदा तर्ह्यसन्निधानादनिराकर्तृत्वं तदा कथं परोपयोगिता कर्मणः?। नैवमुच्यते यत्र परस्योपयोगोऽवश्यमस्ति स त्याग इति, अपि तु यो व्यापारः कर्मणः परोपयोगाभिप्रायेण स त्यागः। असन्निहितेऽपि चोपयोक्तरि त्यक्तुः सोऽभिसन्धिरस्तीत्यदोषः। कारकत्वं वा सन्निहितस्य क्रियायां निमित्तभावात्। एतावतैव च कारकत्वमिष्टं, देवताश्च स्वगुणातिशययोगाद् दातुश्चेतसि प्रसादमादधानास्त्यागे निमित्ततां आपद्यन्त एवेति ॥ ३३ ॥

किञ्चेत्यनेन प्रस्तुतस्य दानधर्मस्य तरतमादतिशयभेदप्रतिपत्त्या फलविशेषनिरूपणायाह—

## सूत्रम्—विधि-द्रव्य-दातृ-पात्र-विशेषाच्च तद्विशेषः ॥ ७-३४ ॥

टी०—विध्यादयः कृतद्वन्द्वाः तेषां विशेषः—अतिशयः प्रकर्षापकर्षयोगः तस्माद् विध्यादिविशेषाच्च धर्मविशेषः। धर्मश्च क्षमादिदशलक्षणकः, स पुण्योपचयनिर्जराहेतुः। पुण्योप-

१ 'भवद्द्रुमो०' इति च-पाठः।
२ छाया—
यत् न च दुःखितं न च दुःखकारणं भवति दत्तमन्येषाम्।
वर्तते ऽनुग्रहे तद् विधिना दत्तमसावद्यम् ॥ १ ॥
३ सन्तुल्यतामाचाराङ्गवृत्तिगतं 'यत्स्वयमदुःखितं स्यात्०' इत्यादिपूर्वकं पद्यम्।
४ 'देयप्रतापात' इति ङ–पाठः। ५ 'एतावदेव च' इति ङ–पाठः। ६ 'अपि प्रतिपाद्यन्त' इति च-पाठः।

चयापचयौ [1]निर्जराहेतुविध्यादि(?)मात्रविध्यादिचतुष्टयापेक्षौ, तथा विध्यादिचतुष्टयप्रकर्षदेशकालोपपन्नकल्पनीयदानादेकान्तेनैव निर्जरा प्रकर्षवर्तिनी मन्दविध्यादिदानान्मन्दा [2]मध्यविध्यादिदानान्मध्या। एतदेव भाष्येण विविच्य दर्शयति—

भा०—विधिविशेषाद् द्रव्यविशेषाद् दातृविशेषात् पात्रविशेषाच्च तस्य दानधर्मस्य विशेषो भवति। तद्विशेषाच्च फलविशेषः ॥

टी०—विधिविशेषादिति। पञ्चम्याः प्रागुक्तं लक्षणम्। विधानं विधिः विशिष्टप्रकारः तदतिशयात् पुण्यनिर्जरातिशयस्तदतिशयात् स्वर्गफलविशेषो मुक्तिफलप्राप्तिर्वा। द्रव्यमन्नादि तद्विशेषात्। तथा दातृविशेषात् पात्रविशेषाच्च। तद्विशेष इति तच्छब्देन दानधर्मः परामृश्यते। दानं–त्यागस्तदवाप्यो धर्मो दानधर्मः तस्य विशेषो–भेदः प्रकर्षापकर्षलक्षणः। दानधर्मभेदाच्च फलभेदः, कारणानुरूपकार्यनिष्पत्तेः। एवं समासतः सूत्रार्थमाख्याय सम्प्रति विशेषेण विवृणोति—

भा०—तत्र विधिविशेषो नाम देशकालसम्पत्श्रद्धासत्कारक्रमकल्पनीयत्वमित्येवमादिः ॥

टी०—तत्रेत्यादि। तत्र–तेषु विध्यादिचतुर्षु विधिविशेषस्तावदयम्। नामशब्दो वाक्यालङ्कारे। देशकालसम्पदिति। व्यपगतस्थावरजङ्गमजन्तुको देशो दातुः प्रतिग्रहीतुश्चेति देशसम्पत्। कालसम्पदपि न रात्रौ दिवाऽपि स्वार्थ[4]मुपक्लृप्तेऽशनादौ उचिते भोजनकाले परि[5]वेषकोत्थितः स्वतश्च कडुच्छुकोखापडलकादङ्किकाद्युपकरणव्यग्रकरासु सञ्चरतीषु पुरःकर्मपश्चात्कर्माभावात् कालसम्पत्। एवं वस्त्रपात्रादिदानमप्युचितकाल इति। श्रद्धा गुणवत्सु दानाभिलाषो दत्तमेभ्यो बहुफलं भवति। सत्कारोऽभ्युत्थानासनप्रदानादिः प्रहर्षपुरःसरं देयगतः, तावत् क्रमो यो यत्र जनपदे प्रसिद्धः पटादिरन्यो वा। वस्त्रादिषु तु रत्नाधिकक्रमः। प्रकृष्टमध्यमजघन्यपात्रक्रमो वा। कल्पनीयत्वमुद्गमादिविशुद्धत्वमागमविहितभक्ष्याभक्ष्यपेयापेयग्राह्याग्राह्यता च। आदिग्रहणात् स्वयमेव स्वहस्तेन श्रद्धासंवेगानन्दप्रविकसितवदननयनोऽत्यर्थमहमनुगृहीत इत्येष विधिः ॥

भा०—द्रव्यविशेषः अन्नादीनामेव सारजातिगुणोत्कर्षयोगः।

टी०—द्रव्यविशेषो द्रव्यस्यातिशयः प्रकृष्टता। अन्नशब्देन चाशनं गृहीतम्। आदिशब्दात् पानखानखाद्यवस्त्रपात्रदण्डकौघोपग्रहभेदोपधिपरिग्रहः। तदेषामन्नादीनां सारजातिगुणोत्कर्षयोगः। सारोऽन्नस्याच्युतगन्धरसादित्वम्। जातिः शालिव्रीहिगोधूमादिका। गुणाः सुरभिलवणस्निग्धमधुरत्वादयः सुस्विन्नत्वादयो वा। एषां सारादीनामुत्कर्षः–प्रकृष्टता तेन योगः–सम्बन्धः। एवं पानकादीनामपि। तथा वस्त्रपात्रदण्डकादीनां देशान्त-

---

१ 'मन्दमध्याधिमात्रं' इति ग-पाठः। २ 'मन्दामध्य०' इति च-पाठः। ३ 'विध्यादिमात्रं' इति ङ-पाठः। ४ 'मुपक्लृप्ते' इति ङ-च-पाठः। ५ 'कात्थितश्चेतश्च' इति च-पाठः।

रोत्पन्नस्वरूपवानविशेषसंस्थानप्रमाणपरिमृजादिभेदेनोपयुज्य सारासारादयो वाच्याः ॥

**भा०—दातृविशेषः प्रतिग्रहीत्तर्यनसूया, त्यागेऽविषादः, अपरिभाविता, दित्सतो ददतो दत्तवतश्च प्रीतियोगः, कुशलाभिसन्धिता, दृष्टफलानपेक्षिता, निरुपधत्वम्, अनिदानत्वमिति ॥**

टी०—दातृविशेष इति। दातुर्विशेषः—अतिशयः स्वपरिणामजनितः । प्रतिग्रहीता गुणसम्पन्नो वक्ष्यमाणः तत्रानसूया क्षमावत्त्वम् । प्रसन्नचित्तता पुण्यवानहं यस्य मे गेहमनुविशन्ति तपस्विनः। न त्वक्षमा कार्या, प्रतिदिवसमेते मृगयन्ते निर्वेदिताः खल्वमीभिर्वयमिति। त्यागे न [3]विषीदति। दत्तेऽन्नादावविषादः। विषादो विषण्णता श्रद्धाहासो[4]ऽतिदत्तं मयेति। गृहेऽपि चिन्तनीयमेव प्रयोजनमिति, दत्त्वैवं चिन्तनीयमिदमेवैकं मम स्वं यद् व्रतिनामुपयुक्तमिति। तथा परिभाविता परिभवति तच्छीलश्च परिभावी तद्भावः परिभाविता—अनादरः, न परिभाविता अपरिभाविता आदर इति। देशकालप्राप्तस्य तु प्रतिग्रहीतुर्वर्धमानश्रद्धाप्रापितेनादरेण दानम्। दित्सत इत्यादि। साधुदर्शने याचने वा दातुमिच्छतः परमया प्रीत्या—प्रहृष्टतया योगः। एवं च ददतो दत्तवतश्च कालत्रयेऽपि प्रहर्षयोगः। कुशलाभिसन्धितेति। भावकुशास्तु ज्ञानावरणादिकर्मांशास्ताँल्लुनाति—छिनत्त्यपनयतीति कुशलः। अभिसन्धिरभिप्रायः। कुशलोऽभिसन्धिर्यस्य, कर्मनिर्जरापेक्षी तद्भावः कुशलाभिसन्धिता। दृष्टफलानपेक्षिता। दृष्टं फलं राज्यैश्वर्यसुखादि सर्वं वा सांसारिकं स्वर्गाद्यपि दृष्टमेव बहुशोऽनुकूलत्वात् तन्नापेक्षते—न प्रार्थयते यः स दृष्टफलानपेक्षी, तद्भावो दृष्टफलानपेक्षिता। निरुपधत्वमित्युपधा भावदोषो मायाकषायजनितः, यथा कश्चित् पटलकाद्युपकरणे देयस्यौदनादेरुपरि रचयति वर्णगन्धाढ्यमधस्तु निःसारमित्येवमादि तदभावान्निरुपधत्वमिति। निदानमुक्तलक्षणं स्वर्गमानुषजन्मविषयं तत्राप्यभिसन्ध्यभावात् निर्जरार्थमेव केवलमनिदानत्वमिति ॥

**भा०—पात्रविशेषः सम्यग्दर्शनज्ञानचारित्रतपःसम्पन्नता इति ॥ ३४ ॥**

टी०—पाति-रक्षति संसारात् दातारं दुर्गतिभयप्रपातादात्मानं चेति पात्रं तस्य विशेषः—अतिशयः प्रकर्षवृत्तिता। कीदृशी पुनः सेत्याह—सम्यग्दर्शनज्ञानचारित्रसम्पन्नतेति। तत्र सम्यक्त्वं नैसर्गिकाभिगमिकक्षायिकभेदात् प्रकर्षापकर्षवृत्ति। ज्ञानमप्यात्मपरिणामो ज्ञानावरणीयादिक्षयोपशमजन्यः। चारित्रमपि सामायिकादिभेदाद् बहुप्रकारम्। एभिः सम्पन्नता—युक्तता सम्यक्त्वादिपरिणामभाक्त्वमित्येवं विध्यादिविशेषाद् विशिष्टं विशिष्टतरं विशिष्टतमं च मोक्षपर्यवसानं दानफलं भवतीति ॥ ३४ ॥

इति श्रीमदर्हत्प्रवचने तत्त्वार्थाधिगमे उमास्वातिवाचकोपज्ञसूत्रभाष्ये भाष्यानुसारिण्यां च टीकायां सिद्धसेनगणिविरचितायां अनगारागारिधर्मप्ररूपकः सप्तमोऽध्यायः ॥ ७ ॥

---

१ 'सारादयो' इति ङ-पाठः। २ 'मार्गयन्ते' इति ङ-पाठः। ३ 'विषाद इति' इति च-पाठः। ४ 'ऽतिबहुदत्तं' इति च-पाठः।

# अष्टमोऽध्यायः ८



टी०—उक्त आस्रव इत्यादिना सम्बन्धमष्टमाध्यायस्याचष्टे—

अध्याय-सम्बन्धः

भा०—उक्त आस्रवः । बन्धं वक्ष्यामः । तत्प्रसिद्ध्यर्थमिदमुच्यते—

टी०—उक्तः–लक्षणविधानाभ्याममिहितः "कायवाङ्मनःकर्म योगः" "स आस्रवः" ( अ० ६, सू० १–२ ) इत्यारभ्य सामान्यतो विशेषतश्च । सम्प्रति प्रस्तावाशातसम्बन्धं बन्धं चक्ष्याम इति । एतदुक्तं भवति—जीवाजीवास्रवबन्धसंवरसूत्रक्रमेणास्रवो व्याख्यातः । तस्यानन्तरो बन्धः, स लक्षणविधानाभ्यां अधुना व्याख्यायते । तदेतदनेन प्रतिपादयति–तत्प्रसिद्ध्यर्थमिदमुच्यत इति । तस्य बन्धस्य प्रसिद्धिः–शब्दार्थनिरूपणं तत्प्रसिद्ध्यर्थ–तत्प्रसिद्धये तन्निरूपणार्थमुच्यते । इदमिति वक्ष्यमाणमिथ्यादर्शनादिपञ्चकम् ॥ ननु बन्धं प्रस्तुत्य तद्धेतुकथनमसम्बद्धमिव लक्ष्यते ?, नासम्बद्धम्; यतो नाकारणा कार्यनिष्पत्तिः । बीजाद्धि प्रसवोऽङ्कुरस्य, प्रथमतरं च कारणमुपाददते कार्यार्थिनः, बन्धश्च कार्यं कारणं तस्य मिथ्यादर्शनादिपञ्चकं प्रसिद्धमेवेति इयत्ता निर्धार्यते कारणानामनेन सूत्रेणेत्याह—

बन्धस्य सामान्य हेतुपञ्चकम्

## सूत्रम्—मिथ्यादर्शनाऽविरति-प्रमाद-कषाय-योगा बन्धहेतवः ॥ ८—१ ॥

टी०—मिथ्यादर्शनादयो योगान्ताः पञ्च कृतद्वन्द्वाः प्रथमाबहुवचनेन निर्दिष्टाः । मिथ्यादर्शनं–तत्त्वार्थाश्रद्धानलक्षणम् । अविरतिः–अनिवृत्तिः–पापस्थानेभ्यो विरतिपरिणामाभावः । प्रमादस्त्विन्द्रियविकथाविकटनिद्रालक्षणः । कषायाः क्रोध-मान-माया-लोभाः अनन्तानुबन्धिप्रभृतयः । योगा मनोवाक्कायव्यापारस्वभावाः । बन्धः कर्मवर्गणायोग्यस्कन्धानामात्मप्रदेशानां चान्योन्यानुगतिलक्षणः क्षीरोदकादेरिव सम्पर्को बन्धः । हेतुः निमित्तं कारणम् । बन्धस्य हेतवो बन्धहेतवः पञ्च मिथ्यादर्शनादयः । सामान्यहेतवश्चैतेऽवगन्तव्याः सर्वकर्मबन्धस्य । विशेषहेतवस्तु ज्ञानावरणादेर्व्याख्याताः षष्ठे "तत्प्रदोषनिह्नव०"

---

१–२ 'उक्ता आस्रवाः' इति क-ग-पाठः । ३ 'सम्बन्धस्य' इति ङ-पाठः । ४ 'तत्प्रसिद्धार्थं तत्प्रसिद्ध्यर्थे' इति ङ-पाठः । ५ 'तदनुबन्ध' इति ङ-पाठः । ६ 'सम्बन्धं' इति ङ-पाठः । ७ 'कार्याविनाबन्धः' इति ङ-पाठः ।

( सू० ११ ) इत्यादिना सूत्रकलापेनेति । भाष्यकारस्तु पदविच्छेदेन पञ्चापि सामान्यप्रत्ययान् दर्शयति—

भा०—मिथ्यादर्शनमविरतिः प्रमादः कषाया योगा इत्येते पञ्च बन्धहेतवो भवन्ति ।

टी०—मिथ्या—अलीकमयथार्थं दर्शनं दृष्टिः-उपलब्धिरिति मिथ्यादर्शनम् । विरमणं विरतिः—संयमः, न विरतिरसंयमो हिंसाद्यनिवृत्तिरिति । प्रमाद्यत्यनेनेति प्रमादः विकथादिकः । कर्मप्रकृतिग्रन्थेषु तु प्रमादप्रत्ययः पृथग् नोक्तः । असंयमप्रत्ययेनैव संगृहीतत्वाच्चतुर्विध एव प्रत्ययस्तत्राधीतः, प्रमादप्रत्ययः मिथ्यादर्शनासंयमकलापयोगाख्यः, इह त्वाचार्येण मन्दबुद्धिप्रतिपत्तिहेतोः पृथगुपन्यस्तः । कष्यते यत्र शरीरमानसैर्दुःखैः स कषः—संसारः । "पुंसि संज्ञायां घः"(पा० अ०३, पा०३, सू०११८) तस्य आया—उपादानकारणानि कषायाः—क्रोधादयः । युज्यतेऽनेनेति योगः, नोकर्मणा योगद्रव्येणात्मेत्यर्थः । वीर्यान्तरायकर्मक्षयोपशमजनितेन वीर्यपर्यायेण युज्यत इति । इतिशब्दोऽवधारणार्थः । एत एव पञ्चविधा हेतवो भवन्ति सामान्यतः । तत्रेत्यादिना मिथ्यादर्शनादीनां स्वरूपं निरूपयति—

कर्मग्रन्थाद् भिन्नता

भा०—तत्र सम्यग्दर्शनाद् विपरीतं मिथ्यादर्शनम् । तद् द्विविधम्—अभिगृहीतमनभिगृहीतं च ॥

टी०—तत्र—तेषु पञ्चसु प्रत्ययेषु मिथ्यादर्शनस्वरूपं तावदिदम्—सम्यग्दर्शनाद् विपरीतं मिथ्यादर्शनमिति तत्त्वार्थश्रद्धानलक्षणं सम्यग्दर्शनमुक्तं ( अ० १, सू० २ ) तस्मात् सम्यग्दर्शनाद् विपरीतलक्षणं मिथ्यादर्शनं तत्त्वार्थाश्रद्धानं, अयथार्थश्रद्धानमित्यर्थः । तद् द्विविधमित्यादि । तच्च मिथ्यादर्शनं द्विविधं—द्विप्रकारं अभिगृहीतमनभिगृहीतं चेति । चशब्दात् सन्दिग्धवचनम् । अनभिगृहीतमिथ्यादर्शनभेदः सन्दिग्धमिति साक्षात् सूत्रोपात्तम् ॥

भा०—तत्राभ्युपेत्यासम्यग्दर्शनपरिग्रहः अभिगृहीतमज्ञानिकादीनां त्रयाणां त्रिषष्ठीनां कुवादिशतानां, शेषमनभिगृहीतम् ॥

टी०—तत्रेत्यादि । तयोरभिगृहीतानभिगृहीतमिथ्यात्वयोरभिगृहीतप्रपञ्चोऽयम्—अभ्युपेत्येति । मत्यज्ञानादि किमपि परिकल्प्यासम्यग्दर्शनपरिग्रहो मिथ्यादर्शनपरिग्रहस्तदभ्युपगम एतदेवैकं सत्यमिति प्रतिपत्तिरभिगृहीतमिथ्यात्वम् । तद्दर्शनेऽनेकभेदमित्याह—अज्ञानिकादीनामिति । अज्ञानमेषामभ्युपगमोऽस्तीत्यज्ञानिकाः, अथवा अज्ञानेन चरन्ति दीव्यन्ति वा अज्ञानिकाः, अज्ञानमेव पुरुषार्थसाधनमभ्युपयन्ति, न खलु तत्त्वतः कश्चित् सक-

१ 'सामान्यतः' इति ख-पाठः, 'सामान्येन' इति तु क-पाठः । २ 'तदनेक' इति ख-पाठः ।

लस्य वस्तुनो वेदिताऽस्तीति। ते चाज्ञानपक्षावलम्बिनः सप्तषष्टिभेदाः केनचिद् विशेषेण भिद्यमानप्रक्रियाः सुगतशिष्यकाणामष्टादशनिकायभेदवन्नानात्वं प्रतिपद्यन्ते। एतद्दर्शनभ्रमितचेतसश्च शाकल्य-बाष्कल-कुथुमि-सात्यमुग्रि-राणायन-कठ-मध्यन्दिन-मोद-पिप्पलाद-बादरायण-स्विष्टकृदै-ऽनि-कात्यायन-जैमिनि-वसुप्रभृतयः सूरयोऽसन्मार्गमेनं प्रथयन्ति।

अज्ञानिकादीनां सूरयः आदिशब्दात् क्रियावादिनोऽक्रियावादिनो वैनयिकाश्च सूचिताः। तत्र क्रियावादिनोऽशीत्युत्तरशतभेदाः मरीचि-कुमार-कपिलो-लूक-गार्ग्य-व्याघ्रभूति-वाद्वलि-माठर-मौद्गल्यायनप्रभृत्याचार्यप्रतीयमानप्रक्रियाभेदाः। अक्रियावादिनोऽपि चतुरशीतिविकल्पाः कोकुल-काण्ठेविद्धि-कौशिक-हरिश्मश्रु-मान्धनिक-रोमक-हारित-मुण्डा-श्वलायनादिस्वरि(?)प्रथितप्रक्रियाकलापाः। वैनयिकास्तु द्वात्रिंशद्विकल्पाः वसिष्ठ-पराशर-जातूकर्ण-वाल्मीकि-रोमहर्षणि-सत्यदत्त-व्यासेलापुत्रौ-पमन्य-चन्द्रदत्ता-यस्थूलप्रभृतिभिराचार्यैः प्रकाशितविनयसाराः। एवमेतान् मिथ्यात्वभेदानभिधाय संकलयति भाष्यकृदेकराशितया त्रयाणामित्यादिना भाष्येण। त्रिशब्दः संख्यावचनः अन्यूनानधिकवृत्तिः। एवं शतशब्दोऽपि। कियतां शतानां? त्रयाणामित्याह। कियता राशिनाऽधिकानाम्? त्रिषष्टीनामित्याह, अभ्यधिकानां त्रिषष्ट्या। कुत्सिता वादिनः कुवादिनः, एकान्तग्रहग्रस्तत्वाद् यत्किञ्चित् प्रलपन्तीत्यर्थः। शेषमनभिगृहीतमिति मिथ्यात्वमभिसम्बध्यते। अभिगृहीतमिथ्यादर्शनम् यदन्यत् तत्त्वार्थाश्रद्धानं तदनभिगृहीतमिथ्यादर्शनम्, अनभिनिवेशमिथ्यात्वमित्यर्थः॥

भा०—यथोक्ताया विरतेर्विपरीताऽविरतिः।

टी०—येन प्रकारेणाभिहिता सप्तमाध्यायादौ विरतिः हिंसानृतस्तेयाब्रह्मपरिग्रहेभ्यो मनोवाक्कायैः कृतकारितानुमतिभिरुक्ता तस्या विरतेर्यथोक्ताया विपरीता अविरतिः हिंसादिषु प्रवृत्तिः, असंयम इतियावत्॥

प्रमादस्य त्रैविध्यम् भा०—प्रमादः स्मृत्यनवस्थानं कुशलेष्वनादरः योगदुष्प्रणिधानं चेत्येष प्रमादः॥

टी०—मोक्षमार्गशैथिल्यमिन्द्रियदोषात् प्रमादः, प्रमाद इत्यनूद्य स्वरूपमाचष्टे—स्मरणं स्मृतिः पूर्वोपलब्धवस्तुविषया तस्या अनवस्थानं—भ्रंशः। विकथादिव्यग्रचित्तत्वादिदं विधायेदं कर्तव्यमिति नाध्येति। कुशलेष्वनादर इति स्मरतोऽपि कुशलानाम्—आगमविहितानां क्रियानुष्ठानानां अनादरः—अनुत्साहः, अप्रवृत्तिरित्यर्थः। योगदुष्प्रणिधानं

---

१ 'कचमध्य०' इति छ-पाठः। २ 'दितिकायन-' इति छ-पाठः। ३ 'विस्वरि' इति ख-पाठः। ४ 'चैष प्रमादः' इति घ-पाठः।

चेति। योगाः कायादिव्यापारास्तान् दुष्टेन प्रणिधानेनार्तध्यानभाजा चेतसा समाचरति। चशब्दः समुच्चयार्थः। इत्येष प्रमाद इति निगमनार्थं पुनः प्रमादग्रहणम्। एष त्रिप्रकारः प्रमादो भवति ॥

**भा०—कषाया मोहनीये ( अ० ८, सू० १० ) वक्ष्यन्ते ॥ योगस्त्रिविधः पूर्वोक्तः ॥**

**टी०—कषाया मोहनीये वक्ष्यन्त** इति। उक्तनिर्वचनाः कषाया मोहनीये कर्मणीहैवाध्याये उपरिष्टाद् वक्ष्यन्ते प्रपञ्चतः सप्रभेदाः। **योगस्त्रिविधः पूर्वोक्त** इति। मनोयोगो वाग्योगः काययोग इति त्रिविधः—त्रिप्रकारः पूर्वमुक्तः षष्ठेऽध्याये।

एवमेते पञ्च सामान्यप्रत्ययाः सर्वकर्मबन्धहेतव इत्यर्थः। एते च प्रत्ययाश्चतुर्दशसु गुणस्थानेषु न सर्वे सर्वत्र भवन्ति, किं तर्हि ? योग्यत्वात् केचिदेव क्वचिद् भवन्तीति तद् भाव्यते—मिथ्यादृष्टिस्थाने तावत् सर्वेऽपि प्रत्यया मिथ्यादर्शनादयः सम्भवन्ति आहारककायाहारककायमिश्रवर्जाः सर्वप्रकृतीनामिति। तत उपरितनेषु त्रिषु गुणस्थानेषु सास्वादन-सम्यग्मिथ्याविरतसम्यग्दृष्ट्याख्येषु मिथ्यादर्शनवर्जिताः शेषप्रत्ययाः कारणतां प्रतिपद्यन्ते कर्मबन्धस्य, आहारकद्वयवर्जिताः, सम्यग्मिथ्यादृष्टिस्थानेषु मिश्रकार्मणयोगासम्भवः। अविरतसम्यग्दृष्टौ विरताविरतसम्यग्दृष्टौ चानन्तानुबन्धिनो न सन्ति, पञ्चमगुणस्थाने विरताविरतसम्यग्दृष्ट्याख्ये यः संयमासंयमः कषाययोगाः कषायाश्च त्रयो बन्धहेतवः, अप्रत्याख्यानावरणौदारिकमिश्रकार्मणाहारकद्वयवर्जिताः, यत एषामुदयो नास्ति देशविरत इति। तत उपरितनगुणस्थानेषु पञ्चसु प्रमत्ताप्रमत्तसंयतस्थानयोरपूर्वकरणप्रविष्टानिवृत्तिबादरसम्परायसूक्ष्मसम्परायसंयतस्थानेषु च त्रिषु उपशामकक्षपकभेदभिन्नेषु कषाययोगप्रत्ययद्वयनिमित्तो बन्धो भवति। विशेषस्तु प्रमत्तसंयतस्य संज्वलनकषायाश्चत्वारो नोकषायाः नवैवं त्रयोदश भवन्ति। योगास्तु पूर्वोक्तास्त्रयोदशैव। अप्रमत्तस्यापि त एव, केवलं वैक्रियमिश्राहारकमिश्रवर्जिता एकादश योगा बन्धहेतवः। अपूर्वकरणप्रविष्टानामप्येत एव वैक्रियाहारकद्वयवर्जिता योगा नव। कषायास्तु त्रयोदश बन्धहेतवः। अनिवृत्तिकरणप्रविष्टानां नव योगाः कषायाश्चत्वारः संज्वलनाः वेदत्रयं च बन्धहेतवः। सूक्ष्मसम्परायस्थानवर्तिनां नव योगाः संज्वलनलोभश्च बन्धहेतवः। तत उपरितनगुणस्थानत्रये उपशान्तक्षीणकषायसयोगिकेवलिसंज्ञके योगप्रत्यय एव बन्धः, नान्यप्रत्यय इति। उपशान्तकषायस्थाने क्षीणकषायस्थाने च नव नव योगा बन्धहेतवः। सयोगिकेवलिस्थाने तु सप्त योगाः, तत्कारणो बन्ध इति ॥

कर्मबन्धहेतूनां चतुर्दशगुणस्थानेषु योजना

योगश्च पञ्चदशप्रकारः। तत्र मनोयोगश्चतुर्धा सत्यासत्यसत्यासत्यासत्यामृषाभेदतः। एवं

योगानां पञ्चदशविधत्वम्

वागपि चतुर्धा। काययोगस्तु सप्तप्रकारः—औदारिककाययोगः, औदारिकमिश्रकाययोगः, वैक्रियकाययोगः, वैक्रियमिश्रकाययोगः, आहारककाययोगः, आहारकमिश्रकाययोगः, कार्मणकाययोगश्चेति ॥

बन्धप्रत्ययानां भजना

भा०—एषां मिथ्यादर्शनादीनां बन्धहेतूनां पूर्वस्मिन् पूर्वस्मिन् सति नियतमुत्तरेषां भावः । उत्तरोत्तरभावे तु पूर्वेषामनियम इति ॥ १ ॥

टी०—एषां सामान्यप्रत्ययानां मिथ्यादर्शनादीनां भजनां दर्शयति—नावश्यंतया यत्रैकप्रत्ययस्तत्रान्यैरपि भाव्यम् । कदाचिदेकस्मिन् सति सर्वे भवन्ति, कदाचिन्नेति । एषां पञ्चानामपि सामान्यप्रत्ययानां सूत्रक्रमसन्निवेशिनां बन्धनिमित्तानां पूर्वस्मिन् पूर्वस्मिन् सतीति वीप्सया नियतमुत्तरेषां भाव इति प्रतिपादयति । सति मिथ्यादर्शनप्रत्ययेऽवश्यंभाविनोऽविरत्यादयश्चत्वारः । सत्यामविरतौ त्रयः प्रमादादयः । सति प्रमादे कषाययोगौ । सत्सु कषायेषु योगा इति । योगप्रत्यय एव सति नेतरे चत्वार इत्यादि विपरीतं भाव्यं यावत् न मिथ्यादर्शनप्रत्यय इत्येतदनेन प्रतिपादयति—उत्तरोत्तरभावे तु पूर्वेषामनियम इति । अविरतिप्रमादकषाययोगेषु सत्सु न मिथ्यादर्शनप्रत्ययः । योगकषायप्रत्यययोः सतोर्नावश्यमितरे त्रय इति सुज्ञानमिति[1] ॥ १ ॥

एवमुपपादिते विस्तरेण बन्धहेतौ इदमाशङ्कते—कथममूर्तस्यात्मनो हस्ताद्यसम्भवे सति आदानशक्तिविरहात् कर्मग्रहणमिति ? । उच्यते—इयमेव तावदस्यानाऽऽरेका प्रक्रियाऽनभिज्ञस्य, केनामूर्तताऽभ्युपेताऽऽत्मनः ? कर्मजीवसम्बन्धस्यानादित्वादेकत्वपरिणामे सति क्षीरोदकवन्मूर्त एव कर्मग्रहणे व्याप्रियते । न च बाह्यहस्तादिकरणव्यापारादेयं घटादिवत् कर्म पौद्गलमपि सत्, किन्तु अध्यवसायविशेषाद् रागद्वेषमोहपरिणामाभ्यञ्जनलक्षणादात्मनः कर्मयोग्यपुद्गलजालश्लेषणमादानं, स्नेहाभ्यक्तवपुषो रजोलगनवदिति । एवंप्रकाराशङ्काव्यावृत्त्यर्थमिदमाह—

## सूत्रम्—सकषायत्वाज्जीवः कर्मणो योग्यान् पुद्गलानादत्ते ॥ ८-२ ॥

कर्मबन्धे हेतुः

टी०—कषायाः—क्रोधादयोऽनन्तानुबन्ध्यादिभेदाः । सह कषायैः सकषायाः तद्भावः सकषायत्वं तस्मात् सकषायत्वात् । हेतौ पञ्चमी । हेत्वर्थश्च कारणान्तरव्यावृत्तिः । पुनः कषायग्रहणं तीव्राद्याशयविशेषप्रतिपादनार्थम् उत्कृष्टस्थितिरसविशेषप्रतिपादनार्थं च । जीव इत्यात्मा कर्ता स्थित्युत्पत्तिव्ययपरिणतिलक्षणः । सति च कर्तृत्वे कर्मबन्धफलानुभवौ । कियत इति कर्माष्टप्रकारं तस्य योग्यानौदा-

1 'इत्यादि सुज्ञानमिति' इति च-पाठः ।

रिकादिवर्गणास्वष्टासु ज्ञानावरणादिकर्मयोग्याननन्तानन्तप्रदेशस्कन्धांश्चतुःस्पर्शान्, एतदेव च पुद्गलग्रहणेन स्पष्टयति। पूरणगलनलक्षणाः पुद्गलाः स्कन्धीभूतास्तानादत्ते, न पुनः क्रियामात्रं कर्म। कर्म हि पौद्गलमिष्टं रूपादिमदिति। आदत्त इति कर्मात्मप्रदेशेषु लगयति। करोतेः सर्वधात्वर्थवर्तित्वान्मिथ्यादर्शनाद्यावेशादार्द्रीकृतस्यात्मनस्तदाकारपरिणतिक्रिया कर्मलगनहेतुः। कर्ता चात्मा क्रियायाः, क्रियानिर्वर्त्यं च कर्मेत्यमुमेवार्थं भाष्येण स्पष्टयति—

भा०—सकषायत्वाज्जीवः कर्मणो योग्यान् पुद्गलानादत्ते। कर्मणो योग्यानिति अष्टविधे पुद्गलग्रहणे कर्मशरीरग्रहणयोग्यानित्यर्थः। नामप्रत्ययाः सर्वतो योगविशेषादिति वक्ष्यते ( अ० ८, सू० २५ ) ॥ २ ॥

टी०—सकषायत्वादित्यादिना। पदच्छेदोऽपि हि व्याख्याङ्गम्। अन्यथा वटवृक्षे तिष्ठतीत्यादिषु निश्चय एव न स्यात्। ततः सामान्यं न्यायमाश्रित्य भाष्ये पदच्छेदद्वारेणार्थमाचष्टे। मिथ्यादर्शनादयः कर्मबन्धस्याष्टप्रकारस्य सामान्यहेतवोऽभिहिता एव प्रथमसूत्रे, किमर्थं पुनः कषायग्रहणं भेदेनेति? उच्यते—कषायाणां प्रधानहेतुत्वप्रतिपादनार्थम्। तत्रामर्षोऽप्रीतिर्मन्युलक्षणः क्रोधः, स्वगुणपरिकल्पनानिमित्तत्वात्। अप्रणतिर्मानः। परातिसन्धाननिमित्तंश्छद्मप्रयोगो माया। तृष्णापिपासाऽभिष्वङ्गास्वादलक्षणो लोभः। तत्रैकैकोऽनन्तानुबन्धी, संसारानुबन्धीत्यर्थः। एवमप्रत्याख्यानः प्रत्याख्यानावरणः संज्वलनश्चेति। त एते पापिष्ठा बन्धहेतवः संसारस्थितेर्मूलकारणं आजन्मजराभावलक्षणायाः कष्टतमाः प्राणिनामनपराद्धवैरिणः। यथोक्तमार्षे ( दशवैकालिके अ० ८, उ० २, सू० ४० )—

"[6]कोहो यं माणो य अणिग्गहीया, माया य लोभो य पवड्ढमाणा।
चत्तारि एए कसिणा कसाया, सिंचंति मूलाइं पुणब्भवस्स ॥ १ ॥"—इन्द्रवज्रा

तथा—"[7]जं अइदुक्खं लोए, जं च सुहं उत्तमं तिहुयणंमि।
तं जाण कसायाणं, वुड्ढिक्खयहेउयं सव्वं ॥ २ ॥"

एतच्च सकषायत्वं हेतुत्वेनोपात्तम्। हेतुश्च धर्मिणो भवति, स च धर्मी जीव इत्याह। कषायपरिणामो हि परिणन्तुरात्मनो, न त्वपरिणामस्य सर्वगतस्याक्रियस्येति। यथाऽऽह—

"जीवस्तु कर्मबन्धन-बद्धो वीरस्य भगवतः कर्ता।
सन्तत्याऽनाद्यं च तदिष्टं कर्मात्मनः कर्तुः ॥ १ ॥
संसारानादित्वाद् बन्धस्यानादिता भवति सिद्धा।
अत एव कर्म मूर्तं नामूर्तं बन्धकं हीष्टम् ॥ २ ॥

---

१ 'कर्मयोग्या०' इति घ-पाठः। २ 'अष्टविध०' इति घ-टी-पाठः। ३ 'निमित्ताशुद्धप्रयोगो' इति ङ-पाठः।
४ 'आवजवी(?)भावलक्षणयोः' इति ग-पाठः। ५ 'पराधं वैरिणः' इति च-पाठः।
६ छाया—
क्रोधश्च मानश्च अनिगृहीतौ माया लोभश्च प्रवर्धमानौ।
चत्वार एते कृत्स्नाः कषायाः सिञ्चन्ति मूलानि पुनर्भवस्य ॥
७ छाया—यदतिदुःखं लोके यच्च सुखमुत्तमं त्रिभुवने।
तद् जानीहि कषायाणां वृद्धिक्षयहेतुकं सर्वम् ॥

न च निर्हेतुकमिदं देहग्रहणं यदादिमं नृणाम् ।
सति चाप्यहेतुकत्वे न स्यात् संसारनिर्मोक्षः ॥ ३ ॥
तस्मान्मूर्तं कर्मेष्यतेऽर्हता येन तस्य परिणामः ।
दृष्टो मूर्तिर्दृष्टौ च येन तदुदीरणोपशमौ ॥ ४ ॥
यदि रूपि कर्म नै स्यात् न स्यादात्मसहवर्त्यत्रद्धत्वात् ।
बद्धे वा सति कर्मणि ननु सिद्धा रूपिता तस्य ॥ ५ ॥"

समस्तपुद्गला न बन्धयोग्याः

एवं मूर्तत्वे सति न सर्वपुद्गला एव कर्मणो योग्याः, किं तर्हि? वर्गणाक्रमेण, मनोवर्गणायोग्यपुद्गलराशेरुपरि भूयस्त्वादयोग्यवर्गणामतीत्याद्यल्पत्वाच्च कार्मणशरीरायोग्यवर्गणामुल्लङ्घ्य कर्मणो योग्यान् पुद्गलानादत्त इति। आत्मा कर्ता अस्थगितास्रवद्वारः स्कन्धानतिसूक्ष्मानतिबादरांश्चायोग्यत्वात् परिहृत्य अनन्तावयवानपि योग्यानेवादत्ते । यथाऽऽह—

"न स आदातुं स्कन्धानतिसूक्ष्मान् बादरांश्च शक्नोति ।
स्नादेन न बध्यन्ते जात्वणवः शर्कराश्च तथा ॥ १ ॥
अणवः स्कन्धाश्चैकोत्तरपरिवृद्धाः सुसूक्ष्मपरिणामाः ।
केचिदनन्तावयवा अप्यग्राह्या जिनैरुक्ताः ॥ २ ॥

बन्धयोग्यपुद्गलवर्णनम्

एभ्यस्तु पराः स्कन्धा एकोत्तरवृद्धिवर्धिताः सूक्ष्माः ।
पञ्चरसपञ्चवर्णास्तथा द्विगन्धाश्चतुःस्पर्शाः ॥ ३ ॥
अगुरुलघवः स्थिताश्च क्षेत्रैकत्वेन वर्तमानाश्च ।
प्रायोग्याः कर्मतया ग्रहीतुमुक्ताः परिणमय्य ॥ ४ ॥
अणवोऽसेत्स्यद्भ्योऽनन्तगुणाः सिद्धवदनन्ततमभागाः ।
एकस्कन्धीभूताः स्कन्धानां चापि मानं तत् ॥ ५ ॥
औदारिकादिशेषद्रव्यादाने स एव विधिरुक्तः ।
तत्राद्यस्य स्कन्धाः सर्वेऽल्पिष्ठप्रदेशास्तु ॥ ६ ॥

औदारिकादिस्कन्धानां प्रदेशाः

तेभ्योऽसङ्ख्येयगुणा वैक्रिययोग्याः प्रदेशतः स्कन्धाः ।
आहारकस्य तेभ्योऽपि तथा स्कन्धा असंख्येयगुणाः ॥ ७ ॥
तेभ्यः प्रभृति तथैवानन्ताभ्यस्ताः प्रदेशतः स्कन्धाः ।
क्रमशस्तैजसभाषाद्रव्यमनःकर्मणां योग्याः ॥ ८ ॥"

एतदेवानेन भाष्येण प्रतिपादयति—अष्टविधेत्यादिना। अष्टप्रकारे पुद्गलग्रहणे औदारिक-वैक्रियाऽऽहारक-तैजस-भाषा-प्राणापान-मनः-कर्मभेदेन पुद्गलाः परमाणवो द्विप्रदेशादयश्च स्कन्धा यावदचित्तमहास्कन्धः। एतेषु ये योग्याः पुद्गलास्तेषां अष्टविधे ग्रहणे सति विशि-

१ 'न यत् संस रति' इति ङ-पाठः। २ 'हंतो यथ' इति ग-पाठः। ३ 'तस्मादात्म०' इति ख-पाठः।

नष्टि-कर्मशरीरग्रहणयोग्यानित्यर्थः। कर्मैवाष्टविधं शरीरमुक्तम्, अतः स्वार्थे कर्मण(१)-मिति प्रत्ययः। कर्मैव कार्मणं, कर्मसङ्घात इत्यर्थः। ते पुनरादीयमानाः पुद्गलाः कर्त्राऽऽत्मना किम्? नाम्ना कर्मणां प्रत्यया भवन्ति-कारणतां प्रतिपद्यन्ते, क्व वा व्यवस्थिताः? कुतो वा योगविशेषादित्याद्युपक्रम्येदमुक्तम्। नामप्रत्ययाः सर्वतो योगविशेषादिति वक्ष्यते। खल्वयमर्थः-सर्वकर्मणाम् अन्वर्थसंज्ञा नाम संज्ञेत्यनर्थान्तरम्। तद्यथा-ज्ञानावरणमित्यादि। ज्ञानमाव्रियते येन कर्मणा तत् ज्ञानावरणम्, एवं सर्वत्र नामान्वर्थं वाच्यम्। तस्यान्वर्थनाम्नो ज्ञानावरणादेः प्रत्ययाः-कारणानीति। नहि तान् पुद्गलान् विहाय ज्ञानावरणादिसंज्ञाः सिद्ध्यन्तीति। तथा सर्वासु दिक्षु व्यवस्थिताः, कायवाङ्मनोयोगानां च तीव्रादिपरिणामविशेषादित्यादि सर्वमिहैवाध्याये प्रदेशबन्धनिरूपणे व्याख्यास्यते उपरिष्टादिति ॥ २ ॥

एवं बन्धहेतून् निरूप्याधुना बन्धस्वरूपनिरूपणायाह—

## सूत्रम्—स बन्धः ॥ ८-३ ॥

टी०—बन्धनं बन्धः-परस्पराश्लेषः प्रदेशपुद्गलानां क्षीरोदकवत् प्रकृत्यादिभेदः। बध्यते वा येनात्मा-अस्वातन्त्र्यमापाद्यते ज्ञानावरणादिना स बन्धः पुद्गलपरिणामः। स चानन्तरसूत्रे आत्मप्रदेशेषु रागाद्यभ्यञ्जनेषु कर्मयोग्यपुद्गलानामाश्लेषमात्रत्वेनोक्तः, तस्य स इत्यनेन परामर्शः क्रियते। हेतुश्च निर्वर्तयन् कार्यं हेतुव्यपदेशं प्रतिलभते। तस्य च मिथ्यादर्शनादेरिदमेव निर्वर्त्यं कार्यं, पौरुषेयसामर्थ्यप्रतिबन्धकारि जीवप्रदेशेषु ज्ञानावरणादिपुद्गलजालावस्थानम्। सामर्थ्यं च पुंसो ज्ञानदर्शनवीर्यसुखमत्त्वं तस्य प्रतिघातकमात्मप्रदेशप्रतिष्ठं पुद्गलजालमिति। प्रतिष्ठा च तस्य विशिष्टगुणयोगाद्, यथा दीप ऊष्मगुणयोगाद् वर्त्या स्नेहमादायार्चीरूपेण परिणमयति तथा रागादिगुणयोगात् कायादियोगवर्त्याऽऽत्मदीपः स्कन्धानादाय कर्मतया परिणमनमापादयति। कायादिकरणयोगाच्चात्मनो वीर्यपरिणतिर्भवतीति योगशब्देनोच्यते। तथा मृण्मयघटस्याग्निसंयोगाद् रक्तत्वादिपरिणतिर्घटस्यैव तथाऽऽत्मनः कायादिकरणयोगवीर्यपरिणतिरात्मन एव प्रादुरस्ति, न द्रव्यान्तरस्येति। यथा च स्नेहाभ्यक्ते वपुषि जलार्द्रवाससि वा परागो लगति मलीभवति च, तथा रागादिस्नेहाभ्यञ्जनस्यात्मनः कार्मणशरीरपरिणामोऽपूर्वकर्मग्रहणे योग्यतामास्कन्दति, आत्मदेहयोरैक्यादिना योगवीर्यतः कर्मबन्धः। यथाऽऽह—

"अपि चायं प्रायोगिकबन्धः स च भवति कर्तृसामर्थ्यात्।
इष्टश्च स प्रयोगोऽनाभोगिकवीर्यतस्तस्य ॥ १ ॥"

इति ॥

"ननु वीर्येणानाभोगिकेन परिपाच्य रसमुपाहरति।
परिणमयति धातुतया, स च तमनाभोगवीर्येण ॥ २ ॥

---

१ 'कर्मणि इर् प्रत्ययः' इति प्रतिभाति। २ 'हेतुस्तन्निर्वर्त्यं' इति ङ-पाठः। ३ 'सामर्थ्यतया' इति ङ-पाठः।

घटकादिभाविनो मृदवयवा आम्रेडिता यथा पिण्डे ।
तद्वज्ज्ञानावरणादिकर्मदेशा अपि ज्ञेयाः ॥ ३ ॥
आम्रेडितमविभक्तं यद्यप्यष्टविधमिष्यते कर्म ।
एवमपि जिनैर्दृष्टं नानात्वं प्रकृतितस्तस्य ॥ ४ ॥
पुद्गलतासाम्येऽपि द्रव्याणां नंनु विपाकतो भेदः ।
दृष्टः पित्तकफानिलपरिणामवतां स्वगुणभेदात् ॥ ५ ॥
यस्य गुणो यादृक् स्यात् ननु तादृशमेव भवति तस्य फलम् ।
नहि जाम्बवानि निम्बः फलति न जम्बुश्च निम्बानि ॥ ६ ॥
कर्मतरवोऽपि तद्वन्नानास्वस्वप्रयोगपरिषिक्ताः ।
नानास्वस्वगुणसमान् फलन्ति तांस्तान् गुणविशेषान् ॥ ७ ॥"

एनमेव चार्थं भाष्यकारोऽपि स्पष्टयति भाष्येण—

**भा०—स एष कर्मशरीरपुद्गलग्रहणकृतो बन्धो भवति ॥ ३ ॥**

टी०—स एष इत्यादिना । स एष लोलीभूत आत्मप्रदेशकर्मपुद्गलपिण्डः स इत्यनेन परामृश्यते । एष इति नान्यः । तस्यैवानुसन्धानमाचष्टे । आत्मप्रदेशानां पुद्गलानां चान्योन्यानुगतिलक्षण एव बन्धो भवति । कर्मशरीरमिति कार्मणशरीरमात्मैक्याद् योगकषायपरिणतियुक्तमपि च कर्मयोग्यपुद्गलग्रहणे—आत्मसात्करणे एकत्वपरिणामापादने समर्थम् । एवं च कर्मशरीरेण पुद्गलानां यद् ग्रहणं गृहीतिस्तत्कृतो बन्ध इति भावनीयं भवति ॥ ३ ॥

**भा०—स पुनश्चतुर्विधः—**

टी०—स पुनश्चतुर्विध इत्यनेनोत्तरसूत्रसम्बन्धं कथयति लक्षणविधानाभ्याम् । जीवादिपदार्थसप्तकव्याख्या प्रस्तुता, तत्र लक्षणतः प्रतिपादितो बन्धः । सम्प्रति लक्षितस्य विधानं वाच्यम् । अतः स एष उक्तलक्षणको बन्ध एकरूपोऽपि कार्यभेदात् प्रकृत्यादिविभागमासादयति, अवस्थाभेदाद् वा, यथा पृथग्जनः क्रौर्यनीचैस्त्वलोभादिभेदान्नानात्वं प्रतिपद्यते तद्वद् बन्धोऽपीति । पुनःशब्दो बन्धं विशिनष्टि—द्रव्यभावभेदे सति भावबन्ध इति । चतस्रो विधा यस्य स चतुर्विधः—चतुःप्रकारः । तत्प्रकारनिरूपणायेदमाह—

बन्धस्य विधानचतुष्टयम्

**सूत्रम्—प्रकृतिस्थित्यनुभावप्रदेशास्तद्विधयः ॥ ८–४ ॥**

टी०—प्रकृत्यादयः कृतद्वन्द्वाः भवनविभक्त्या निर्दिष्टाः, तत्र प्रकृतिर्मौलं कारणं मृदिव घटादिभेदानामेकरूपपुद्गलग्रहणम्, अतः प्रक्रियन्तेऽस्य सकाशादिति अकर्तरीत्यनुवृत्तेरपादानसाधना प्रकृतिः । स्वभाववचनो वा

प्रकृत्यादीनां साधनता

---

१ 'न तु' इति ग-पाठः । २ 'एकलोली' इति ङ-पाठः । ३ 'विभक्त्यादिनिर्दिष्टाः' इति ग-पाठः ।
४ 'भेदा भागैक' इति ग-पाठः ।

प्रकृतिशब्दः । दुष्टप्रकृतिर्दुष्टस्वभाव इति प्रसिद्धेः । ज्ञानावरणं ज्ञानाच्छादनस्वभावं मौलभेदतः, एवं दर्शनावरणादावपि योज्यम् । स्वभाववचनत्वे च भावसाधनः प्रकृतिशब्दः । स्थित्यनुभावशब्दावपि भावसाधनौ । इयत्तयाऽवधारणात् प्रदेशशब्दः कर्मसाधनः । क्रमनियमस्तु शेषविकल्पप्रकृतेरादौ प्रकृतिबन्धः । उपात्तस्यावस्थानकालपरिच्छेदात् ततः स्थितिबन्धः । सत्यां स्थितौ फलदानक्षमत्वादनुभावबन्धः । ततः कर्मपुद्गलपरिमाणलक्षणः प्रदेशबन्धः । स बन्ध इत्यत्र बन्धस्य प्रस्तुतत्वात्तच्छब्देन परामर्शः । विधिर्विधानं–भेदः तस्य विधयस्तद्विधयो–बन्धभेदा इति, एतद् भाष्यकृताऽऽविष्कृतमेव प्रत्येकं सम्बध्नता बन्धशब्दम् ॥

**भा०—प्रकृतिबन्धः, स्थितिबन्धः, अनुभावबन्धः, प्रदेशबन्ध इति ॥ ४ ॥**

तत्र—

**टी०**—तत्र यथोक्तप्रत्ययसद्भावे सति पुद्गलादानं प्रकृतिबन्धः कर्मात्मनोरैक्यलक्षणः, ततश्चात्मनोऽध्यवसायविशेषादनाभोगपूर्वकादाहारपरिणामवत् कर्मपरिणतिः स्थित्यादिलक्षणा । तथाचोक्तमेव कर्मपुद्गलराशेः कर्त्रा परिगृहीतस्यात्मप्रदेशेष्ववस्थानं स्थितिः । अध्यवसायनिर्वर्तितः कालविभागः, कालान्तरावस्थाने सति विपाकवत्ताऽनुभावबन्धः । समासादितपरिपाकावस्थस्य बदरादेरिवोपभोग्यत्वात् सर्वदेशघात्येकद्वित्रिचतुःस्थानशुभाशुभतीव्रमन्दादिभेदेन वक्ष्यमाणः । ततस्तस्य कर्तुः स्वप्रदेशेषु कर्मपुद्गलद्रव्यपरिमाणनिरूपणं, प्रदेशबन्धः, अत्र च पारमर्षवचनविदः कणिकागुडघृतकटुकभाण्डादिद्रव्यविकारं मोदकमाहरन्ति प्रकृत्यादिबन्धनिरूपणाय । तथाहि–चित्रः पुद्गलपरिणामः कर्तुरध्यवसायानुगृहीत इति भाव्यते । मोदको हि वातपित्तहरो बुद्धिवर्धनः संमोहकारी मारक इत्यनेकेनाकारेण परिणमते जीवसंयोगात्, तथा कर्मवर्गणायोग्यपुद्गलराशिरप्यात्मसम्बन्धात् कश्चिद् ज्ञानमावृणोति, अपरो हि दर्शनं स्थगयति, अन्यः सुखदुःखानुभवहेतुरित्यादि योज्यम् । भूयस्तस्यैवाविपन्नगन्धरसादेरविनाशित्वेनावस्थानं स्थितिः । आह च—

" इति कर्मणः प्रकृतयो मूलाश्च तथोत्तराश्च निर्दिष्टाः ।
तासां यः स्थितिकालनिबन्धः स्थितिबन्ध उक्तः सः ॥ १ ॥"

तस्यैव च स्निग्धमधुराद्येकद्विगुणादिभावोऽनुभावः । यथाऽऽह—

" तासामेव विपाकनिबन्धो यो नामनिर्वचनभिन्नः ।
स रसोऽनुभावसंज्ञस्तीव्रो मन्दोऽथ मध्यो वा ॥ १ ॥"

पुनस्तस्यैव कणिकादिद्रव्यपरिमाणान्वेषणं प्रदेशः, कर्मणोऽपि पुद्गलपरिमाणनिरूपणं प्रदेशबन्ध इति । यथोक्तम्—

१ 'कलापपरि०' इति ग-पाठः । २ 'घात्याघात्य' इति ग-पाठः । ३ 'कटुभाण्ड' इति ग-पाठः । ४ 'मोहकरो' इति ग-पाठः ।

"तेषां पूर्वोक्तानां स्कन्धानां सर्वतोऽपि जीवेन ।
सर्वैर्देशैर्योगविशेषाद् ग्रहणं प्रदेशाख्यम् ॥ १ ॥
प्रत्येकमात्मदेशाः कर्मावयवैरनन्तकैर्बद्धाः ।
कर्माणि बध्नतो मुञ्चतश्च सातत्ययोगेन ॥ २ ॥"

इतिकरणो मौलबन्धभेदेयत्ताप्रतिपादनार्थः । ज्ञानावरणादिकर्मणामष्टानामपि प्रकृत्यादिभेद एव मौल इति ॥ ४ ॥

उत्तरसूत्रसम्बन्धार्थस्तत्रशब्दः । तत्र-तेषु चतुर्षु प्रकृत्यादिलक्षणेषु बन्धभेदेषु प्रथमो भेद उच्यते । स च बन्धो द्वेधा-मूलप्रकृतिबन्धः उत्तरप्रकृतिबन्धश्च । मूलप्रकृतिबन्धप्रतिपत्त्यर्थमिदं वचनम्—

मूलप्रकृतयोऽष्टौ

**सूत्रम्—आद्यो ज्ञानदर्शनावरणवेदनीयमोहनीयायुष्कनामगोत्रान्तरायाः ॥ ८-५ ॥**

टी०—आदौ भव आद्योऽनन्तरातीतसूत्रविन्याससंश्रयणात् [२](?) ज्ञानदर्शनयोः आवरणशब्दः प्रत्येकमभिसम्बध्यते ज्ञानावरणं दर्शनावरणमिति । ज्ञानमेव बोधलक्षणो विशेषविषयः पर्याय आत्मनः, तथा दर्शनपर्यायः सामान्योपलम्भलक्षणस्तयोरावरणं-आच्छादनमावृतिः आवरणं आव्रियते वाऽनेनेति भावकरणयोर्व्युत्पत्तिः, सुखदुःखरूपेणानुभवितव्यत्वाद् वेदनीयमिति कर्मसाधनम् । मोहयति मोहनं वा मुह्यत्यनेनेति वा मोहनीयम् । एत्यनेन गत्यन्तराणीत्यायुः, आयुरेव चायुष्कं स्वार्थे कन् । नामयतीति नाम प्रह्वयत्यात्मानं गत्याद्यभिमुखमिति, नम्यते वा प्रह्वीक्रियतेऽनेनेति नाम । कर्तरि करणे वा व्युत्पाद्यते । गोत्रं उच्चनीचभेदलक्षणं तद् गच्छति-प्राप्नोत्यात्मेति गोत्रम् । अन्तर्धीयतेऽनेनात्मनो वीर्यलाभादीति अन्तरायः । अन्तर्धानं वाऽऽत्मनो वीर्यादिपरिणामस्येत्यन्तरायः । "कृत्यल्युटो बहुलं" (पा० अ० ३, पा० ३, सू० ११३) इति लक्षणसद्भावात् सर्वत्र साधिमा प्रतिपत्तव्यः । तुल्यार्थत्वात् सङ्कीर्यन्ते संज्ञा इति चेन्न प्रसिद्धतरत्वात् गोसर्पादिसंज्ञावत् । एवमेते ज्ञानावरणादयः कृतद्वन्द्वाः प्रथमया निर्दिष्टाः । क्रमस्त्वेषामर्थापेक्षः । तथाच ज्ञानदर्शनावरणोदयजनिता सर्वसत्त्वानां भवव्यथा । तां च वेदयमानोऽपि मोहाभिभूतत्वान्न विरज्यते । अविरक्तश्च देवमानुषतिर्यङ्नरकायुषि वर्तते । न चानामकं जन्म । जन्मवन्तश्चानुस्यूताः सदैव गोत्रेण । तत्र संसारिणां सुखलेशानुभवः सान्तरायः सर्व इत्यन्तरायनिर्देशः ॥

(ज्ञानावरणादीनां व्युत्पत्त्यर्थः) (ज्ञानावरणादीनां क्रमे हेतुः)

१ 'भवति' इति ङ-पाठः । २ अत्र काचित् त्रुटिरिति प्रश्नः । ३ 'व्यवस्था' इति ङ-पाठः ।

भा०—आद्य इति सूत्रक्रमप्रामाण्यात् प्रकृतिबन्धमाह। सोऽष्टविधः, तद्यथा-ज्ञानावरणं, दर्शनावरणं, वेदनीयं, मोहनीयं, आयुष्कं, नाम, गोत्रम्, अन्तरायमिति ॥ ५ ॥ किञ्चान्यत्—

टी०—आद्य इति सूत्रक्रमप्रामाण्यादित्यादि भाष्यम्। आद्यः-प्रथमो मूलप्रकृतिबन्धः। इतिकरणः शब्दपदार्थकः। सूचनात् सूत्रं अनेकभेदं कर्म यतः सूचयति। क्रमः-सन्निवेशस्तस्य प्रामाण्यमन्यप्रमाणत्वादिवत् समासः तस्मात्, सूत्रक्रमप्रामाण्यादिति हेत्वर्थो पञ्चमी। प्रकृतिबन्धमिति सामान्याभिधानेऽपि मूलप्रकृतिबन्धमेव काका प्रतिपादयति सूत्रकारः। यतः पञ्चनवेत्यादिनोत्तरप्रकृतिबन्धं वक्ष्यति ( अ० ८, सू० ६ )। स मूलप्रकृतिबन्धोऽष्टविधः-अष्टप्रकारः। तद्यथा-ज्ञानावरणमित्यादि गतार्थं भाष्यम्। इतिकरणः शुभाशुभस्य कर्मण इयत्ताप्रतिपत्तये प्रायोजीति ॥ ५ ॥

किञ्चान्यदित्यादिना सूत्रस्य सम्बन्धमाचष्टे। न केवलं प्रकृतिबन्धो मूलविशेषणः, उत्तरोपपदविशेषणश्चेत्येतदनन्तरं प्रतिपादयन्नाह—

मूलप्रकृतीनामवान्तरभेदसङ्ख्या

सूत्रम्—पञ्चनवद्व्यष्टाविंशतिचतुर्द्विचत्वारिंशद्द्विपञ्चभेदा यथाक्रमम् ॥ ८-६ ॥

टी०—पञ्चादीनां कृतद्वन्द्वानां भवनविभक्त्या निर्देशः। एते भेदाः-पञ्चादिभेदा यथाक्रममित्यनन्तरसूत्रक्रमं प्रत्यवमृशति, अनन्तरसूत्रक्रमप्रामाण्यात् ज्ञानावरणाद्यभिसम्बन्धः। तांश्च पञ्चादिकान् भेदान् स्वभावतः प्रति मूलप्रकृतिं वक्ष्यति। ता एव मूलप्रकृतीरभिसम्बन्धयन्नाह—

भा०—स एष प्रकृतिबन्धोऽष्टविधोऽपि पुनरेकशः पञ्चभेदः नवभेदः द्विभेदः अष्टाविंशतिभेदः चतुर्भेदः द्विचत्वारिंशद्भेदः द्विभेदः पञ्चभेद इति यथाक्रमं प्रत्येतव्यम्। इत उत्तरं यद् वक्ष्यामः ॥ ६ ॥ तद्यथा—

टी०—स एष प्रकृतिबन्धोऽष्टविधोऽपीत्यादि। आत्मपुद्गलद्रव्यस्यान्वयित्वात् स इत्यनेन सामान्यमात्रपरामर्शः। एष इत्यन्वयिनः परिणामविशेषप्रतिपत्तिः। प्रकृतिबन्ध इति मूलप्रकृतिबन्धोऽष्टप्रकारोऽपि भूय एकैको ज्ञानावरणादिपञ्चादिभेदो मन्तव्य इति क्रमेण भाष्यकृद् दर्शयति—पञ्चभेद इत्यादिना भाष्येण। समुदायार्थस्त्वस्य भाष्यस्य प्रागास्रवोद्देशे मूलप्रकृतिप्रदर्शित एव, केवलं इह तूत्तरभेदानां सङ्ख्याप्रदर्शनमिति। तत्र पञ्चभेदो ज्ञानावरणप्रकृतिबन्धः क्रमेण यावत् पञ्चभेदोऽन्तरायप्रकृतिबन्ध इत्येवमेतद् यथाक्रमं प्रत्येतव्यम्। इतःप्रभृत्युत्तरकालं यदभिधास्याम इति ॥ ६ ॥

---

१ 'बन्धे' इति ग-पाठः। २ 'तदनेन' इति ङ-पाठः। ३ 'प्रदर्शनमेव' इति ङ-पाठः।

तथ्ययेत्यनेन सूत्रं सम्बध्नाति । पञ्चादिभेदा ज्ञानावरणादयोऽभिहिताः, तद् यथा ते व्यवस्थिताः येन क्रमेण स्वरूपेण पञ्चादिभेदास्तथा अष्टापि मूलप्रकृतिपूत्तरप्रकृतयः प्रतिपदं प्रदर्श्यन्त इत्याह ।

## सूत्रम्—मत्यादीनाम् ॥ ८–७ ॥

टी०—मत्यादीनामित्यादि । मतिरादिर्येषां श्रुतावधिमनःपर्यायकेवलज्ञानानामिति तद्गुणसंविज्ञानो बहुव्रीहिः तानि मत्यादीनि तेषां मत्यादीनामावरणम् । क्रिययाऽऽप्तुमिष्टतमत्वात् कर्मणि षष्ठी । मत्यादीनामावरणं मत्यादीन्याव्रियन्तेऽनेनेति । अपरे तु प्रतिपदं पञ्चापि पठन्ति—मतिश्रुतावधिमनःपर्यायकेवलानामिति[1] । एवं चापार्थकः पाठो लक्ष्यते । यतोऽनन्तरसूत्रे पञ्चादिभेदा ज्ञानावरणादय इत्यवधृतमेव । निर्ज्ञाताश्च स्वरूपतः प्रथमाध्याये व्याख्याततत्वात् । अत आदिशब्द एव च युक्तः । भाष्यकारोऽप्येवमेव[2] सूत्रार्थमावेदयते—

सूत्रपाठविचारः

भा०—मत्यादीनां ज्ञानानामावरणं पञ्चविधम्—मतिज्ञानावरणं, श्रुतज्ञानावरणं, अवधिज्ञानावरणं, मनःपर्ययज्ञानावरणं, केवलज्ञानावरणम् । मत्यादीनां ज्ञानानामावरणानि पञ्च भवन्ति ॥[3] ७ ॥

टी०—ज्ञानावरणं पञ्चविधं भवति । मत्यादीनां ज्ञानानामावरणानि पञ्च विकल्पाश्चैकश इत्येतावदेव भाष्यमस्य सूत्रस्य । तत्र ज्ञानावरणं पञ्चविधं भवतीत्यनेनानन्तरसूत्रोक्तसंख्यावधारणं मन्तव्यम् । सूत्रार्थमाचष्टे—मत्यादीनां ज्ञानानामावरणानि पञ्चेति, मत्यादय एव ज्ञानानीति समानाधिकरणमाविष्करोति । तेषां मत्यादीनां ज्ञानानां पञ्चानां पञ्चैवावरणानि भवन्ति । बाहुल्यमङ्गीकृत्य समानाधिकरणप्रतिपत्तिः । मनःपर्यायज्ञाने तु सप्तम्यन्तेन समासः पूर्वपदेन, मनःपर्यायेषु ज्ञानं मनःपर्यायज्ञानम् । अथवा करणरूपाः पर्यायाः कार्यत्वेनोपचरिता इति समानाधिकरण एव । तानि तु प्रथितान्येव । तद् यथा—मतिज्ञानावरणं श्रुतज्ञानावरणं अवधिज्ञानावरणं मनःपर्यायज्ञानावरणं केवलज्ञानावरणमिति । तत्रात्मनो ज्ञस्वभावस्य प्रकाशरूपस्य ज्ञानावरणक्षयोपशमक्षयसमुद्भवाः प्रकाशविशेषा मतिज्ञानादिव्यपदेश्याः पर्याया बहुविकल्पाः । तत्र च ज्ञानावरणस्य स्वस्थाने यावन्तो विकल्पाः सम्भवन्ति सर्वे ते ज्ञानावरणग्रहणेनैव ग्राह्या इति भाष्यार्थः । विकल्पा–भेदाः । आदिशब्दोपादानात् मत्यज्ञानादित्रितयं समुच्चीयते, बोधसामान्यात् मतिश्रुतावध्यविशेषाच्च ।

१ 'मतिश्रुतावधिमनःपर्यायकेवलानाम्' इति घ-टी-पाठः । २ 'कारोऽयमेव' इति ङ-पाठः । ३ घ-पुस्तके । भाष्यं तु यथा—'ज्ञानावरणं पञ्चविधं भवति । मत्यादीनां ज्ञानानामावरणानि पञ्च । विकल्पाश्चैकश इति ॥' इदं टीकाकाराणां संमतम् ।

४ 'मावृणोति' इति ङ-पाठः । ५ 'धारणम् । मत्यादीनां' इति ङ-पाठः ।

तद् यथा—इन्द्रियानिन्द्रियनिमित्तत्वादवग्रहादयो मतिज्ञानस्य, अङ्गानङ्गविकल्पाः श्रुतज्ञानस्य, भवक्षयोपशमजप्रतिपात्यादिविकल्पाश्चावधिज्ञानस्य, ऋजुविपुलमतिविकल्पौ मनःपर्यायज्ञानस्य, सयोगायोगास्थादिविकल्पाः केवलज्ञानस्येति। तत्रेन्द्रियनिमित्तं श्रोत्रादिपञ्चकसमुत्थं क्षयोपशमजं ज्ञानं योग्यदेशावस्थितस्वविषयग्राहि। अनिन्द्रियं तु मनोवृत्तिः ओघज्ञानं च, तदेतन्मतिज्ञानं चतुरष्टाविंशतिद्वात्रिंशत्षट्त्रिंशदुत्तरत्रिशतभेदमाविश्यते येन तन्मतिज्ञानावरणं देशघातिलोचनपटलवच्चन्द्रप्रकाशाऽभ्रादिवद् वा। तथा श्रोत्रेन्द्रियोपलब्धिः श्रुतं शेषेन्द्रियमनोविज्ञानं च श्रुतग्रन्थानुसारि स्वार्थाभिधानप्रत्यलं श्रुतज्ञानं, तदनेकभेदमाचक्षते प्रवचनाभिज्ञाः। यथाऽऽह ( बृहत्कल्पे ? )—

"[1]जावंति अक्खराइं, अक्खरसंजोग जेत्तिया लोए।
एवइया पगडीओ, सुयनाणे होंति नायव्वा॥ १॥"

तस्यावृतिः श्रुतज्ञानावरणम्। एतदपि देशघातीति। अन्तर्गतबहुतरपुद्गलद्रव्यावबोधना-द्वधिः पुद्गलद्रव्यमर्यादयैव वाऽऽत्मनः क्षयोपशमजः प्रकाशाविर्भावोऽवधिः-इन्द्रियनिरपेक्षः साक्षात् ज्ञेयग्राही लोकाकाशप्रदेशमानप्रकृतिभेदः, तदावरणमवधिज्ञानावरणम्। इदमपि देशघात्येव। तथा[2]ऽऽत्मनो मनोद्रव्यपर्यायान् निमित्तीकृत्य यः प्रतिभासो मनुष्यक्षेत्राभ्यन्तरवर्ति-पल्योपमासङ्ख्येयभागावच्छिन्न[3]पश्चात्पुरःकृतपुद्गलसामान्यविशेषग्राही मनःपर्यायज्ञानसंज्ञस्तस्यावरणं देशघाति मनःपर्यायज्ञनावरणम्। समस्तावरणक्षयाविर्भूतमात्मप्रकाशतत्त्वमशेषद्रव्यपर्यायग्राहि केवलज्ञानं तदाच्छादनकृत् केवलज्ञानावरणम्। एतच्च सर्वघातीति॥ ७॥

सम्प्रति दर्शनावरणोत्तरप्रकृतिप्रतिपिपादयिषया सूत्रमाह—

दर्शनावरणस्य नवोत्तरप्रकृतयः,

**सूत्रम्—चक्षुरचक्षुरवधिकेवलानां निद्रानिद्रानिद्राप्रचलाप्रचलाप्रचलास्त्यानर्द्धि[4]वेदनीयानि च॥ ८-८॥**

टी०—चक्षुरादयः कृतद्वन्द्वाः षष्ठ्या निर्दिष्टाः प्रस्तुतावरणसम्बन्धाद् वेदनीयसम्बन्धनिराकरणप्रतिपत्तेश्च, दर्शनावरणमूलप्रकृतिसामर्थ्यात् चक्षुरादयो दर्शनशब्देन सहाभिसम्बध्यात्, निद्रादयः पञ्च स्त्यानर्द्ध्यन्ताः कृतद्वन्द्वाः वेदनीयशब्दोत्तरनिर्दिष्टाः समानाधिकरणप्रतिपत्त्यर्थम्। पश्यत्यनेनात्मेति चक्षुः। सर्वमेवेन्द्रियमात्मनः सामान्यविशेषबोधस्वभावस्य करणद्वारं, तद्द्वारकं च सामान्यमात्रोपलम्भनमात्मपरिणतिरूपं चक्षुर्दर्शनं तल्लब्धिघाति चक्षुर्दर्शनावरणं, शेषेन्द्रियमनोविषयमविशिष्टमचक्षुर्दर्शनं तल्लब्धिघात्यचक्षुर्दर्शनावरणम्। अवधावपि प्रथमसम्पाते सामान्यमात्रोपलम्भनमवधिदर्शनम्। केवलदर्शनमपि सामान्योपयोगलक्षणम्। एतदुत्तरावरणमवधिदर्शनावरणं केवलदर्शनावरणं च। स्वापो निद्रा सुखप्रतिबोधलक्षणा। वेद-

१ छाया—
यावन्ति अक्षराणि अक्षरसंयोगा यावन्तो लोके।
एतावत्यः प्रकृतयः श्रुतज्ञाने भवन्ति ज्ञातव्याः॥

२ 'तदात्मनो' इति ङ-पाठः। ३ 'छिन्नपश्चाग(?)न्पुरःकृत' इति च-पाठः। ४ '०स्त्यानगृद्धिवेद०' इति घ-पाठः।

वेदनीय-शब्दयोगे हेतुः

नीयम्-अनुभवनीयं निद्रा चासौ वेदनीयं चेति सर्वत्र समानाधिकरणः। दर्शनावरणोत्तरप्रकृतिप्रस्तावे वेदनीयं प्रस्तावापास्तमुपन्यस्तमित्यसमीचीनमिवाभाति। यतो वेदनीयं तृतीयमूलप्रकृतिरिति। अत्रोच्यते-दर्शनावरणभेदा दर्शनावरणजातीया एव, निद्रादयो यतः समधिगताया एव दर्शनलब्धेः उपयोगघाते प्रवर्तन्ते, चक्षुर्दर्शनावरणादिचतुष्टयं तूद्गमोच्छेदित्वान्मूलघातं निहन्ति दर्शनलब्धिमित्यतो दर्शनावरणभेदाः। वेदनीयशब्दस्तु सामान्येन सकलकर्मानुभववचनोऽपि प्रवचने प्रसिद्धतरत्वात् तृतीयमूलप्रकृतौ व्यवह्रियते। अनुभवनीयत्वं तु सर्वकर्मणां परमार्थतः समस्तीत्यतो न दोषः। दुःखप्रतिबोधलक्षणा निद्रानिद्रा। ऊर्ध्वशयनलक्षणा प्रचला। चङ्क्रमणमाचरतः शयनं प्रचलाप्रचला। स्त्यायतीति स्त्यानम्। स्तिमितचित्तो नातीव विकस्वरचेतन आत्मा। बाहुल-

पाठान्तर-परामर्शः

कात् कर्तरि ल्युट्। स्त्यानस्य स्वापविशेषे सति गृद्धिः-आकाङ्क्षाभिलाषो मांसमोदकदन्ताद्युदाहरणप्रसिद्धा स्त्यानगृद्धिः। स्त्यानर्द्धिरिति वा पाठः। तदुदयाद्धि महाबलोऽर्धचक्रवर्तितुल्यबलः प्रकर्षप्राप्तो भवति। अन्यथा जघन्यमध्यमावस्थाभाजोऽपि संहननापेक्षया सम्भवत्येवेति। स्त्यानस्य ऋद्धिः स्त्यानर्द्धिरिति। चशब्दः समुच्चयवृत्तिः। दर्शनावरणभेदाः चक्षुर्दर्शनावरणादयो निद्रावेदनीयादयश्चेति वाक्यार्थः। उक्तार्थानुगामि च भाष्यम्—

भा०—चक्षुर्दर्शनावरणं, अचक्षुर्दर्शनावरणं, अवधिदर्शनावरणं, केवलदर्शनावरणं, निद्रावेदनीयं, निद्रानिद्रावेदनीयं, प्रचलावेदनीयं, प्रचलाप्रचलावेदनीयं, स्त्यानर्द्धिवेदनीयमिति दर्शनावरणं नवभेदं भवति ॥ ८ ॥

टी०—चक्षुर्दर्शनावरणमित्यादि सर्वं गतार्थम्। दर्शनावरणं नवभेदं भवतीत्यन्ते निगमितं नवभेदमेवेति ॥ ८ ॥

सम्प्रति यत्तदागमे प्रसिद्धं वेदनीयत्वेन तृतीयं मूलप्रकृतिरूपं तदुत्तरप्रकृतिविवक्षया सूत्रकार आह—

वेदनीयस्य द्वे उत्तरप्रकृती

## सूत्रम्—सदसद्वेद्ये ॥ ८-९ ॥

टी०—उत्तरप्रकृतिभेदमात्रस्य विवक्षितत्वात् प्रथमैव, सद्वेद्यमसद्वेद्यं चेति वेदनीयमूलप्रकृतेरुत्तरप्रकृतिद्वयं भवति। तत्राभिमतमिष्टमात्मनः कर्तुरुपभोक्तुर्मनुजदेवादिजन्मसु शरीरमनोद्वारेण सुखपरिणतिरूपमागन्तुकानेकमनोज्ञद्रव्यक्षेत्रकालभावभवसम्बन्धसमासादितपरिपाकावस्थमतिबहुभेदं यदुदयाद् भवति तदाचक्षते। सद्वेदनीयमभिहितं, विपरीतमसद्वेदनीयम्। एवंविधार्थानुवादि च भाष्यम्।

---

१ 'योगतः' इति क-पाठः। २ 'स्त्यानस्तिमित' इति ख-पाठः। ३ 'स्त्यानगृद्धि' इति घ-पाठः। ४ 'भावसम्बन्ध' इति ग-पाठः।

भा०—सद्वेद्यमसद्वेद्यं च वेदनीयं द्विभेदं भवति ॥ ९ ॥

टी०—सद्वेद्यमित्यादि । सच्छब्दः प्राशस्त्ये । प्रशंसा चात्मनोऽभिमतविषयत्वम् । असच्छब्दस्तद्वैपरीत्ये । चशब्द उत्तरप्रकृतिसमुच्चितौ । वेद्रनीयं-वेद्यं द्विभेदं-द्विप्रकारं भवति ॥ ९ ॥

सम्प्रति चतुर्थमूलप्रकृतेर्मोहनीयनाम्नः उत्तरप्रकृतिप्रपञ्चाख्यानायाह—

मोहनीयस्याष्टाविंशतिरुत्तरप्रकृतयः

सूत्रम्—दर्शनचारित्रमोहनीयकषायनोकषायवेदनीयाख्यास्त्रिद्विषोडशनवभेदाः । सम्यक्त्वमिथ्यात्वतदुभयानि कषायनोकषायौ अनन्तानुबन्ध्यप्रत्याख्यानप्रत्याख्यानावरणसंज्वलनविकल्पाश्चैकशः क्रोधमानमायालोभाः हास्यरत्यरतिशोकभयजुगुप्साः स्त्रीपुंनपुंसकवेदाः ॥ ८-१० ॥

टी०—मोहनीयमूलप्रकृतेरष्टाविंशतिरुत्तरप्रकृतयः सङ्ग्रहभेदरूपाः सूत्रेणैव निर्दिष्टाः । मोहनीयशब्दः प्रत्येकमभिसम्बध्यते । दर्शनमोहनीयं चारित्रमोहनीयमिति सङ्ग्रहेण निर्देशः । पुनश्चारित्रमोहनीयमुत्तरभेदापेक्षया सङ्ग्रहेणैव निर्दिष्टम् । तद्भेदाख्यानं तु कषायवेदनीयं नोकषायवेदनीयमिति । दर्शनमोहनीय इत्यादिका आख्या यासामुत्तरप्रकृतीनां तास्तथा निर्दिष्टाः । तासां भेदप्रतिपादनार्थमाह—त्रिद्विषोडशनवभेदा इति । निर्देशक्रमेणैव त्र्यादयो भेदा यासां तास्तथोक्ताः, दर्शनमोहनीयोत्तरप्रकृतिस्त्रिभेदा, चारित्रमोहनीयोत्तरप्रकृतिर्द्विभेदा, तौ चामू विकल्पौ, कषायवेदनीयं षोडशभेदं, नोकषायवेदनीयं नवभेदमिति । एवमिति एवमेता उत्तरप्रकृतयोऽष्टाविंशतिः सूचिताः मोहनीयप्रकृतेः ।

अधुना तु त्र्यादिभेदान् सूत्रेणैव प्रतिपादयति—सम्यक्त्वमिथ्यात्वतदुभयानीति । सम्यक्त्वं मिथ्यात्वं तदुभयमिति द्वन्द्वनिर्देशः । तत्त्वार्थश्रद्धानलक्षणं सम्यक्त्वं, तद्विपरीतं मिथ्यात्वं, तदुभयमिति सम्यग्मिथ्यातत्त्वश्रद्धानलक्षणम् । एवमेतत् त्रिविधं दर्शनमोहनीयं सूचितम् । कषायनोकषायावित्यनेन चारित्रमोहनीयभेदद्वयाख्यानम् ।

अकषायस्यार्थः

अनन्तानुबन्धिप्रभृति कषायास्त एव मोहनीयम् । अकषाया हास्यादयः, केवलाः कषायसम्पर्कशून्याः स्वकार्यासमर्था इत्यकषायाः । सदैव हि कषायसंपृक्ताश्चारित्रमोहनीयव्यपदेश्याः, अल्पकषायकार्यत्वादकषाया इति ।

तत्र कषायमोहनीयभेदप्रदर्शनार्थमाह सूत्रशकलम्—अनन्तानुबन्धिक्रोधमानमायालोभा इति । अनन्तः संसारस्तमनुबध्नन्ति तच्छीलाश्चेत्यनन्तानुबन्धिनः क्रोधादयः । अविद्यमानं प्रत्याख्यानं येषामुदयात् तेऽप्रत्याख्यानाः क्रोधादयः । अपरे पुनरावरणशब्दमत्रापि सम्बध्नन्ति—अप्रत्याख्यानावरणा इति । अप्रत्याख्यानं देशविरतिः, तदप्यावृण्वन्ति

१ 'प्राशंस्ये' इति ङ-पाठः । २ 'रूपास्तत्रैव' इति ङ-पाठः । ३ 'सम्यक्तां' इति ङ-पाठः ।

किमुत सर्वप्रत्याख्यानमिति। मूलगुणप्रत्याख्यानविघातवर्तिनः प्रत्याख्यानावरणाः क्रोधादयः। स्वल्पनिमित्तप्राप्तावपि युगपत् संज्वलनाः संज्वलनाः क्रोधादयः। एषां चानन्तानुबन्ध्यादीनामेकैकस्य क्रोध-मान-माया-लोभाख्या विकल्पा भवन्ति, अनन्तानुबन्धिनः क्रोधादयः, एवमप्रत्याख्यानाः प्रत्याख्यानावरणाः संज्वलनाश्चेति। एवमेते षोडशभेदाः कषायवेदनीयाः सूचिताः। हास्येत्यादिना सूत्रावयवेन नोकषायवेदनीयमाचष्टे नवभेदम्। तदष्टाविंशतिविधमावेदितं मोहनीयं कर्म सूत्रेणेति। अधुना भाष्यमनुस्रियते—

भा०—त्रि-द्वि-षोडश-नवभेदा यथाक्रमम्। मोहनीयबन्धो द्विविधः—दर्शनमोहनीयाख्यश्चारित्रमोहनीयाख्यश्च। तत्र दर्शनमोहनीयाख्यस्त्रिभेदः। तद्यथा—मिथ्यात्ववेदनीयं, सम्यक्त्ववेदनीयं, सम्यग्मिथ्यात्ववेदनीयमिति ॥

टी०—त्रि-द्वि-षोडश-नवभेदा यथाक्रममित्यादि। उक्तार्थं चैतद् भाष्यम्। दर्शन-चारित्र-कषाय-नोकषायमोहनीयप्रकृतयः क्रमेण त्रि-द्वि-षोडश-नवभेदाः। अनेनाष्टाविंशतिविधता प्रतिपादिता मोहनीयस्य। मोहनीयबन्ध इत्यादि। यथोक्तकारकप्रसिद्धो मोहशब्दो द्विप्रकारो दर्शनमोहनीयाख्यश्चारित्रमोहनीयाख्यश्च। तत्त्वार्थश्रद्धानं दर्शनं तन्मोहनाद् दर्शनमोहनीयम्। प्राणातिपातादिविरतिश्चारित्रं तन्मोहनाच्चारित्रमोहनीयम्। तत्र दर्शनमोहनीयाख्यस्त्रिभेद इत्यादि। तत्र—तयोर्दर्शनचारित्रमोहनीययोर्दर्शनमोहनीयाख्यस्त्रिभेदः प्रकृतिबन्धस्तावदुच्यते। तद्यथेत्यादिना तमेव दर्शयति—मिथ्यात्ववेदनीयमित्यादि। तत्र दर्शनमोहनीयत्रैविध्ये सत्यपि बन्धो भवत्येकविध एव तत्त्वार्थाश्रद्धानलक्षणमिथ्यात्ववेदनीयस्य, न सम्यग्मोहनीयस्य, नापि सम्यग्मिथ्यात्वमोहनीयस्येति। यतो मिथ्यात्वपुद्गला एवैकरूपा बद्धाः सन्तः कर्ताऽऽत्मनोऽध्यवसायविशेषात् सर्वथा शोधिता मिथ्याभावपरिणामं त्याजिताः सम्यग्मिथ्यात्वपरिणतिं वा प्रापिताः सम्यक्त्व(सम्यग्मिथ्यात्व)व्यपदेशभाजो भवन्तीति ॥ न त्वेवंविधा एव बध्यन्ते, दरविशुद्धास्तु सम्यग्मिथ्यात्वव्यपदेशभाज इति। यथाऽऽह—

(मार्जिन: दर्शनमोहनीयस्य त्रैविध्येऽपि बन्धैकता)

"मिथ्यात्वस्य ह्युदये, जीवो विपरीतदर्शनो भवति।
न च तस्मै सद्धर्मः, स्वदते पित्तोदये घृतवत् ॥ १ ॥"

यथोक्तक्रमेण च मिथ्यात्वशुद्धौ ग्रन्थिभेदसमनन्तरं सम्यक्त्वावाप्तिः। ततश्च—

"सम्यक्त्वगुणेन ततो विशोधयति कर्म तच्च मिथ्यात्वम्।
यद्वच्छकृत्प्रभृतिभिः शोध्यन्ते कोद्रवा मदनाः ॥ १ ॥

१ 'किं पुनः सर्वं' इति ङ-पाठः।　२ 'एवमेतत् षोडशभेदं कषायवेदनीयं सूचितं' इति च-पाठः।
३ 'स्वादु च' इति ङ पाठः, 'स्वदते' इति च-पाठः। ४ 'छगणप्रमुखैः' इति ग-पाठः।

यत् सर्वथा तत्र विशुद्धं तद् भवति कर्म सम्यक्त्वम्।
मिश्रं तु दरविशुद्धं भवत्यशुद्धं च मिथ्यात्वम् ॥ २ ॥"

मदनकोद्रवास्तु त्र्यवस्था अविशुद्ध-विशुद्ध-दरविशुद्धा इति दृष्टान्तीकृताः। मिथ्यात्वसम्यक्त्वसम्यग्मिथ्यात्वेषु मिथ्यात्वोदयाच्च तत्त्वाश्रद्धा भवति, विपरीतदृष्टित्वात्। यथाऽऽह—

" ननु कोद्रवान् मदनकान् भुक्त्वा नात्मवशतां नरो याति।
शुद्धादी न च मुह्यति मिश्रगुणश्चापि मिश्राद्[2] वा ॥ १ ॥"

स हि मिथ्यात्ववान् गुणगुणिनोरैक्यात् तदुदयानुगुणपरिणामवर्तित्वात् पीतमद्यहृत्पूरभक्षणपित्तोदयाद् व्याकुलीकृतकरणपुरुषवद् यथाऽवस्थितार्थरुचिप्रतिघातकारिणा मिथ्यात्वेनान्यथैव प्रतिपद्यते। यथाऽऽह—

" [3]मिच्छत्ततिमिरपच्छाइयदिट्ठी रागदोससंजुत्ता।
धम्मं जिणपन्नत्तं भव्वावि नरा न रोयंति ॥ १ ॥
[4]मिच्छादिट्ठी जीवो उवइट्ठं पवयणं न सद्दहइ।
सद्दहइ असब्भावं उवइट्ठं वा अणुवइट्ठं ॥ २ ॥"

" [5]पयमक्खरं च इक्कंपि जो न रोएइ सुत्तनिद्दिट्ठं।
सेसं रोयंतोवि हु मिच्छादिट्ठी मुणेयव्वो ॥ १ ॥"

—सङ्ग्रहण्यां ( गा० १६७ )

सूत्रं तु प्रतिविशिष्टपुरुषप्रणीतमेव श्रद्धागोचर इति। यथोक्तम्—

" अर्हत्प्रोक्तं गणधरदृब्धं प्रत्येकबुद्धदृ[6]ब्धं वा।
स्थविरग्रथितं च तथा प्रमाणभूतं त्रिधा सूत्रम् ॥ १ ॥
श्रुतकेवली च तस्मादधिगतदशपूर्वकश्च तौ स्थविरौ।
आप्ताज्ञाकारित्वाच्च सूत्रमितरत्र स्थविरदृ[7]ब्धम् ॥ २ ॥"

अ[8]हवा—" तं मिच्छत्तं जमसद्दहणं तच्चाण जाण भावाणं।
संसइयमभिग्गहियं अणभिग्गहियं च तिविहं च ॥ १ ॥"

—नवपदशतके (?)

---

१ 'सर्वथाऽपि तत्र विशुद्धं तद्' इति ग-च-पाठः। २ 'मिश्रोऽपि' इति ग-पाठः, 'मिश्रादि' इति तु च-पाठः।

३ छाया—
मिथ्यात्वतिमिरप्रच्छादितदृष्टयो रागद्वेषसंयुक्ताः।
धर्मं जिनप्रज्ञप्तं भव्या अपि नरा न रोचन्ते ॥
मिथ्यादृष्टिर्जीव उपदिष्टं प्रवचनं न श्रद्दधाति।
श्रद्दधात्यसद्भावमुपदिष्टं वाऽनुपदिष्टम् ॥

४ 'मिच्छद्दिट्ठी नियमा' इति पाठान्तरं कर्मप्रकृतौ १६७ तमे पत्राङ्के।

५ छायार्थं दृश्यतां ९७ तमं पृष्ठम्। ६-७ 'दृष्टं' इति च-पाठः।

८ छाया—
अथवा—तन्मिथ्यात्वं यद् अश्रद्धानं तथ्यानां जानीहि भावानाम्।
सांशयिकमाभिग्रहिकमनाभिग्रहिकं च त्रिविधं च ॥

सम्प्रति सम्यक्त्ववेदनीयं शुद्धपुद्गलप्रत्ययस्तत्त्वार्थश्रद्धानपरिणाम आत्मनः। स चौपशमिकादिभेदेन पञ्चधा प्राग् व्याख्यातः औपशमिक-सास्वादन-वेदक-क्षायोपशमिक-क्षायिकाख्यः। तत्रोपशान्ते दर्शनमोहसप्तके भवत्यौपशमिकं सदैव सम्यक्त्वमन्तर्मुहूर्तकालावच्छिन्नं, उपशमसम्यग्दर्शनकाले संयोजना उदयभावं षण्णामावलिकानामन्ते कस्यचिद् यान्ति। उपशमसम्यक्त्वं हि नित्यमेवोपहन्यतेऽनन्तानुबन्धिभिः। यथाऽऽह–

सम्यक्त्व-प्रकारप्रपञ्चः

"संयोजनोदयश्चेत् स्यादास्यचेतना(?) सम्यक्त्वम्।
तस्य तु विशुद्धयतस्तदभावात् सम्यक्त्वमनवद्यम्॥ १॥"

क्षायोपशमिकसम्यक्त्वपुद्गलचरमग्रासानुभवकाले वेदकसम्यक्त्वं, उदितमिथ्यात्वपुद्गलक्षये अनुदितमिथ्यात्वोपशमे च क्षायोपशमिकमुक्तं, क्षायिकं तु निरवशेषदर्शनमोहक्षये भवति सम्यक्त्वम्। न च विशुद्धपुद्गलक्षये तत्त्वार्थश्रद्धानलक्षणस्य परिणामस्याभावः। यथाऽऽह—

"प्रक्षीणे तर्हि सम्यक्त्वे, सम्यग्दृष्टिः कथं मता?।
क्षयो द्रव्यस्य तत्रेष्टः, परिणामस्य न क्षयः॥ १॥"

सम्यग्मिथ्यात्ववेदनीयमधुनोच्यते। प्रथमतः सम्यक्त्वमुत्पादयन्[2] करणत्रयं विधायोपशमसम्यक्त्वं प्रतिपद्यते। ततो मिथ्यात्वदलिकं त्रिपुञ्जीत्वेन परिणमयति शुद्धमिश्राशुद्धत्वेन। यथाऽऽह—

"सम्यक्त्वगुणेन ततो विशोधयति कर्म तच्च मिथ्यात्वम्।
यद्वच्छकृत्प्रभृतिभिः शोध्यन्ते कोद्रवा मदनाः॥ १॥"

सम्यग्मिथ्यात्वं च तद्वेदनीयं चेति, एवं पूर्वयोरपि द्रष्टव्यम्। इतिशब्दो दर्शनमोहनीयेयत्ताप्रतिपत्तये।

दर्शनमोहनीयप्रकृतिबन्धमाख्याय सम्प्रति चारित्रमोहप्रकृतिबन्धाचिख्यासया जगाद—

भा०—चारित्रमोहनीयाख्यो द्विविधः। कषायवेदनीयं[3] नोकषायवेदनीयं चेति।

टी०—चारित्रमोहनीयाख्यो द्विविध इत्यादि। द्विविकल्पश्चारित्रमोहप्रकृतिबन्धः। कषायवेदनीयं[4] नोकषायवेदनीयं चेति॥ एतावद्भेदं मूलतश्चारित्रमोहनीयम्। यथाक्रमं तत्स्वरूपाख्यानायाह—

१ 'जनोदयाश्रूतस्यावस्योद्यतना०' इति छ–पाठ.। २ 'मुच्चारयन्' इति ग–पाठः। ३–४ 'दनीयो नोकषायवेदनीयश्चेति' इति ग–पाठः।

भा०—तत्र कषायवेदनीयाख्यः षोडशभेदः । तद्यथा–अनन्तानुबन्धी क्रोधो मानो माया लोभः, एवमप्रत्याख्यानकषायः प्रत्याख्यानकषायः संज्वलनकषाय इत्येकशः क्रोधमानमायालोभाः षोडश भेदाः ॥

टी०—तत्रेत्यादि । तयोश्चारित्रमोहभेदयोः कषायवेदनीयाख्यस्तावदयं षोडशभेदः । तद्यथेत्यनेन भेदानावेदयते–अनन्तानुबन्धी क्रोध इत्यादि । अनन्तः संसारो नारक-तिर्यङ्-मनुज-देवजन्मजरामरणपरम्परालक्षणः तदनुबन्धादनन्तानुबन्धिनः संयोजनाश्च क्रोध-मान-माया-लोभाः । तत्र क्रोधोऽप्रीतिलक्षणः । मानो गर्वः । माया शाठ्यम् । लोभो गार्ध्यं तृष्णेत्यनर्थान्तरम् । आह च—

" संयोजयन्ति यन्नरमनन्तसङ्ख्यैर्भवैः कषायास्ते ।
संयोजनतानन्ताऽनुबन्धिता वाऽप्यतस्तेषाम् ॥ १ ॥

अनन्तानुबन्धिनां च तावत् पर्वतराजिशैलस्तम्भघनवंशमूलकृमिलाक्षारागोदाहरणानि, एवमप्रत्याख्यानावरणकषायश्चतुर्धा क्रोधादिभेदेनेत्यतिदिश्यते । प्रत्याख्यानं द्विविधं–देशविरतिलक्षणं सर्वविरतिलक्षणं च । तत्र देशविरतिलक्षणमल्पं तदावरणं कषायोऽप्रत्याख्यानावरणकषायः, सामर्थ्यात् अपिशब्दः समुच्चयार्थो लभ्यते । ये स्वल्पमावृण्वन्ति प्रत्याख्यानं ते सर्वविरतिलक्षणमावृण्वन्त्येवेति नास्ति चित्रम् । कषाय इति जातिविवक्षायामेकवचननिर्देशः । आह च—

" आवृण्वन्ति प्रत्याख्यानं स्वल्पमपि येन जीवस्य ।
तेनाप्रत्याख्यानावरणास्ते निर्विशेषोक्त्या ॥ १ ॥"

नञ् हि सोऽल्पार्थः, उपमार्थो वा नञ्, प्रत्याख्यानावरणवदप्रत्याख्यानावरणः । यथोक्तम्—

" प्रत्याख्यानावरणसंदृक्त्वाद् वा तत् तथा भवति सिद्धम् ।
तन्वब्राह्मणवचने तत्सदृशः पुरुष एवेष्टः ॥ १ ॥ "

एषामुदये सम्यक्त्वलाभः सर्वदेशविरतिलक्षणं प्रत्याख्यानं नास्ति । प्रत्याख्यानावरणकषाय इति तथैवातिदेशः । प्रत्याख्यानशब्देनात्र सर्वविरतिपरिग्रहः तदावरणः। प्रतिशब्दः प्रतिषेधवचनः। प्रतिषेधस्याख्यानं प्रकाशनमाचार्यादिसन्निधौ भावतः 'सर्वान् प्राणिनो न हन्मि यावज्जीवं' इत्यादि प्रत्याख्यानं, तदेवंप्रकारं स्थगयन्तीति प्रत्याख्यानावरणाः । यथाऽऽह—

" सर्वप्रत्याख्यानं येनावृण्वन्ति तदभिलषतोऽपि ।
तेन प्रत्याख्यानावरणास्ते निर्विशेषोक्त्या ॥ १ ॥ "

१ 'कषायप्रत्याख्यानकषायसंज्वलनकषायवेदनीयं चेति कषायवेदनीयाख्यः षोडशभेदः' इति क-ग-पाठः । २ अनेन सम्भाव्यते यदुतासीत् कश्चित् कर्मविषयकग्रन्थो योऽधुना नोपलभ्यते । ३ 'सम्यक्त्वाद् वा' इति ग-पाठश्चिन्तनीयः । ४ 'तत्समाह्वयवचने' इति च-पाठः ।

प्रत्याख्यानपरिणामजन्मविघातकारित्वात् प्रत्याख्यानावरणाः, न तु सत एव प्रत्याख्यानस्येति वाक्यार्थः । तथाचाहुः पूज्याः ( श्रीजिनभद्रगणिक्षमाश्रमणाः )—

"[1]णासंतस्सावरणं ण सओऽमव्वाइविरमणपसंगा ।
पच्चक्खाणावरणा तम्हा तस्संभवावरणा ॥ १ ॥
उदए विरइपरिणई न होइ जेसिं खयाइओ होइ ।
पच्चक्खाणावरणा त इह जहा केवलावरणं ॥ २ ॥"
—विशेषावश्यके ( गा० १२३६–१२३७ )

तदुदयवर्तिनश्च द्वादशविधगृहधर्मावाप्तिः । यथाऽऽह—

" श्रावकधर्मो द्वादशभेदः संजायते ततस्तस्य ।
पञ्चत्रिचतुःसंख्यानतगुणशिक्षामयः शुद्धः ॥ १ ॥"

संज्वलनकषायस्वरूपोपपादनायाह–संज्वलनकषाय इति । समस्तपापस्थानविरतिभाजमपि यतिं दुःसहपरिषहसंपाते युगपत् संज्वलयन्तीति संज्वलनाः । यथाऽऽह—

" संज्वलयन्ति यतिं यत् संविग्नं सर्वपापविरतमपि ।
तस्मात् संज्वलना इत्यप्रशमकरा निरुच्यन्ते ॥ १ ॥"

इतिशब्दः कषायवेदनीयस्येयत्तामाह । एकश इति । एकैकस्य अप्रत्याख्यान-प्रत्याख्यानावरण-संज्वलनकषायस्य क्रोधादयो भेदाश्चत्वार इति । तत्राप्रत्याख्यानक्रोधाद्युदाहरणानि भूराज्यस्थिमेषशृङ्गकर्दमरागाः प्रत्याख्यानावरणक्रोधादेः रेणुराजिकाष्ठगोमूत्रमार्गखञ्जनरागाः संज्वलनक्रोधादेर्जलराजि[2]तिनिशलतावलेहहरिद्रारागाः । एवमेते षोडशभेदाः कषायवेदनीयस्येति ॥ प्रस्तावप्राप्तं नोकषायवेदनीयमुच्यते—

**भा०—नोकषायवेदनीयं नवभेदम् । तद्यथा–हास्यं, रतिः, अरतिः, शोकः, भयं, जुगुप्सा, पुरुषवेदः, स्त्रीवेदः, नपुंसकवेद इति नोकषायवेदनीयं नवप्रकारम् ॥**

टी०—नोकषायवेदनीयं नवभेदमिति । कषायैकदेशत्वात् कषायविशेषत्वाद् वा नोकषाया हास्यादयः । मिश्रार्थो वा नोशब्दः । कषायसहकृता एते स्वकार्यनिर्वर्तनप्रत्यलाः, न ह्यमीषां पृथक् सामर्थ्यमस्ति । यद्दोषश्च यः कषायस्तत्सहचारिण एतेऽपि तत्तद्दोषा एव भवन्ति । एतदुक्तं भवति–अनन्तानुबन्ध्यादिसहचरितास्तत्स्वभावका एव जायन्ते, तस्मादेतेऽपि चरणोपघातकारित्वात् तत्तुल्यतयैव ग्राह्याः । तथाऽन्येनाप्यवाचि—

" कषायसहवर्तित्वात्, कषायप्रेरणादपि ।
हास्यादिनवकस्योक्ता, नोकषायकषायता ॥ १ ॥"

---

१ छाया—

नासत आवरणं न सतोऽभव्यादिविरमणप्रसङ्गात् ।
प्रत्याख्यानावरणाः ततस्तत्सम्भवावरणाः ॥
उदये विरतिपरिणतिः न भवति येषां क्षयादितो भवति ।
प्रत्याख्यानावरणास्त इह यथा केवलावरणम् ॥

२ 'तृणशलाकाव' इति ग-पाठः ।

तद्यथेत्यनेन तत्रापि नोकषायान् स्वरूपेणाख्यातुमुपक्रमते—तत्र हास्यनोकषायमोहोदयात् सनिमित्तमनिमित्तं वा हसति स्मयते रङ्गावतीर्णनटवत्। रतिमोहोदयाद् बाह्याभ्यन्तरेषु वस्तुषु प्रीतिः आसक्तिः। इष्टेषु च शब्दादिविषयेषु। अरतिमोहोदयादेतेष्वेवाप्रीतिररतिः। शोकमोहोदयात् परिदेवते हन्ति च स्वमस्तकाद्यवयवान् निःश्वसिति रोदिति स्तनति लोठति भुवः पीठ इत्यादि। भयमोहोदयात् त्रस्यत्युद्विजते वेपत इत्यादि। जुगुप्सामोहनीयोदयात् शुभाशुभद्रव्यविषयं व्यलीकमुपजायत इत्यादि। पुरुषवेदमोहोदयात् अनेकाकारासु स्त्रीष्वभिलाषः आम्रफलाभिलाष इवोद्रिक्तश्लेष्मणः, तथा सङ्कल्पजास्वपीत्यादि। स्त्रीवेदमोहोदयात् नानाकारेषु पुरुषेष्वभिलाषः, सङ्कल्पजेषु चेत्यादि। नपुंसकवेदमोहो बहुरूपः, तदुदयात् कस्यचित् स्त्रीपुरुषद्वयविषयोऽप्यभिलाषः किल प्रादुर्भवति, धातुद्वयोदये मार्जितादिद्रव्याभिलाषवत्, कस्यचित् पुरुषेष्वेवाभिलाषः, सङ्कल्पजविषये चानेकरूप इत्यादि। इतिकरणो नोकषायेयत्ताप्रदर्शनार्थः। उक्तमेवमेतन्नोकषायवेदनीयं नवप्रकारम्। एषां पुरुषादिवेदानां त्रयाणामपि तीव्रादिपरिणामसंसिद्ध्यर्थं दृष्टान्तानाविश्चिकीर्षुराह—

भा०—तत्र पुरुषवेदादीनां तृणकाष्ठकरीषाग्नयो निदर्शनानि भवन्तीति। एवं मोहनीयमष्टाविंशतिभेदं भवति ॥

टी०—पुरुषवेदादीनामिति क्रमनियममाचष्टे। तृणादयः कृतद्वन्द्वाः प्रत्येकमग्निशब्देन सहाभिसम्बध्यन्ते। निदर्शनानि निदर्श्यन्त इति दृष्टान्ता भवन्ति। एतानि च कृतसन्निवेशक्रमात्। इतिशब्दोऽन्यानेकनिदर्शनप्रतिपत्त्यर्थः। तत्र पुरुषवेदमोहाग्नेर्भृशं ज्वलतः समासादितप्रतिक्रियस्याश्वेव प्रशमो जायते, समासादिततृणपुलकस्येव नातीव स्थास्नुरनुबन्धः। स्त्रीवेदजातवेदसस्तु बहुतरकालावस्थायिनः सम्भाषणस्पर्शनेन्धनाभिवर्धितस्य चिराय प्रशमो जायते, दृढतरखादिरादिकाष्ठप्रवृद्धज्वालाकलापज्वलनस्येव। नपुंसकवेदमहामोहसप्तार्चिषस्तु समासादितोदयस्य महानगरस्य दाहदहनतुल्यस्य करीषकृशानोरिवान्तर्विजृम्भमाणदीप्तवरकणनिकरस्य बहुतरकालेऽस्य प्रशमो भवति। सम्प्रत्युपसंहरति—एवमित्यादि। उक्तेन प्रकारेण द्वित्रिषोडशनवभेदलक्षणेनाष्टाविंशतिभेदलक्षणेनाष्टाविंशतिभेदं मोहनीयमुक्तम् ॥

सम्प्रत्यनन्तानुबन्ध्यादिकषायाणामुदयेऽयमात्मा सम्यक्त्वादिसामायिकानां कं किं लभते किं वा न लभत इति प्रतिपादयिषुराह—

अनन्तानुबन्ध्यादिकषायाणामुदये सम्यग्दर्शनादीनामुपघातः

भा०—अनन्तानुबन्धी सम्यग्दर्शनोपघाती। तस्योदयात् सम्यग्दर्शनं नोत्पद्यते, पूर्वोत्पन्नमपि च प्रतिपतति। अप्रत्याख्यानकषायोदयाद् विरतिर्न भवति। प्रत्याख्यानावरणकषायोदयाद् विरताविरतिर्भवति, उत्तमचारित्रलाभस्तु न भवति। संज्वलनकषायोदयाद् यथाख्यातचारित्रलाभो न भवति ॥

१ 'कारीष' इति च-पाठः। २ 'साम्प्रतम्' इति ङ-पाठः। ३ 'दयाद्धि' इति ख-पाठः।

टी०—अनन्तानुवन्धीत्यादि। अनन्तानुबन्धिकषायोदयः सम्यग्दर्शनमुपहन्ति, तद्विधपरिणामोत्पादमेव निरुणद्धीत्यर्थः। एतदेव स्पष्टयति–तस्योदयाद्धि सम्यग्दर्शनं नोत्पद्यते प्रागवाप्तमपि प्रतिपततीति। अप्रत्याख्यानेत्यादि। सर्वदेशलक्षणाया विरतेरभावः। प्रत्याख्यानेत्यादि देशविरतिर्भवति। उत्तमचारित्रं सर्वस्मात् प्राणातिपाताद् विरमामीत्येवंरूपं तस्य लाभो न भवतीति। तुशब्दोऽवधारणार्थः। न जातुचिदेव भवतीति। संज्वलनेत्यादि। संज्वलनकषायोदये त्वकषायचारित्रलाभो नास्ति। पूर्वोद्दिष्टसामायिकेभ्योऽनन्तरमथाख्यातः क्रियाविशेषः। अथाख्यातचारित्रं साक्षादनन्तरकारणं मुक्तेरिति। यथाख्यातचारित्रं वा, येन वा प्रकारेण यथा भगवद्भिराख्यातमकषायं चारित्रं भवतीति। सर्वथा कषायाः संसारे हिण्डयन्ति जीवमिति काका प्रतिपादयति। यतस्तेषामुदये प्रतिविशिष्टज्ञानक्रियावाप्तिरेव न समस्तीति। उपशान्तक्षीणकषायस्य सतो हि यथाख्यातमिष्यते। तत्राप्युपशान्तकषायी कदाचित्पातेऽपि विशुद्धिस्थानात् कुतश्चिन्न शक्यते। क्षीणकषायस्य तु नास्ति प्रतिपातः। शास्त्रे पर्यायशब्दैरपि क्रोधादिकषायाणां व्यवहारोऽस्तीत्येतत् प्रदर्शनम्–

क्रोधस्य पर्यायाः तद्भावानुसारीणि निदर्शनानि च

भा०—क्रोधः कोपो रोषो द्वेषो भण्डनं भाम इत्यनर्थान्तरम्। तस्या(?)स्य क्रोधस्य तीव्र-मध्य-विमध्य-मन्दभावाश्रितानि निदर्शनानि भवन्ति।

टी०—क्रोध इत्यादि। क्रोधनं क्रोधोऽप्रीतिः। कोपनं कोपः पूर्वावस्थातोऽन्यथा परिणामः। रोषणं रोषः तत्परिणामेनारूषितत्वादात्मनः। द्वेषणं द्वेषः तत्परिणामस्य वचनद्वारेण प्रकाशनात् निर्देशनात्। भण्डनं कलहः। भाम इति क्रोधविशेष ईर्ष्यालक्षणः। एवमादयः शब्दाः क्रोधार्थप्रतिपादकत्वादेकार्थाभिधायित्वादनर्थान्तरमेवेति॥

भा०—तद्यथा–पर्वतराजिसदृशो भूमिराजिसदृशो वालुकाराजिसदृश उदकराजिसदृश इति।

टी०—अधुनाऽनन्तानुबन्ध्यादिभेदस्यैकैकस्य क्रोधादेस्तीव्रादिभावदर्शनार्थं निदर्शनान्याह भाष्यकारः–तद्यथेत्यादिना। चतुर्णामपि क्रमेणानन्तानुबन्ध्य-अप्रत्याख्यान-प्रत्याख्यानावरण-संज्वलनानां क्रोध-मान-माया-लोभानामेकैकस्य चातुर्विध्यं दर्शयति–पर्वतराजिसदृश इत्यादि। पर्वतराज्या सदृशः। पर्वतः पाषाणपुञ्जस्तदेकदेशोऽप्युपचाराच्छिलादिविभागः पर्वतः, तत्र राजिः–भिदा पर्वतराजिः तया सदृशः पर्वतराजिसदृशः। शिलायां राजिरुत्पन्ना यावत् शिलारूपं तावदवतिष्ठते, न च तस्याः सन्धानमस्ति, एवमनन्तानुबन्धी क्रोध उत्पन्नो भवापेक्षया यावत् तत्र भवे जीवति तावदप्यनुवर्तते, न तस्यास्त्युपसंहरणोपायः, तदनु मरणाच्च भूयसा नरकमेति। अप्रत्याख्यानस्तु भूमिराजिसदृशः संवत्सरमात्रकालानुबन्धी। भूमौ हि

१ 'प्रागेतनमपि' इति ङ-पाठः। २ 'कषायत्रये' इति ङ-पाठः। ३ 'नास्तीत्यतः प्रदर्शनम्' इति च-पाठः। ४ 'पेक्षया तत्र' इति च-पाठः।

राजिरुद्भूता वर्षास्वचर्थतया सा निधनमायाति। क्रोधोऽप्येवमुत्पन्नो वर्षाभ्यन्तरे प्रशाम्यतीति॥ प्रत्याख्यानावरणस्तु वालुकाराजिसदृशः। वालुकायां हि राजिरुत्पन्ना प्रकर्षतश्चतुर्मासाभ्यन्तरे भूयः सन्धत्ते। क्रोधोऽप्येवं प्रत्याख्यानावरणश्चातुर्मासाभ्यन्तरे नियमेनोपशाम्यतीति॥ संज्वलनक्रोधाग्निः समुद्भूतः पाक्षिकप्रतिक्रमणकाले प्रकर्षतो विध्यायतीति[1] उदकराजिसदृश इति समाख्यायते। अस्य च उदकराजिसदृशात् पक्षमात्रकालसंसूचकं विज्ञेयम्।

भा०—तत्र पर्वतराजिसदृशो नाम। यथा प्रयोगविस्रसामिश्रकाणामन्यतमेन हेतुना पर्वते[3] राजिरुत्पन्ना नैव कदाचिदपि संरोहति, एवमिष्टवियोजनानिष्टयोजनाभिलषितालाभादीनामन्यतमेन हेतुना यस्योत्पन्नः क्रोधः आ मरणान्न व्यपगच्छति[4] जात्यन्तरानुबन्धी निरनुनयस्तीव्रानुशयोऽप्रत्यवमर्शश्च भवति स पर्वतराजिसदृशः। तादृशं क्रोधमनुमृता नरकेषूपपत्तिं प्राप्नुवन्ति॥

टी०—तत्र पर्वतराजिसदृशो नामेत्यादिना ग्रन्थेनोदाहरणानि भावयति। प्रयोगः[6] पुरुषव्यापारः। विस्रसा-स्वभावः। मिश्रकरणादुभयपरिग्रहः पुरुषव्यापारस्वभावाभ्यामिति। एषां त्रयाणामन्यतमेन हेतुनेति सम्बन्धः। सम्प्रति क्रोधोत्पत्तेर्निमित्तमाख्याति—इष्टार्थवियोजनादनिष्टार्थसंयोजनादभिलषितालाभादित्यादीनां कारणानामन्यतमेन हेतुना। यस्योत्पन्नः क्रोध इत्यादि। भवान्तरमप्यनुबध्नाति। निरनुनय इति। अनुनयः पश्चाद्[7] अनुकरणादिक्रिया तदभावान्निरनुनयः। अप्रत्यवमर्श इति। अविद्यमानपश्चात्तापपरिणामः। शेषं गतार्थम्।

भा०—भूमिराजिसदृशो नाम। यथा भूमेर्भास्कररश्मिजालादात्तस्नेहाया वाय्वभिहताया राजिरुत्पन्ना वर्षापेक्षसंरोहा परमप्रकृष्टाऽष्टमासस्थितिर्भवति, एवं यथोक्तनिमित्तो यस्य क्रोधोऽनेकवर्षस्थायी[8] दुरनुनयो भवति, स भूमिराजिसदृशः। तादृशं क्रोधमनुमृताः तिर्यग्योनावुपपत्तिं प्राप्नुवन्ति॥

टी०—भूमिराजिसदृशो नामेत्यादि अप्रत्याख्यानकषायानाश्रित्योच्यते, आत्तस्नेहाया इति गृहीतापीतस्नेहायाः, वायुना चाभ्याहताया इत्यनेककारणतां भूमिराजेरावेदयते। जघन्येनाष्टमासस्थितिरुत्कर्षेण वर्षस्थितिरिति। एवं यथोक्तेत्यादिना दृष्टान्तेन दार्ष्टान्तिकमर्थं समीकरोतीति। शेषं सुज्ञानम्॥

भा०—वालुकाराजिसदृशो नाम। यथा वालुकायां काष्ठ-शलाका-शर्करादीनामन्यतमेन हेतुना राजिरुत्पन्ना वाय्वीरणाद्यपेक्षसंरोहा अर्वाग् मासस्य सं-

१ 'विध्यायतीति' इति ग—च-पाठः। २ 'सादृश्यं इति ग-पाठः। ३ 'पर्वतराजि०' इति घ-पाठः। ४ 'व्ययं गच्छति' इति घ-पाठः। ५ 'सता' इति ग-पाठः। ६ 'प्रयोगः व्यापारः' इति च-पाठः। ७ 'पश्चाद्' इति ङ-पाठः। ८ 'विषस्थानीयो' इति घ-पाठः। ९ 'कं कारणं' इति ङ—च-पाठः।

रोहति, एवं यथोक्तनिमित्तो यस्य क्रोधोऽहोरात्रं पक्षं मासं चातुर्मास्यं संवत्सरं वाऽवतिष्ठते स वालुकाराजिसदृशो नाम[2]। तादृशं क्रोधमनुसृता मनुष्येषूपपत्तिं प्राप्नुवन्ति ॥

टी०—वालुकाराजिसदृशो नामेत्यादि सुज्ञानम्। जघन्येनाहोरात्रं उत्कर्षेण संवत्सरपरिणामोऽपीति। शेषं गतार्थम् ॥

भा०—उदकराजिसदृशो नाम। यथोदके दण्डशलाकाङ्गुल्यादीनामन्यतमेन हेतुना राजिरुत्पन्ना द्रवत्वादपामुत्पत्त्यनन्तरमेव संरोहति, एवं यथोक्तनिमित्तोत्पन्नो यस्य क्रोधो विदुषोऽप्रमत्तस्य प्रत्यवमर्शेनोत्पत्त्यनन्तरमेव व्यपगच्छति स उदकराजिसदृशः। तादृशं क्रोधमनुसृता देवेषूपपत्तिं प्राप्नुवन्ति ॥

टी०—उदकराजिसदृशो नामेत्यादि प्रायः सुज्ञानम्। विदुष इति क्रोधपरिणामाभिज्ञस्य। प्रत्यवमर्शः—पश्चात्तापः हा दुष्कृतमित्यादिकः। शेषं सुज्ञानम् ॥

भा०—येषां त्वेष चतुर्विधोऽपि न भवति ते निर्वाणं प्राप्नुवन्तीति ॥

टी०—येषामित्यादि। अनन्तानुबन्ध्यादिचतुर्विधक्रोधक्षपणान्मुक्तिप्राप्तिरवश्यंभाविनीति।

सम्प्रति मानचातुर्विध्यप्रदर्शनायाह—

मानशब्दस्य पर्यायाः　भा०—मानः स्तम्भः गर्वः उत्सेकः अहङ्कारः दर्पः मदः स्मय इत्यनर्थान्तरम् ॥

टी०—मान इत्यादि। सर्वदाऽऽत्मपूजाकाङ्क्षित्वात् मानः। स्तम्भनात् स्तम्भः अवनतेरभावात्। गर्वो जात्यादिः। उत्सेको ज्ञानादिभिराधिक्येऽभिमान आत्मनः। अहङ्कारोऽहमेव रूपसौभाग्यसम्पन्न इति। दर्पो बलकृतः। मद्यादिमदवदनालापदर्शनात् मदः। परापराधसहनप्रायत्वात् स्मयः। सर्वे एते मानविशेषा इत्यतोऽनर्थान्तरमिति।

क्रोधस्येवास्यापि तीव्रादिभावप्रदर्शनायाह—

भा०—तस्यास्य मानस्य तीव्रादिभावाश्रितानि निदर्शनानि भवन्ति। तद्यथा—शैलस्तम्भसदृशः, अस्थिस्तम्भसदृशः, दारुस्तम्भसदृशः, तृणस्तम्भसदृश इति। एषामुपसंहारो निगमनं च क्रोधनिदर्शनैर्व्याख्यातम् ॥

टी०—तस्यास्येत्यादि। तस्येति पूर्वोद्दिष्टस्य। अस्येति पर्यायभेदेन निर्दिष्टस्य। आदिग्रहणात् मध्यो मन्दश्च भावः—आत्मनः परिणतिविशेषः। अनन्तानुबन्ध्यादिषु क्रमेण शैलस्तम्भसदृशेत्याद्युदाहरणानि योज्यानि। एषामित्यादिना निर्दिशति। उपसंहार उप-

१ 'क्रोधः' इत्यधिको घ-पाठः। २ 'निमित्तो यस्य' इति घ-पाठः। ३ 'मर्शिनो' इति घ-पाठः। ४ 'णामिज्ञस्य' इति ङ-पाठः। ५ 'हा दुकय' इति ङ-पाठः। ६ 'प्राप्नुवन्ति' इति घ-पाठः। ७ 'लतास्तम्भ' इति घ-पाठः।

नयः । यथा शैलस्तम्भस्तथाऽनन्तानुबन्धीत्यादिक्रमेण । तस्मात् कुतश्चिन्निमित्तादुत्पन्नो मानः आ मरणान्न व्यपगच्छति जात्यन्तरानुबन्धी निरनुनयोऽप्रत्यवमर्शश्च भवति स शैल-स्तम्भसदृशः । तादृशं मानमनुसृत्य नरकेपूत्पत्तिं प्राप्नुवन्तीति निगमनग्रन्थः । चशब्दः समुच्चितौ । एवमस्थिस्तम्भसदृश इत्यादिष्वपि यथायोगमुपनयनिगमने वक्तव्ये ॥

मायाशब्दस्य पर्यायाः

भा०—माया प्रणिधिः उपधिः निकृतिः आचरणं वञ्चना दम्भः कूटम् अतिसन्धानम् अनार्जवमित्यनर्थान्तरम् ॥

टी०—माया प्रणिधिरित्यादि । मीयतेऽनया जन्तोस्तिर्यग्योन्यादिजन्मेति माया । प्रणिधिः व्रतपरिणतावासक्तिः प्रणिधानं । बाह्यचेष्टयोपधीयते बाह्यत इत्युपधिरन्यथापरि-णामश्चित्तस्य । निक्रियतेऽनया परः परिभूयत इति निकृतिः । आचर्यते—अभिगम्यते भक्ष्यते वा परस्तयोपायभूतयेत्याचरणम् तथाच वृक-मार्जार-गृहकोलिकादयः प्रसिद्धाः । परो विप्र-लभ्यते यया सा वञ्चना । दम्भनं दम्भो वेषवचनाद्यनुमेयः । कूट्यते—दह्यते अमुना परः परि-माणान्तरेणेति कूटं, सत्त्वग्रहणं वा कूटं तद्वद् परिणामः । अतिसन्धीयतेऽनेन पर इति अति-सन्धानं अतीवानुप्रविश्य सन्धानमन्तरङ्गतामदर्शनं ततो विनाशः । ऋजोर्भावः आर्जवं तद्वि-परीतं अनार्जवम्—कायमनोवक्रता । इतिशब्द एवार्थे । एवमेतान्येकार्थाभिधायीनि नामानीति ॥

भा०—तस्या मायायास्तीव्रादिभावाश्रितानि निदर्शनानि भवन्ति । तद्यथा—वंशकुडङ्गसदृशी, मेषविषाणसदृशी, गोमूत्रिकासदृशी, निर्लेखनसदृ-शीति । अत्राप्युपसंहारनिगमने क्रोधनिदर्शनैर्व्याख्याते ॥

टी०—तस्या इत्यादि गतार्थम् । वंशकुडङ्गो—वंशमूलमतिकुटिलं ऋजुकर्तुमशक्यं उपायशतेनापि । शेषं गतार्थं प्रायः । निर्लेखनं वर्धक्यवलेखनीधारोल्लिखितमत्यन्तकुटिलम् । अत्रापीत्यादि गतार्थम् ॥

लोभशब्दस्य पर्यायाः

भा०—लोभो रागो गार्ध्यं इच्छा मूर्च्छा स्नेहः काङ्क्षाऽभिष्वङ्ग इत्यनर्थान्तरम् ॥

टी०—लोभो राग इत्यादि । लुभ्यतेऽनेन जीव इति लोभः । आत्मरञ्जनाद् रागः । प्राप्तेष्टवस्तुषु गार्ध्यं अभिरक्षणादि कार्यं गृद्धिलक्षणम् । इच्छाऽभिलाषस्त्रैलोक्य-विषयः । मूर्च्छा प्रकर्षप्राप्ता मोहवृद्धिः । स्निह्यत्यनेनेति स्नेहः पितृपुत्रपत्न्यादिषु प्रीतिवि-शेषः । भविष्यत्कालोपादानविषया काङ्क्षा । अभिष्वङ्गो बाह्याभ्यन्तरोपकरणविषयसुखे राग आसक्तिः । शेषं पूर्ववत् ॥

१ 'व्ययं गच्छति' इति च-पाठः । २ 'ऽपचितत्वेवाधीयत' इति ङ-पाठः । ३ 'गुहणमं (?) वा' इति च-पाठः । ४ 'कुणसदृशी' इति घ-पाठः । ५ 'शेषा गतार्थाः प्रायः' इति च-पाठः । ६ 'प्राप्तेषु' इति च-पाठः । ७ 'बाह्यसुखः सङ्गः सक्तिः' इति ग-च-पाठः ।

भा०—तस्यास्य लोभस्य तीव्रादिभावाश्रितानि निदर्शनानि भवन्ति। तद्यथा-लाक्षारागसदृशः, कर्दमरागसदृशः, खञ्जनरागसदृशः, हरिद्रारागसदृश इति। अत्राप्युपसंहारनिगमने क्रोधनिदर्शनैर्व्याख्याते ॥

टी०—लाक्षारागसदृश इत्यादि। अनन्तानुबन्ध्यादयः क्रमेण योज्याः। शेषं गतार्थम् ॥

भा०—एषां क्रोधादीनां चतुर्णां कषायाणां प्रत्यनीकभूताः प्रतिघातहेतवो भवन्ति। तद्यथा-क्षमा क्रोधस्य, मार्दवं मानस्य, आर्जवं मायायाः, सन्तोषो लोभस्येति ॥ १० ॥

क्रोधादीनां सचरणोपायाः

टी०—एषां क्रोधादीनामित्यादि। प्रकृतानुपयोगित्वादसम्बद्ध इवायं लक्ष्यते ग्रन्थः। मोहनीयोत्तरप्रकृतिस्वरूपाख्यानमारब्धं, तत्र क्रोधादिप्रत्यनीकाः क्षमादय इति कः प्रस्तावः? । उच्यते—मोहनीयप्रधानानि हि कर्माणि, सर्वदेशोपघातद्वारेण जन्तोर्नरकादिभवप्रपञ्चप्रापणे विजृम्भन्ते। [1]मोहस्तत्र तावत् कषायजनितः। कषायवशाद्धि बन्धस्थितिविशेषः सर्वदुःखावाप्तिश्च। यथोक्तम् ( उपदेशमालायाम् )—

"[2]जं अइदुक्खं लोए जं च सुहं उत्तमं तिहुयणंमि।
तं जाण कसायाणं वुड्ढिक्खयहेउयं सव्वं ॥ १ ॥"

अतस्तत्संवरणोपायभूताः क्षमादयो भाष्यकारेणोपन्यस्ताः सततमेतेऽभ्यसनीयाः कर्मणां लाघवमिच्छता मुमुक्षुणा। भाष्यं गतार्थप्रायम्। प्रत्यनीकाः शत्रव उच्यन्ते पुरुषाः। भूतशब्द उपमानार्थः। शत्रव इवोच्छेदनसाधर्म्यात्। एतदेव स्पष्टयति-प्रतिघातहेतवो भवन्तीति। अत्र च मिथ्यादर्शनमाद्यकषायाश्च द्वादश सर्वघातिन्यः प्रकृतयः सञ्ज्वलननोकषायास्तु देशघातिन्यः ॥ ननु च सूचनात् सूत्रमिति लघु विधेयं सूत्रम्। तच्चैवं भवति-दर्शनचारित्रमोहनीयकषायनोकषायवेदनीयाख्या द्वित्रिषोडशनवभेदा इत्येव विवक्षितार्थसंग्रहः स्यात्। तत्रेदमुक्तम्—

सूत्रलाघवपरामर्शः

"दुर्व्याख्यानो गरीयांश्च, मोहो भवति बन्धनः।
न तत्र लाघवादिष्टं, सूत्रकारेण दुर्वचम् ॥"

इति ॥ १० ॥

सम्प्रति क्रमप्राप्तस्यायुष्ककर्मणश्चत्वार्युत्तरप्रकृतिस्वरूपाण्यभिधित्सुराह—

सूत्रम्—नारक-तैर्यग्योन-मानुष-दैवानि ॥ ८–११ ॥

---

१ 'मोहतन्त्रता च कषायजनिता' इति च-पाठः।

२ छाया—

यद् अतिदुःखं लोके यच्च सुखमुत्तमं त्रिभुवनेऽपि।
तद्विद्धि कषायाणां वृद्धिक्षयहेतुकं सर्वम् ॥

टी०—नारकादीनि कृतद्वन्द्वानि प्रथमाबहुवचनेन निर्दिष्टानि । यस्योदयात् प्रायोग्य-[1] प्रकृतिविशेषानुशोयीभूत आत्मा नारकादिभावेन जीवति यस्य च क्षयान्मृत उच्यते तदायुः । आह च—

" स्वानुरूपास्रवोपात्तं, पौद्गलं द्रव्यमात्मनः ।
जीवनं यत् तदायुष्क-मुत्पादादेस्य जीवति ॥ १ ॥

आयुषश्चान्नादय उपग्राहकाः प्रथमबद्धस्येति । तस्यैवम्भूतस्य कर्मण उत्तरप्रकृतिचतुष्टयं वर्ण्यते—

भा०—आयुष्कं चतुर्भेदम्-नारकं, तैर्यग्योनं, मानुषं, दैवमिति ॥ ११ ॥

टी०—आयुष्कं चतुर्भेदमित्यादि भाष्यम् । आनीयन्ते शेषप्रकृतयस्तस्मिन्नुप-भोगाय जीवेनेत्यायुः, शाल्योदनादिव्यञ्जनविकल्पा एव कांस्यपात्राधार-भोक्तुः परिभोगाय कल्प्यन्ते, आनीयते वाऽनेन तद्भवान्तर्भावी प्रकृतिगण इत्यायुः रज्जुबद्धेक्षुयष्टिभारकवत्, आयतते वा शरीरधारणं प्रति बन्ध इत्यायुर्निगडादिवत् । आयुरेवायुष्कम्, चतुर्गतिकत्वात् संसारस्य चतुर्भेदम् । तद्भेददर्श-नार्थमाह—नारकमित्यादि । तत्र नरका उत्पत्तियातनास्थानानि पृथिवीपरिणतिविशेषास्त-त्सम्बन्धिनः सत्त्वा अपि तात्स्थ्यान्नरकास्तेषामिदमायुर्नारकम् । तिर्यग्योनय एक-द्वि-त्रि-चतुः-पञ्चेन्द्रियास्तेषामिदं तैर्यग्योनम् । मनुष्याः संमूर्च्छन-गर्भजास्तेषामिदं मानुषम् । देवानां भवनवास्यादिभेदानामिदं दैवम् । इतिशब्दः आयुःप्रकृतीयत्ताप्रतिपत्तये ॥ ११ ॥

आयुषो व्युत्पत्त्यर्थः

सम्प्रति नामकर्मोत्तरप्रकृतिभेदाख्यानायाह—

सूत्रम्—गतिजातिशरीराङ्गोपाङ्गनिर्माणबन्धनसंङ्घातसंस्थानसं-हननस्पर्शरसगन्धवर्णानुपूर्व्यगुरुलघूपघातपराघातातपोद्यो-तोच्छ्वासविहायोगतयः प्रत्येकशरीरत्रससुभगसुस्वरशुभसू-क्ष्मपर्याप्तस्थिरादेययशांसि सेतराणि तीर्थकृत्त्वं च ॥ ८-१२ ॥

नामकर्मणः ६७ उत्तरप्रकृतयः

टी०—गतिजातीत्यादिप्रागुद्दिष्टा द्वाचत्वारिंशत् पिण्डभेदा नामकर्मणस्तत्प्रतिपाद-नार्थं सूत्रम् । नमयति-प्रापयति नारकादिभावान्तराणि जीवमिति नाम । अथवा जीवप्रदेशसम्बन्धिपुद्गलद्रव्यविपाकसामर्थ्याद् यथार्थसंज्ञा । नमयति-प्रह्वयतीति नाम यथा शुक्लादिगुणोपेतद्रव्येषु चित्रपटादिव्यप-देशप्रवृत्तिर्नियतसंज्ञाहेतुरिति । तत्र गतिनाम चतुर्विधम् । जातिनाम पञ्चविधम् । शरीरनाम

नामशब्दस्य व्युत्पत्त्यर्थः

१ ' सहायीभूत ' इति च-पाठः । २ ' यस्य ' इति ङ-च-पाठः । ३ ' बद्ध ' इति ङ-पाठः । ४ ' सङ्घातन...स्पर्शनरस' इति ग-पाठः । ५ ' प्रज्वलयति ' इति ङ-पाठः । ६ 'पञ्चविधं ' इति ङ-पाठः ।

पञ्चविधम् । अङ्गोपाङ्गनाम त्रिविधम् । निर्माणनामैकधा । संस्थाननाम षोढा । सङ्घातनाम पञ्चविधम् । बन्धननाम पञ्चविधं पञ्चदशविधं वा । संहनननाम षोढा । स्पर्शरसगन्धवर्णनामैकैकविधम् । आनुपूर्वीनाम चतुर्धा । अगुरुलघुनामैकधा । उपघातपराघातातपोद्योतोच्छ्वासनामान्येकैकविधानि । विहायोगतिनाम द्विधा । प्रत्येकशरीरसाधारणशरीरत्रसस्थावरसुभगदुर्भगसुस्वरदुःस्वरशुभाशुभसूक्ष्मबादरपर्याप्तापर्याप्तस्थिरास्थिरादेयानादेययशोऽयशस्तीर्थङ्करनामान्येकैकप्रकाराण्येव । एवमेता उत्तरप्रकृतयो नामकर्मणः सप्तषष्टिः । अत्र च बन्धनसङ्घातनामनी शरीरनामान्तर्भूते एव, अतः शरीरविषयत्वादेव नोत्तरप्रकृतिः । पृथक्सूत्रे यदुपादानं पार्थक्येन तत् तयोः स्वरूपप्ररूपणार्थमिति ॥

गत्यादिनामकर्मणामवान्तरभेदसङ्ख्या

**भा०—गतिनाम जातिनाम शरीरनाम अङ्गोपाङ्गनाम निर्माणनाम बन्धननाम सङ्घातनाम संस्थाननाम संहनननाम स्पर्शनाम रसनाम गन्धनाम वर्णनाम आनुपूर्वीनाम अगुरुलघुनाम उपघातनाम पराघातनाम आतपनाम उद्योतनाम उच्छ्वासनाम विहायोगतिनाम । प्रत्येकशरीरादीनां सेतराणां नामानि । तद्यथा—प्रत्येकशरीरनाम साधारणशरीरनाम त्रसनाम स्थावरनाम सुभगनाम दुर्भगनाम सुस्वरनाम दुःस्वरनाम शुभनाम अशुभनाम सूक्ष्मनाम बादरनाम पर्याप्तनाम अपर्याप्तनाम स्थिरनाम अस्थिरनाम आदेयनाम अनादेयनाम यशोनाम अयशोनाम तीर्थकरनाम इत्येतद् द्विचत्वारिंशद्विधं मूलभेदतो नामकर्म भवति । उत्तरनामानेकविधम् ॥**

टी०—गतिनामेत्यादि भाष्यम् । तत्र गतिनामेत्येवमादिना भाष्येण इत्येतद् द्विचत्वारिंशद्विधं मूलभेदतो नामकर्म भवतीत्येवमन्तेन पिण्डप्रकृतिमात्रमाख्यायते । गतिनाम । नामशब्दः सर्वत्र जातिनामादिष्वपि समानाधिकरणः । आनुपूर्व्यनाम, अन्ये पठन्त्यानुपूर्वीनाम, ततश्च प्रथमपाठे सूत्रमेवम्—आनुपूर्व्यागुरुलघूपघात इति, इतरत्र आनुपूर्व्यगुरुलघूपघात इति । प्रत्येकशरीरादीनां दशानां सेतराणामिति—सप्रतिपक्षाणां साधारणशरीरादीनां दशानां नामानि—अभिधानानि वक्ष्यमाणानि विज्ञेयानि । अथवा प्रत्येकशरीरादीनां पूर्वपदानां सामानाधिकरण्यविवक्षायां नामानीति व्यक्तिविवक्षातो नामशब्द उत्तरपदं भवतीति । तद्यथेत्यादिनोद्देशः सामानाधिकरण्येन, प्रत्येकशरीरनामादिकं अन्ते तीर्थकरनाम प्रकृष्टत्वात् । इतिशब्दः पिण्डप्रकृतीयत्ताप्रदर्शनार्थः । एतदिति नाम यथोक्तं द्विचत्वारिंशद्भेदं भवति सह बन्धनसङ्घातनामभ्याम् । आसां पिण्डप्रकृतीनां सम्प्रति भेदप्रतिपत्तये बभाषे—उत्तरनामानेकविधमिति । उत्तरप्रकृतिनामेत्यर्थः । पिण्डप्रकृतिभेद इतियावत् । तद्यथेत्यादिना निर्दिशति—

सूत्रपाठभेदः

१ 'सङ्घात० पञ्चदशविधं वा' इति पाठो न विद्यते च-प्रतौ । २ 'मेतेन' इति च-पाठः । ३ 'पृथगपाठि' इति ग-पाठः ।

भा०—तद्यथा–गतिनाम चतुर्विधम्–नरकगतिनाम, तिर्यग्योनिगतिनाम, मनुष्यगतिनाम, देवगतिनाम ॥

टी०—गतिनाम्नः पिण्डप्रकृतेश्चत्वारो भेदाः नरकगतिनामादयः। तत्र यस्य कर्मण उदयान्नारक इति व्यपदिश्यते तन्नरकगतिनाम। एवं तिर्यग्गतिनामादित्रितयमपि वक्तव्यम् ॥

भा०—जातिनाम्नो मूलभेदाः पञ्च। तद्यथा–एकेन्द्रियजातिनाम, द्वीन्द्रियजातिनाम, त्रीन्द्रियजातिनाम, चतुरिन्द्रियजातिनाम, पञ्चेन्द्रियजातिनाम ॥

टी०—जातिनाम्न इत्यादि। जातिनामेति पिण्डप्रकृतिरेकेन्द्रियादिना जातिपञ्चकापेक्षया। एते च मूलभेदाः पञ्च। तद्यथेत्यादिना निर्दिशति, एकेन्द्रियजातिनामेत्यादि। एकं–प्रथममिन्द्रियं जातिः–सामान्यं तदेव नाम, एवं द्वीन्द्रियजातिनामादि चतुष्टयमपि वाच्यम्। एकेन्द्रियजातिनामकर्मोदयादेकेन्द्रिय इति व्यपदिश्यते। एकेन्द्रियसंज्ञाव्यपदेशनिमित्तं एकेन्द्रियजातिनाम, जातिरिति सामान्येन पृथिव्यादिभेदेष्वन्वितत्वात्, एकेन्द्रियजातिनामान्तरेणैकेन्द्रियसंज्ञाया अभाव एव स्यात् ॥

भा०—एकेन्द्रियजातिनामानेकविधम्। तद्यथा—पृथिवीकायिकजातिनाम, अप्कायिकजातिनाम, तेजःकायिकजातिनाम, वायुकायिकजातिनाम, वनस्पतिकायिकजातिनामेति ॥

टी०—एकेन्द्रियजातिनामानेकविधमित्यादि। एकेन्द्रियजातयोऽपि पिण्डप्रकृतय एव पृथिवीकायिकादिभेदापेक्षया। तद्यथेत्यादिना निर्दिशति, पृथिवीकायिकजातिनाम पृथिव्येव कायः पृथिवीकायः स एषामस्ति ते पृथिवीकायिकाः तेषां जातिः तदेव नाम पृथिवीकायिकजातिनाम। पृथिवीकायिकजातिनामोदयात् पृथिवीकायिकव्यपदेशः। एवं शेषाणि ॥

भा०—तत्र पृथिवीकायिकजातिनामानेकविधम्। तद्यथा—शुद्धपृथिवीशर्करा-वालुको-पल-शिला-लवणा-ऽय-स्त्रपु-ताम्र-सीसक-रूप्य-सुवर्ण-वज्र-हरिताल-हिङ्गुलक-मनःशिला-सस्यका-ञ्जन-प्रवालका-ऽभ्रपटला-ऽभ्रवालिकाजातिनामादि गोमेदक-रुचकाङ्क-स्फटिक-लोहिताक्ष-जलावभास-वैडूर्य-चन्द्रप्रभ-चन्द्रकान्त-सूर्यकान्त-जलकान्त-मसारगल्वा-श्मगर्भ-सौगन्धिक-पुलका-ऽरिष्ट-काञ्चन-मणिजातिनामादि च ॥

टी०—तत्र पृथिवीकायिकेत्यादि। अनेन पुनरपि पृथिवीकायिकजातिनाम्नः पिण्डप्रकृतित्वं दर्शयति। तद्यथेत्यादिना शुद्धपृथिव्यादयो भेदाः प्राग् व्याख्याता नानापुद्गलपरिणामाः पृथिवीकायिकव्यपदेशभाज इति ॥

---

१ 'नामेति' इति घ–पाठः। २ 'सामान्यं पृथि०' इति ग–च–पाठः। ३ 'टलाभ्र' इति घ–पाठः। ४ 'नामानि' इति ग–पाठः। ५ 'स्फुटिक' इति घ–पाठः। ६ 'गल्लास्म' इति घ–पाठः।

भा०—अप्कायिकजातिनामानेकविधम् । तद्यथा—उपक्लेदा-ऽवश्याय-नीहार-हिम-घनोदक-शुद्धोदकजातिनामादि ॥

टी०—अप्कायिकजातिनामानेकविधमित्यादि । तद्यथेत्यादिना निर्दिशति । उपक्लेदो हेरतनुकः भूमेर्निर्गत्य तृणाग्रस्थितः । शेषा गतार्थो भेदाः ॥

भा०—तेजःकायिकजातिनामानेकविधम् । तद्यथा—अङ्गार-ज्वाला-लाता-र्चि-र्मुर्मुर-शुद्धाग्निजातिनामादि ॥

वायुकायिकजातिनामानेकविधम् । तद्यथा—उत्कलिका-मण्डलिका-झञ्झका-घन-संवर्तकजातिनामादि ॥

वनस्पतिकायिकजातिनामानेकविधम् । तद्यथा—कन्द-मूल-स्कन्ध-त्वक्-काष्ठ-पत्र-प्रवाल-पुष्प-फल-गुल्म-गुच्छ-लता-वल्ली-तृण-पर्व-काय-शेवाल-पनक-वलक-कुहनजातिनामादि ।

एवं द्वीन्द्रियजातिनामैकविधम् । एवं त्रीन्द्रिय-चतुरिन्द्रिय-पञ्चेन्द्रिय-जातिनामान्यपि ॥

टी०—तेजःकायिकेत्यादि गतार्थम् । द्वि-त्रि चतुः-पञ्चेन्द्रियजातिनामानि शङ्ख-शुक्तिकाद्युपदेहिकापिपीलिकादिभ्रमरसरघादितिर्यग्मनुष्यादिभेदेन वाच्यानि ॥

शरीरनामोत्तरप्रकृतयः पञ्च । तत्प्रतिपादनायाह—

भा०—शरीरनाम पञ्चविधम् । तद्यथा—औदारिकशरीरनाम, वैक्रियशरीरनाम, आहारकशरीरनाम, तैजसशरीरनाम, कार्मणशरीरनामेति ।

टी०—शरीरनामेत्यादि । असारस्थूलद्रव्यवर्गणानिर्मापितमौदारिकशरीरं, तत्प्रायोग्यपुद्गलग्रहणकारणं यत् कर्म तदौदारिकशरीरनामोच्यते । विचित्रशक्तिकद्रव्यनिर्मापितं वैक्रियं, तद्योग्यपुद्गलादानकारणं यत् कर्म तद् वैक्रियशरीरनामाभिधीयते । कारणे कार्योपचारात् प्रयोजनप्रसाधनायाहियत इत्याहारकशरीरम् । शेषं पूर्ववत् । तेजोगुणद्रव्यारब्धमुष्णगुणमाहारपरिपाचनक्षमं तैजसं शरीरम् । शेषं पूर्ववत् । कुण्डमिव बदरादीनामशेषकर्माधारभूतं समस्तकर्मप्रसवनसमर्थमङ्कुरादीनां बीजमिव कार्मणशरीरम् । इयं चोत्तरप्रकृतिः शरीरनामकर्मणः पृथगेव कर्माष्टकाणामुदयभूतादिति ॥

भा०—अङ्गोपाङ्गनाम त्रिविधम् । तद्यथा—औदारिकाङ्गोपाङ्गनाम, वैक्रियशरीराङ्गोपाङ्गनाम आहारकशरीराङ्गोपाङ्गनाम । पुनरेकैकमनेकविधम् । तद्यथा—

अङ्गाष्टकम् — अङ्गनाम तावत् शिरोनाम, उरोनाम, पृष्ठनाम, बाहुनाम, उदरनाम, पादनाम । उपाङ्गनामानेकविधम् । तद्यथा—स्पर्शनाम, रसनाम, घ्राणनाम, चक्षुर्नाम, श्रोत्रनाम ॥

---

१ 'हरितनु०' इति ङ-पाठः । २ 'थन' इति घ-पाठः । ३ 'कारणं' इति च-पाठः । ४ 'क्रमं' इति च-पाठः ।

टी०—अङ्गोपाङ्गेत्यादि । अङ्गान्युपाङ्गानि च यस्य कर्मण उदयान्निर्वर्त्यन्ते तदङ्गोपाङ्गनाम त्रिविधम्–औदारिक-वैक्रियका-ऽऽहारकभेदात् । तत्राङ्गान्यष्टौ–उरः शिरः पृष्ठमुदरं करौ पादौ च । उपाङ्गानि स्पर्शनमस्तिष्कादीनि । अष्टानामङ्गानामेकैकस्योपाङ्गमनेकप्रकारम् । तत्र शिरोद्रव्यमधिकृत्योपाङ्गानि भाष्यकृत् पपाठ—

भा०—तथा मस्तिष्क–कपाल–कृकाटिका–शङ्ख–ललाट–तालु–कपोल–हनु–चिबुक–दशनौ–ष्ठ–भ्रू–नयन–कर्ण–नासाद्युपाङ्गनामानि शिरसः । एवं सर्वेषामङ्गानामुपाङ्गानां नामानि ॥

टी०—तथा मस्तिष्केति । मस्तिष्कं मस्तुलुङ्गकं शिरोऽङ्गस्यारम्भकोऽवयवः । तथा कपालादयः दशनादयश्च ॥ ननु च धातुमध्येऽधीतं मस्तिष्कं नाङ्गं न प्रत्यङ्गमिति कपालादिवदारम्भकत्वान्मस्तिष्कमप्युपाङ्गं शिरसोऽवसेयम् । एवमुरःप्रभृत्यङ्गानामप्येकैकस्य वाच्यान्युपाङ्गनामानि ज्वलनजलानिलवसुधावनस्पतिवर्जजीवेषु सम्भवन्ति ॥

भा०—जातिलिङ्गाकृतिव्यवस्थानियामकं निर्माणनाम ॥

टी०—जातिलिङ्गाकृतीति । जातिरेकेन्द्रियादिलक्षणा पञ्चधोक्ता तस्यां जातौ लिङ्गव्यवस्थामाकृतिव्यवस्थां च नियमयति यत्, [1]लिङ्गं स्त्रियाः पुंसो नपुंसकस्य च यदसाधारणं, आकार आकृतिः—अवयवरचना तां च, यन्निर्मापयति निर्माणनाम तदुच्यते । एतदुक्तं भवति—सर्वजीवानामात्मीयात्मीयशरीरावयवविन्यासनियमकारणं निर्माणनाम प्रासादादिनिर्माणकलाकौशलोपेतवर्धकिवदिति ॥

भा०—सत्यां प्राप्तौ निर्मितानामपि शरीराणां बन्धकं बन्धननाम । अन्यथा हि वालुकापुरुषवदबद्धानि शरीराणि स्युरिति ॥

टी०—सत्यां प्राप्तावित्यादि । शरीरनामकर्मोदयाद् गृहीतेषु गृह्यमाणेषु वा तद्योग्यपुद्गलेष्वात्मप्रदेशस्थितेषु शरीराकारेण परिणामितेष्वपि परस्परमवियोगलक्षणं यदि बन्धननाम काष्ठजतुवत् न स्यात् ततो वालुकापुरुषवद् विघटेरन् शरीराणि तदेतेन भाष्येण प्रतिपादितम् । औदारिकभेदाश्च पञ्चधा, न च भेदः प्रकृत्यन्तरं शरीरनामकर्मणः । सङ्घातप्रकृतिस्वरूपनिरूपणायेदमाह—

भा०—बद्धानामपि च सङ्घातविशेषजनकं प्रचयविशेषात् सङ्घातनाम दारुमृत्पिण्डायःपिण्डसङ्घातवत् ॥

टी०—बद्धानामपि चेत्यादि । बद्धानामपि च पुद्गलानां परस्परं जतुकाष्ठन्यायेन पुद्गलरचनाविशेषः सङ्घातः, संयोगेनात्मना गृहीतानां पुद्गलानां यस्य कर्मण उदयादौदारिक-

१ 'स्निग्धादीनि' इति ङ–पाठः । २ 'स्पर्शनादयश्च' इति च–पाठः । ३ 'लिङ्गं त्रिधा पुंसो नपुंसकस्य स्त्रियाश्च' इति ङ–पाठः । ४ 'तदनन्तरं' इति ङ–पाठः । ५ 'यः सङ्घातवत्' इति च–पाठः ।

तनुविशेषरचना भवति तत् सङ्घातनामकर्म, पुद्गलरचनाकारेण विपच्यत इति पुद्गलविपाक्युच्यते। तच्चौदारिकादिभेदात् पञ्चधा, परस्परविभिन्नलेप्यकरचनाविशेषवच्छरीरपरिणाम एव ह्युपलक्ष्यते। स चैवंविधः कर्मभेदो यदि न स्यात् ततः प्रत्यक्षप्रमाणविनिश्चेयः पुरुषयोषिद्गवादिलक्षणो नानाशरीरभेदो नैव सम्भाव्येत, सङ्घातककर्मविशेषाभावात्। कारणानुविधायि च कार्यं लोके प्रतीतम्। सङ्घातविशेषादेव हि पुरुषादिशरीरलक्षणो विभागेन व्यपदेशः। अपिशब्दः सम्भावनार्थः। चशब्दोऽवधारणार्थः। सत्येव बन्धननाम्नि न स्याद् विशेषः। यतः सङ्घातविशेषजनकं प्रचयविशेषात् सङ्घातनाम। सङ्घातविशेषस्य जनकमिति शेषलक्षणा षष्ठीति नास्ति समासप्रतिषेधः। स तु प्रतिपदविहितायाः षष्ठ्याः प्रतिषेधः। प्रचयविशेषादिति। प्रचयविशेषाद्धेतोः पुद्गलानां विन्यासः पुरुषस्त्रीविशेषात्मकः। चशब्दोऽवधारणार्थः। यन्निमित्तश्च स विन्यासस्तत् सङ्घातनाम। तत्प्रसिद्धोदाहरणेन भावयन्नाह–दारुमृत्पिण्डायःपिण्डसङ्घातवदिति। गद्यबन्धनानुलोम्याच्चात्र द्विः पिण्डग्रहणम्। दारुमृदयःपिण्डवदिति दुरुच्चारं स्यात्, अथोदारुमृत्पिण्डवदिति किं न कृतम्? अपूर्तिवचनाः खल्वाचार्याः सकृदभिधाय न निवर्तन्ते, दारुपिण्डवत् मृत्पिण्डवत् अयःपिण्डवच्चेति दृष्टान्तत्रयं सुलभत्वात् प्रतिपत्तुश्चातिशायिप्रबोधहेतुत्वात्, दार्वेवयवसङ्घातो दारुपिण्डः। एवं मृदवयवसङ्घातो मृत्पिण्डः। तथाऽयोऽवयवानां सङ्घातोऽयःपिण्डः। तं एवात्रौदारिकादिशरीरयोग्यपुद्गलांश्चेतनेनात्मनाऽऽत्मसात्कृत्य सङ्घातनामकर्मोदयात् परस्परं संहताः सन्तिष्ठन्त इति॥

संस्थाननामस्वरूपाख्यानायाह—

**भा०—संस्थाननाम षड्विधम्। तद्यथा–समचतुरस्रनाम, न्यग्रोधपरिमण्डलनाम, सादिनाम, कुब्जनाम, वामननाम, हुण्डनामेति॥**

**टी०—संस्थाननाम षड्विधमित्यादि।** संस्थितिः संस्थानम्–आकारविशेषः। तेष्वेव बध्यमानेषु पुद्गलेषु संस्थानविशेषो यस्य कर्मण उदयाद् भवति तत् संस्थाननाम, षड्विधं–षट्प्रकारम्। तद्यथेत्यनेन षडपि नामग्राहमाचष्टे–समचतुरस्रनामेत्यादि। समं च तच्चतुरस्रं चेति समचतुरस्रम्। यतस्तत्र मानोन्मानप्रमाणमन्यूनमनधिकम्, अङ्गोपाङ्गानि चाविकलानि ऊर्ध्वं तिर्यक् च तुल्यत्वात् समं चतुरस्रं चाविकलावयवत्वात् स्वाङ्गुलाष्टशतोच्छ्रायाङ्गोपाङ्गयुक्तं, युक्तिनिर्मितलेप्यकवद् वा। न्यग्रोधपरिमण्डलनाम्नस्तु नाभेरुपरि सर्वावयवाः

---

१ 'जनकावयवा विशेषात्' इति ङ–पाठः। २ 'स्त्रीशरीरादिकः' इति च–पाठः। ३ 'अपूर्तिवचना.' इति ग–ङ–पाठः। ४ 'धायनिव' इति ङ–पाठः। ५ 'यथा मृत्पिण्डस्तथा' इति ग–पाठः। ६ 'स एवमौदारिकादि' इति च–पाठः। ७ 'श्चतेनात्म' इति ङ–पाठः। ८ 'साचिनाम' इति घ–पाठः। ९ 'ऊर्ध्वतिर्यक्ष्वतुल्य' इति ङ–पाठः।

समचतुरस्रसंस्थानलक्षणाविसंवादिनोऽधस्तात् पुनरुपरितनभागानुरूपास्तस्य नावयवा इति अत एव न्यग्रोधपरिमण्डलं तदुच्यते। न्यग्रोधाकृतित्वात् न्यग्रोधपरिमण्डलमुपरिविशालत्वाद्‌-त्वादिति। सादिनामस्वरूपं तु नाभेरधः सर्वावयवाः समचतुरस्रलक्षणाविसंवादिनः उपरि तु तदनुरूपाः। सादीति शाल्मलीतरुमाचक्षते प्रवचनवेदिनः। तस्य हि स्कन्धो द्राघीयानुपरितना,न तदनुरूपा विशालतेति। कुब्जनामस्वरूपं पुनः कन्धराया उपरि हस्तपादं च समचतुरस्र-लक्षणयुक्तं संक्षिप्तविकृतमध्यकोष्ठं च कुब्जम्। वामननाम तु लक्षणयुक्तं ओष्ठग्रीवादि उपरि हस्तपादयोश्च न्यूनलक्षणं वामनम्। हुण्डसंस्थानं तु यत्र पादाद्यवयवा यथोक्तप्रमाणविसंवा-दिनः प्रायस्तद्धुण्डसंस्थानमिति। तथा चोक्तम् ( बृहत्सङ्ग्रहण्याम् गा० १७६ )

"तुल्लं वित्थरबहुलं उस्सेहबहुलं च मडहकोट्ठं च।
हेट्ठिल्लकायमडहं सव्वत्थासंठियं हुंडं॥ १॥"

**भा०—संहनननाम षड्विधम्। तद्यथा—वज्रर्षभनाराचनाम, अर्धवज्रर्ष-भनाराचनाम, नाराचनाम, अर्धनाराचनाम, कीलिकानाम, सृपाटिकानामेति॥**

**टी०—संहनननाम षड्विधमित्यादि।** अत्र पूर्ववद् व्याख्या। तद्यथेत्यादिना षण्णामपि स्वरूपमाविर्भावयति—**वज्रर्षभनाराचेत्यादि,** अस्थ्नां बन्धविशेषः संहननं,ऋषभः पट्टः, वज्र–कीलिका, मर्कटबन्धः य उभयपार्श्वयोरस्थिबन्धः स किल नाराचः। वज्रर्षभनाराचा यत्र संहनने तद् वज्रर्षभनाराचसंहननम्, अस्थ्नां बन्धविशेष इति। **अर्धवज्रर्षभनाराचनाम** तु वज्रर्षभनाराचानामर्धं किल सर्वेषां वज्रस्यार्धं ऋषभस्यार्धं नाराचस्यार्धमिति भाष्यकारमतम्। कर्मप्रकृतिग्रन्थेषु वज्रनाराचनामैवं पट्टहीनं पठितं, किमत्र तत्त्वमिति सम्पूर्णानुयोगधारिणः क्वचित् संविद्रते। अर्धग्रहणाद् वा ऋषभहीनं व्याख्येयम्। **नाराचनाम्नि** तु मर्कटबन्ध एव केवलो न कीलिका न पट्टः। **अर्धनाराचनाम्नि** त्वेकपार्श्वे मर्कटबन्धः, द्वितीयपार्श्वे तु कीलिकैव मर्कटबन्धाः, अत्रापि कर्मप्रकृतौ नैवास्ति। **कीलिकानाम** विना मर्कटबन्धेनास्थ्नो मध्ये कीलिकामात्रम्। **सृपाटिकानाम** कोटिद्वयसंगते ये अस्थिनी चर्मस्नायुमांसावबद्धे तत् सृपाटिकानाम कीर्त्यते। सृपाटिका—फलसंपुटकं यथा तत्र फलकानि परस्परस्पर्शमात्रवृत्त्या वर्तन्ते एवमस्थीन्यत्र संहनने। तदेवमेतान्येवंविधास्थिसङ्घातलक्षणानि संहनननामान्यौदारिकशरीर एव संहन्यन्ते, लोहपट्टनाराचकीलिकाप्रतिबद्धकपाटवदिति॥

(margin: अर्धवज्रर्षभनाराच-व्याख्यायां मतभेदः)

---

१ 'नोऽवयवा' इति ङ–पाठः।

२ छाया—
तुल्यं १ विस्तारबहुलं २ उत्सेधबहुलं ३ च मडभकोष्ठं च।
४ अधस्तनकायमडभं ५ सर्वत्रासंस्थितं ६ हुण्डम्॥

३ 'संचियं' इति ग–पाठः। ४ 'रिणः संविद्रते' इति ग–च पाठः। ५ 'कीलपट्टः' इति ङ–पाठः।

६ 'कीलिमात्रं' इति ग–च–पाठः।

**भा०—स्पर्शनामाष्टविधं कठिननामादि ॥ रसनामानेकविधं तिक्तनामादि ॥ गन्धनामानेकविधं सुरभिगन्धनामादि ॥ वर्णनामानेकविधं कालनामादि ॥**

टी०—**स्पर्शनामाष्टविधमित्यादि** । औदारिकादिषु शरीरेषु यस्य कर्मण उदयात् कठिनादिः स्पर्शविशेषः समुपजायते तत् स्पर्शनामाष्टविधम् । तामष्टभेदतां प्रतिपादयन्नाह—**कठिननामादीति** । कर्कश-मृदु-गुरु-लघु-स्निग्ध-रूक्ष-शीतो-ष्णनामानि । स्वस्थाने त्वनेकभेदत्वमेषां प्रकर्षापकर्षजनितम् **रसनामानेकविधं तिक्तनामादि** । रसनामानेकभेदं तिक्त-कटु-कषाया-ऽम्ल-मधुर-लवणाख्यम् । लवणो मधुरान्तर्गत इत्येके । अनेकविधग्रहणं तिक्ताद्यन्तर्भेदप्रतिपादनार्थम् । एवमन्यत्राप्यन्तर्भेदा वाच्याः । **गन्धनामानेकविधमित्यादि** । **सुरभिगन्धनामादि** शरीरविषयं सौरभं दुर्गन्धित्वं च यस्य कर्मणो विपाकान्निर्वर्तते तद् गन्धनाम । अपरे साधारणं गन्धमाहुस्तदसत् । सुरभिणा दुर्गन्धिना वा भवितव्यं, न साधारणः कश्चिदस्तीति । **वर्णनामानेकविधं कालनामादि** । यस्योदयाच्छरीरेषु कृष्णादिपञ्चविधवर्णनिष्पत्तिर्भवति तद् वर्णनाम कृष्ण-नील-लोहित-पीत-शुक्लभेदम् । सर्वाणि चैतानि स्पर्शनामादीनि वर्णनामान्तानि शरीरवर्तिषु पुद्गलेषु विपच्यन्त इति ॥

साधारण-गन्धनिरासः

आनुपूर्वीनामस्वरूपनिरूपणायाह—

**भा०—गतावुत्पत्तुकामस्यान्तर्गतौ वर्तमानस्य तदभिमुखमानुपूर्व्या तत्प्रापणसमर्थमानुपूर्वीनामेति ॥**

टी०—**गतावुत्पत्तुकामस्येत्यादि** । गम्यतेऽसाविति गतिर्नारकाद्युत्पत्तिस्थानम् । तच्च गतिनामकर्मोदयादवाप्यते । तस्यां गतावुत्पत्तुमिच्छतः कर्मसामर्थ्यादात्मनः । अन्तर्गतौ वर्तमानस्येति । मनुष्यः [1]तिर्यग्योनिवाच्यं यावदुत्पत्तिस्थानं न प्राप्नोति तावदन्तर्गतिः तत्र वर्तमानस्य कस्यचिज्जन्मवतश्चानुपूर्वीनामकर्मोदयो भवति । आनुपूर्वी च क्षेत्रसन्निवेशक्रमः । "अनुश्रेणि गतिर्जीवानां पुद्गलानां च" (अ० २ सू० २७) इति वचनात् । तत्र यत्कर्मोदयाद[2]तिशयेन तद्गमनानुगुण्यं स्यात् तदप्यानुपूर्वीशब्दवाच्यं भवति । तच्चात्मनो गत्यन्तरं गच्छत उपग्रहे वर्तते ऋषभस्येव पयः । सा चान्तर्गतिर्द्विविधा—[3]ऋज्वी वक्रा च । तत्र यदा ऋज्व्या गच्छति समयप्रमाणया तदा पूर्वकर्मैवायु[4]रनुभवन्नानुपूर्वीनामक[5]र्मणैवोत्पत्तिस्थानं प्राप्तः पुरस्कृतमायुरासादयति । वक्रगत्या पुनः प्रवृत्तः कूर्परलाङ्गलगोमूत्रिकालक्षणया द्वित्रिचतुःसमयमानया वक्रारम्भकाले पुरस्कृतमायुरादत्ते । तदैव चानुपूर्वीनामाप्युदेति । ननु च यथैव गतावृज्व्यां विना आनुपूर्वीनामकर्मणोत्पत्तिस्थानमियर्ति तद्वद् वक्रगत्यामपि कस्मान्नेति ? उच्यते—ऋज्व्यां पूर्वकायुर्व्यापारेणैव गच्छति, यत्र तत्पूर्वकर्मायुः क्षीणं तत्र तस्योदयं इत्य-

१ 'जातिर्वाच्यस्तुर्यावद्' इति च–पाठः । २ 'दैत्यातिशयेन' इति ग–च–पाठः । ३ ' ऋजुः वक्रा ' इति ङ–पाठः । ४ ' रन्तंभवमानु ' इति ङ–पाठः । ५ ' कर्मणैवो ' इति ङ–पाठः ।

ध्वयष्टिस्थानीयस्यानुपूर्वीनामकर्मणः । तदभिमुखमानुपूर्वीत्यादि । तदित्यनेनाविवक्षितगतिरभिसम्बध्यते । यस्यां मृत उत्पत्स्यते तस्या अभिमुखमनुकूलमानुपूर्व्या प्रतिविशिष्टदेशक्रमेण तत्प्रापणसमर्थमिति वक्ष्यति, तदभिमुखमित्यनेनाभिमुख्यमात्रं प्रतिपादितं, भूयस्तत्प्रापणसमर्थमित्यनेनानुपूर्वीनामकर्मणः कार्यमादर्शयति, तदुदितं तद्गतिप्रापणे समर्थमित्यलम् । आनुपूर्वीनामकर्माग्रेसरं नरकगत्यानुपूर्वीनामादि चतुर्विधं भवति ।

मतान्तरप्रदर्शनायाह—

आनुपूर्व्या-ख्यायां मतान्तरम्

**भा०—निर्माणनिर्मितानां शरीराङ्गोपाङ्गानां [1]विनिवेशक्रमनियामकमानुपूर्वीनामेत्यपरे ॥**

**टी०—निर्माणेत्यादि** । निर्माणनामकर्म व्याख्यातं प्राक्–जातिलिङ्गाकृतिव्यवस्थानियामकं निर्माणनामेति, निर्माणकर्मणा निर्मापितानां घटितानामवयवानामङ्गानां बाहूदरादीनां उपाङ्गानां चाङ्गुलिकर्णनासिकादीनां विनिवेशक्रमनियामकं–रचनानिवेशः तस्य क्रमः–परिपाटी उभयपार्श्वतो बाहू कटेरधो जानुनोश्चोपर्युपर्यन्यत्रापि वाच्यः क्रमस्तन्नियामकं-नियमकारि । अनेनाङ्गेनोपाङ्गेन चात्रैव स्थाने विनिवेष्टव्यमित्येवमानुपूर्वीनामापरे प्रवचनप्रवृद्धाः कथयन्तीति ।

अगुरुलघुप्रकृतिनिर्धारणायाह—

**भा०—अगुरुलघुपरिणामनियामकमगुरुलघुनाम ॥**

**टी०—अगुरुलघ्वित्यादि** । परिणामत्रयस्यात्र निषेधो विवक्षितो गुरुत्वलघुत्वगुरुलघुत्वाख्यस्य । यस्य कर्मण उदयात् सर्वजीवानामिह कुब्जादीनामात्मीयशरीराणि न गुरूणि न लघूनि स्वतः, किं[4] तर्हि ? अगुरुलघुपरिणाममेवावरुन्धन्ति तत् कर्मागुरुलघुशब्देनोच्यते । सर्वद्रव्याण्येव च परिणमन्ते स्थित्यादिनाऽनेकेन स्वभावेनेति जैनः सिद्धान्तः । तत्रागुरुलघ्वाख्यो यः परिणामः तस्य नियामकतमेतत् तत्रोद्भूतशक्तिकमभिधत्त इत्यगुरुलघुनाम । सर्वशरीराणि च निश्चयनयवृत्त्या न गुरुकादिव्यपदेशभाञ्जि । व्यवहारनयात् त्वन्योन्यापेक्षया त्रैविध्यमनुरुध्यन्ते । यथोक्तम्—

" [6]निच्छयओ सव्वगुरुं सव्वलहुं वा न विज्जए दव्वं ।
ववहारओ उ जुज्जइ बायरखंधेसु नन्नेसु ॥ १ ॥"

—बृहत्कल्पे

१ 'विनिवेशननियामकक्रमानुपूर्वी' इति ग–पाठः । २ 'नुपूर्व्यादि' इति ङ–पाठः । ३ 'गतिलिङ्गा' इति ङ–पाठः । ४ 'किन्तु' इति ङ–पाठः । ५ 'कं नियते' इति ग–च–पाठः ।

६ छाया—
निश्चयतः सर्वं गुरु सर्वं लघु वा न विद्यते द्रव्यम् ।
व्यवहारस्तु युज्यते बादरस्कन्धेषु नान्येषु ॥

७ श्लोकार्धमिदं तु दृश्यते विशेषावश्यके ( गा० ६६० ) अपि ।

उपघातनामस्वरूपाख्यानायाह—

**भा०—शरीराङ्गोपाङ्गोपघातकमुपघातनाम ।**

**टी०—शरीराङ्गोपाङ्गोपघातकमिति ।** शरीराङ्गानामुपाङ्गानां च यथोक्तानां यस्य कर्मण उदयात् परैरनेकधोपघातः क्रियते तदुपघातनाम । मतान्तरं वाशब्देन प्रतिपादयति—

**भा०—स्वपराक्रमविजयाद्युपघातजनकं वा ॥**

**टी०—**केचिदेवमुपघातजनकं वा केचिदुपघातनाम व्याचक्षते सूरयः पराक्रमः—प्राणो वीर्यं, स्वो-निजः पराक्रमः स्वपराक्रमः तस्योपघातं जनयति, समर्थवपुषोऽपि निर्वीर्यतामापादयति स्वविजयं चोपहन्ति । विजितेऽप्यन्यस्मिन् नैव विजित इति व्यपदेश-हेतुतां प्रतिपद्यत इति । आदिग्रहणादन्यदपि यदुद्भूतं कर्म तत् तस्योदयेनोपहन्यत इति ।

पराघातस्वरूपं निरूपयति—

**भा०—परत्रासप्रतिघातादिजनकं पराघातनाम ॥**

**टी०—परत्रासेत्यादि ।** यस्य कर्मण उदयात् कश्चिद् दर्शनमात्रेणैवोजस्वी वाक्-सौष्ठवेनान्यां सभामभ्यभिगतः सभ्यानामपि त्रासमापादयति परप्रतिभाप्रतिघातं वा करोति तत् **पराघातनाम** । आदिग्रहणात् संक्षोभदृष्टिगतिस्तम्भनपरिग्रहः ॥

आतपनामनिरूपणायाह—

**भा०—आतपसामर्थ्यजनकमातपनाम ॥**

**टी०—आतपसामर्थ्यजनकमिति ।** आतपतीत्यातपः । कर्तर्यच् । आतप्यते वाऽने-नेति आतपः । पुंसि संज्ञायां घः । तस्यातपस्य सामर्थ्यं-शक्तिरतिशयो येन कर्मणोदितेन जन्यते तदातपनाम । आङो मर्यादावचनत्वात् सहस्रांशुमण्डलपृथिवीकायपरिणाम एव तद् विपच्यते, नान्यत्रेति ॥

उद्द्योतनामस्वरूपप्रतिपादनायाह—

**भा०—प्रकाशसामर्थ्यजनकमुद्द्योतनाम ॥**

**टी०—प्रकाशसामर्थ्यजनकमुद्द्योतनामेति ।** उद्द्योतनमुद्द्योतः-प्रकाशोऽ-नुष्णः खद्योतकादिप्रभावः । सप्तार्चिःसवितृमण्डलासम्भवि, यस्मादग्नेरुष्णः स्पर्शो लोहितं रूपम्, अतः प्रकाशस्य सामर्थ्यम्—अतिशयं जनयति यत् तदुद्द्योतनाम ।

उच्छ्वासनामस्वरूपमाचष्टे—

**भा०—प्राणापानपुद्गलग्रहणसामर्थ्यजनकमुच्छ्वासनाम ॥**

---

१ 'उत्पत्तेरनेकधा' इति ङ-पाठः । २ 'प्राणीवीर्याख्यो' इति ङ-पाठः । ३ 'कर्तव्यं च' इति ङ-पाठः । ४ 'हन्येत' इति ङ-पाठः ।

टी०—प्राणापानेत्यादि । ऊर्ध्वगामी समीरणः प्राणः । अधोगतिरपानः । तौ च मूर्तौ पुद्गलात्मकावित्यत आह–पुद्गलग्रहणसामर्थ्यजनकमिति । प्राणापानावनन्तप्रदेशस्कन्धपुद्गलपरिणामजन्यौ तद्योग्यपुद्गलानां ग्रहणम्–आदानं तस्य सामर्थ्यम्–अतिशयं जनयति यत् तदुच्छ्वासनाम, यस्योदयादुच्छ्वासनिश्वासौ भवतः ।

विहायोगतिस्वरूपप्रतिपादनायाह—

भा०—लब्धिशिक्षर्द्धिप्रत्ययस्याकाशगमनस्य जनकं विहायोगतिनाम ॥

टी०—लब्धिशिक्षर्द्धीत्यादि । विहायः–आकाशः तत्र गतिर्विहायोगतिः । सा द्विधा–शुभा च अशुभा च । तत्र प्रशस्ता हंस-गज-वृषादीनाम् । अप्रशस्ता उष्ट्र-खर-शृगालादीनाम् । तत्र लब्धिर्देवादीनां देवत्वोत्पत्त्यविनाभाविनी । शिक्षया ऋद्धिः शिक्षर्द्धिः तपस्विनां प्रवचनमधीयानानां[1] विद्याद्यावर्तनप्रभावाद् वाऽऽकाशगमनस्य लब्धिशिक्षर्द्धिहेतोर्जनकं विहायोगतिनामेति ॥

प्रत्येकशरीरनामनिर्धारणार्थमाह—

भा०—पृथक्शरीरनिर्वर्तकं प्रत्येकशरीरनाम ॥

टी०—पृथक्शरीरनिर्वर्तकमित्यादि । यस्य कर्मण उदयादेकैको जीवः प्रति प्रत्येकैकं शरीरं निर्वर्तयति तत् प्रत्येकनामैकद्वित्रिचतुःपञ्चेन्द्रियविषयम्[2] । यथा प्रत्येकवनस्पतिजीवो मूल-स्कन्ध-शाखा-प्रशाखा-त्वक्-पत्र-पुष्प-फलादिषु पृथक् शरीरं निर्वर्तयति तथा द्वीन्द्रियादयोऽपीति ।

साधारणशरीरनामाद्या बादरनामपर्यवसाना एकादश प्रकृतीः क्रमेण व्याचष्टे—

भा०—अनेकजीवसाधारणशरीरनिर्वर्तकं साधारणशरीरनाम । त्रसभावनिर्वर्तकं त्रसनाम ।

टी०—अनेकजीवेत्यादि । अनेकशब्देनानन्तसङ्ख्याग्रहणम् । अनन्तानां जीवानामेकं शरीरं साधारणं किसलयनिगोदवज्रप्रभृति यथैकजीवस्य परिभोगस्तथाऽनेकस्यापि । तदभिन्नं सद् यस्य कर्मण उदयान्निर्वर्तते तत् साधारणशरीरनाम[4] । तथा त्रसेत्यादि । त्रस्यन्तीति त्रसा–द्वित्रिचतुःपञ्चेन्द्रियलक्षणाः प्राणिनः, यस्मात् तस्य कर्मण उदयात् तेषु परिस्पन्दोऽञ्जसा लक्ष्यते, स तादृशो गमनादिक्रियाविशेषो यस्य कर्मण उदयाद् भवति तत् त्रसत्वनिर्वर्तकं त्रसनाम, तदुदये एव गत्यादिक्रिया भवतीति सोऽवधार्यते[5] । गमनं तु तदुदयात् स्वभावाच्च । तदुदयाद् द्वीन्द्रियादीनां स्वभावात् परमाणु-तेजो-वाय्वादीनामिति । कमलिनीखण्डादेर्देशान्तर एव गमनश्रवणाद् व्यभिचार इति चेन्न अधिष्ठातृव्यन्तरानुभावानुग्रहादिति ।

१ 'मधीतानां' इति ङ–पाठः । २ 'विषयाणा' इति ङ–पाठः । ३ 'त्रसत्वस्य' इति ङ–पाठः । ४ 'साधारणनाम' इति ग–पाठः । ५ 'नावधार्यते' इति च–पाठः ।

भा०—स्थावरभावनिर्वर्तकं स्थावरनाम ।

स्थावरभावेत्यादि । स्थावरनाम स्थानशीलं स्थावरं तद्भावः स्थावरत्वं निर्वर्तयति यत् पृथिव्यम्बुवनस्पत्यादिलक्षणं तत् स्थावरनामकर्म । स्थानशीलत्वं तु स्थावरनामकर्मोदयादेव पृथिव्यम्बुवनस्पतीनाम् । परमार्थतस्तु तत्र स्थावरनामकर्मोदयात् स्थावरत्वं, परिस्पन्दो भवतु मा वाऽभूत् । एवं च तेजोवाय्वोरपि स्थावरत्वसिद्धिः कर्मोदयादेवेति ॥

भा०—सौभाग्यनिर्वर्तकं सुभगनाम ।

टी०—सौभाग्येत्यादि । कमनीयः सुभगो-मनसः प्रियस्तद्भावः सौभाग्यं तस्य निर्वर्तकं-जनकं सुभगनाम ।

भा०—दौर्भाग्यनिर्वर्तकं दुर्भगनाम ।

टी०—दौर्भाग्येत्यादि । सौभाग्यविपरीतलक्षणं दुर्भगनाम । अनिष्टो मनसो[1] योऽप्रियस्तद्भावो दौर्भाग्यम् । यस्य कर्मण उदयादिति ॥

भा०—सौस्वर्यनिर्वर्तकं सुस्वरनाम । दौःस्वर्यनिर्वर्तकं दुःस्वरनाम ।

टी०—सौस्वर्येति । येन शब्देनोच्चरितेनाकर्णितेन च भूयसी[2] प्रीतिरुत्पद्यते तत् सुस्वरनाम । तद्विपरीतं दुःस्वरनाम । यत् तु श्रूयमाणमसुखमावहति तद् दुःस्वरनामेति ॥

भा०—शुभभावशोभामाङ्गल्यनिर्वर्तकं शुभनाम । तद्विपरीतनिर्वर्तकं अशुभनाम ।

टी०—शुभेति । शुभो भावः पूजित उत्तमाङ्गादिस्तज्जनितः शोभा पूजापुरस्कारः शिरसा पादादिनाऽस्पर्शनं माङ्गल्यमिति पवित्रं तन्निर्वर्तकं शुभनाम । तद्विपरीतनिर्वर्तकमशुभनाम । शरीरावयवानामेव हि शुभाशुभता ग्राह्या । यथा पादेन स्पृष्टः क्रुध्यतीति ॥

भा०—सूक्ष्मशरीरनिर्वर्तकं सूक्ष्मनाम । बादरशरीरनिर्वर्तकं बादरनाम ॥

टी०—सूक्ष्मेति । सूक्ष्मं-श्लक्ष्णं अदृश्यं नियतमेव यस्य कर्मण उदयाद् भवति शरीरं पृथिव्यादीनां केषाञ्चिदेव तत् सूक्ष्मशरीरनाम । बादरशरीरनिर्वर्तकं बादरनाम । बादरं स्थूलं केषाञ्चिद् विग्रहवतां जीवानामिव यस्य कर्मण उदयात् स्थूलशरीरता भवति तद् बादरनामेति, न तु चक्षुर्ग्राह्यतां प्रतीत्यापेक्ष्य सूक्ष्मबादरमिति ॥

पर्याप्तस्थिरादेययशसां सप्रतिपक्षाणां स्वरूपनिरूपणाय प्रक्रम्यते—

भा०— पर्याप्तिः पञ्चविधा । तद्यथा-आहारपर्याप्तिः, शरीरपर्याप्तिः, इन्द्रियपर्याप्तिः, प्राणापानपर्याप्तिः, भाषापर्याप्तिरिति । पर्याप्तिः क्रियापरिसमाप्तिः आत्मनः ।

---

१ 'मनसोऽप्रिय' इति च-पाठः । २ 'भूयसा.' इति च-पाठ. । ३ 'रचेति' इति च-पाठः ।

टी०—पर्याप्तिः पञ्चविधेत्यादि । पर्याप्तिः पुद्गलरूपात्मनः कर्तुः करणविशेषः । येन करणविशेषेणाहारादिग्रहणसामर्थ्यमात्मनो निष्पद्यते तच्च करणं यैः पुद्गलैर्निर्वर्त्यते ते पुद्गला आत्मनाऽऽत्तास्तथाविधपरिणतिभाजः पर्याप्तिशब्देनोच्यन्ते । सामान्येनोद्दिष्टां पर्याप्तिं नामग्राहं विशेषेण [1]निर्दिदिक्षन्नाह–तद्यथेत्यादि । आहारग्रहणसमर्थकरणपरिनिष्पत्तिराहार-पर्याप्तिः । शरीरकरणनिष्पत्तिः शरीरपर्याप्तिः । इन्द्रियकरणनिष्पत्तिरिन्द्रियपर्याप्तिः । प्राणापानौ–उच्छ्वासनिःश्वासौ तद्योग्यकरणनिष्पत्तिः प्राणापानपर्याप्तिः । भाषायोग्यपुद्गल-ग्रहणविसर्गसमर्थकरणनिष्पत्तिर्भाषापर्याप्तिः । यथोक्तम्—

" [3]आहारसरीरेंदिय ऊसासवओमणोऽहिनिव्वित्ती ।
होइ जओ दलियाओ करणं एसा उ पज्जत्ती ॥ "

इतिशब्द इयत्ताप्रतिपादनार्थः ॥

ननु च षट् पर्याप्तयः पारमर्षवचनप्रसिद्धाः कथं पञ्चसंख्याका इति ? उच्यते–इन्द्रियपर्याप्तिग्रहणादिह मनःपर्याप्तेरपि ग्रहणमवसेयम् । अतः पञ्चैवेति निश्चयः ॥

पर्याप्तिलक्ष्याः परामर्शः

ननु च शास्त्रकारेणानिन्द्रियमुक्तं मनः, कथमिन्द्रियग्रहणाद् ग्रहीष्यते तदिति ? उच्यते–यथा शब्दादिविषयग्राहीणि साक्षाच्चक्षुरादीनि न तथा मनः, सुखादीनां पुनः साक्षाद्ग्राहकं मनः, न सम्पूर्णमिन्द्रियमित्यनिन्द्रियमुक्तम् । इन्द्रलिङ्गत्वात् तु भवत्येवेन्द्रियमिति ॥ तथा केचिदाचार्याः पृथग्मनः-पर्याप्तिग्रहणमधीयत इत्युपरिष्टादभिधास्यते । यच्चावधारणं पञ्चैवेति तद् बाह्यकरणापेक्षया । मनः पुनरन्तःकरणमतः पृथक् पठन्तीति न कश्चिद् दोषः । उभयथाऽपि मनःपर्याप्तिसम्भव इति । पर्याप्तिः परिनिष्पत्तिर्विवक्षितक्रियापरिसमाप्तिरात्मनस्तैजसकार्मणशरीरभाज एव, औदारिकादिशरीरप्रेक्षायां प्रथमत एवोत्पत्तावेताश्चिन्त्यन्ते, जन्मान्तरग्रहणकाल इत्यर्थः । युगपच्चारब्धाः षडपि क्रमेण निष्पद्यन्ते, न समकम्, उत्तरोत्तरपर्याप्तीनां बहुतरकालत्वात् । क्रमश्चायम्–आहार-शरीरे-न्द्रिय-प्राणापान-वचन-मनोलक्षणः । तत्राहारपर्याप्तिस्वरूपनिरूपणायाह–

**भा०—शरीरेन्द्रियवाङ्मनःप्राणापानयोग्यदलिकद्रव्याहरणक्रियापरिसमाप्तिः आहारपर्याप्तिः । गृहीतस्य शरीरतया संस्थापनक्रियापरिसमाप्तिः शरीरपर्याप्तिः । संस्थापनं रचना घटनमित्यर्थः ।**

---

१ 'निर्दिदक्ष' इति च–पाठः । २ 'करणपरिनिष्पति' इति च–पाठः ।

३ छाया—

आहारशरीरेन्द्रियोच्छ्वासनिःश्वासमनोऽभिनिर्वृत्तिः ।
भवति यस्मात् दलिकात् करण एषा तु पर्याप्तिः ॥

४ 'शरीर एव' इति ङ–पाठः ।

टी०—शरीरेत्यादि । शरीरस्येन्द्रियाणां वाचो मनसः प्राणापानयोश्चागमप्रसिद्ध-वर्गणाक्रमेण यानि योग्यानि दलिकद्रव्याणि तेषामाहरणक्रिया ग्रहणम्-आदानं तस्याः परिसमाप्तिराहारपर्याप्तिः करणविशेषः । अत्र च मनोग्रहणात् परिस्फुटमिन्द्रियग्रहणे न मनसोऽप्युपादानमिति । सामान्येन गृहीतस्य योग्यपुद्गलसङ्घातस्य शरीराङ्गोपाङ्गतया संस्थापनक्रिया-विरचनक्रिया तस्याः पर्याप्तिः शरीरपर्याप्तिः । संस्थापनशब्दार्थप्रकाशनं पर्यायशब्दैरावेद्यते-संस्थापनं रचना घटनमित्यर्थः । शरीरवर्गणायोग्यपुद्गलानां प्रतिनियतावयवेनेत्यर्थः ।

भा०—त्वगादीन्द्रियनिर्वर्तनक्रियापरिसमाप्तिरिन्द्रियपर्याप्तिः ।

टी०—त्वगिति स्पर्शनेन्द्रियं तदादीन्द्रियं स्पर्शन-रसन-घ्राण-चक्षुः-श्रोत्र-मनोलक्षणम् । तत्र च रूपनिर्वर्तनक्रियापरिसमाप्तिरिन्द्रियपर्याप्तिः ॥

भा०—प्राणापानक्रियायोग्यद्रव्यग्रहणनिसर्गशक्तिनिर्वर्तनक्रियापरिसमाप्तिः प्राणापानपर्याप्तिः ॥

टी०—प्राणेति । प्राणापानावुच्छ्वासनिश्वासक्रियालक्षणौ तयोर्वर्गणाक्रमेण योग्यद्रव्यग्रहणशक्तिः-सामर्थ्यं तन्निर्वर्तनाक्रियापरिसमाप्तिः प्राणापानपर्याप्तिः ॥

भा०—भाषायोग्यद्रव्यग्रहणनिसर्गशक्तिनिर्वर्तनक्रियापरिसमाप्तिर्भाषापर्याप्तिः ।

टी०—अत्रापि वर्गणाक्रमेणैव भाषायोग्यद्रव्याणां ग्रहणनिसर्गौ तद्विषया शक्तिः-सामर्थ्यं तन्निर्वर्तनक्रियापरिसमाप्तिर्भाषापर्याप्तिरिति ॥

भा०—मनस्त्वयोग्यद्रव्यग्रहणनिसर्गशक्तिनिर्वर्तनक्रियापरिसमाप्तिर्मनःपर्याप्तिरित्येके ।

टी०—मनस्त्वयोग्यानि मनोवर्गणायोग्यानि मनःपरिणामप्रत्यलानि यानि द्रव्याणि तेषां ग्रहणनिसर्गसामर्थ्यस्य निर्वर्तनक्रियापरिसमाप्तिर्मनःपर्याप्तिरिति । एके त्वाचार्या भेदेन मनःपर्याप्तिमुपाददते । इन्द्रियपर्याप्तिं नोइन्द्रियपर्याप्तिग्रहणेन गृह्णन्ते । इन्द्रियपर्याप्तिं व्यतिरेकेण पठन्तीत्यर्थः । न पुनर्मनःपर्याप्तिं केचिदिच्छन्ति केचिन्नेति ॥

भा०—आसां युगपदारब्धानामपि क्रमेण समाप्तिरुत्तरोत्तरसूक्ष्मतरत्वात् सूत्रदार्वादिकर्तनघटनवत् । यथासङ्ख्यं च निदर्शनानि—

टी०—आसामित्यादिना षडपि पर्याप्तयः समकमारब्धाः क्रमेण परिसमाप्तिमासादयन्तीति दर्शयति । किं पुनः कारणं वैषम्येण परिनिष्ठाऽऽसामित्याह—उत्तरोत्तरसूक्ष्म-

१ 'स्वरूप' इति च-पाठः । २ 'मनश्च' इति ङ-पाठः । ३ 'र्गस्य पर्याप्तस्य' इति ङ-पाठः । ४ 'र्याप्ति-रनिन्द्रिय' इति ङ-पाठः ।

तरत्वादिति । आहारपर्याप्तेः शरीरपर्याप्तिः सूक्ष्मतरा बहुतरसूक्ष्मद्रव्यनिचयघटिता । ततोऽपीन्द्रियपर्याप्तिः सूक्ष्मतरा । तस्या अपि प्राणापानपर्याप्तिः । ततोऽपि वाक्पर्याप्तिः । ततश्च मनःपर्याप्तिः सुसूक्ष्मेति । तच्चोत्तरोत्तरसूक्ष्मत्वं दृष्टान्तेन भावयति—सूत्रदार्वादिकर्तनघटनवदिति । स्थूलसूत्रकर्तिका सूक्ष्मसूत्रकर्तिका च ते कर्तनं युगपदारभेते । तत्र स्थूलसूत्रकर्तिका चिराय कुक्कुटकं पूरयति । इतरा त्वाशु परिसमापयति । दारुघटनेऽप्येष एव क्रमः । स्तम्भादीनां स्थूलरूपनिर्वर्तनं समचतुरस्रादि स्वल्पेन कालेन क्रियते, स एव स्तम्भः कुट्टिमपत्रच्छेद्यपुत्रिकासङ्घाटकयुक्तश्चिरेण निष्पाद्यते तुल्यकालेऽपि प्रारम्भे । आदिशब्दाच्चित्र-पुस्तलेप्यकादिपरिग्रहः । यथासङ्ख्यं च निदर्शनानीति ॥

अनेन षण्णामपि पर्याप्तीनां क्रमेण षड्भिरेव दृष्टान्तैः स्वरूपमुपक्रमते । अतो दृष्टान्तस्वरूपप्रतिपादनायाह—

भा०—गृहदलिकग्रहणस्तम्भस्थूणाद्वारप्रवेशनिर्गमस्थानशयनादिक्रियानिर्वर्तनानीति । पर्याप्तिनिर्वर्तकं पर्याप्तिनाम, अपर्याप्तिनिर्वर्तकमपर्याप्तिनाम, (अपर्याप्तिनाम) तत्परिणामयोग्यदलिकद्रव्यमात्मनोपात्तमित्यर्थः ॥

टी०—गृहदलिकग्रहणेत्यादि । तत्र गृहदलिकग्रहणेनाहारपर्याप्तिं साधयति । गृहं कर्तव्यमिति सामान्येन दलिकमादत्ते शाकादिकाष्ठम् । ततः सामान्योपात्ते दलिकेऽत्र स्तम्भः स्थूणा वा भविष्यतीति निरूप्यते । एवमनेकपुद्गलग्रहणे सत्यत्रामी शरीरवर्गणायोग्याः पुद्गलाः शरीरनिष्पादनक्षमा इति शरीरपर्याप्तिः । भित्त्याद्युच्छ्रायरूपगृहालोचनायामपि सत्यां कतिद्वारमिदं प्राङ्मुखमुदङ्मुखं वा प्रवेशनिर्गमनार्थमालोच्यते, तथेन्द्रियपर्याप्तिरप्यात्मन उपयोगवृत्त्या प्रवेशनिर्गमनद्वारस्थानीयेति । एवं प्राणापानभाषापर्याप्ती अपि एतेनैव निदर्शनेन साध्ये । दार्ष्टान्तिकभेदात् तु दृष्टान्तभेदः । ततः सद्वारकेऽपि निष्पन्ने सद्मनि अत्रासनमत्र शयनीयमत्र भुजिभूरिति स्थानशयनादिक्रियानिर्वर्तनमालोचयन्ति गेहिनः, तद्वन्मनःपर्याप्तिरपि हिताहितप्राप्तिपरिहारापेक्षालक्षणेति । एवमेताः षट् पर्याप्तीर्यन्निर्वर्तयति तत् कर्म पर्याप्तिनाम, आपाकप्रक्षिप्तनिर्वृत्तघटवत् । अपर्याप्तिनाम तु अनिष्पन्नध्वंस्यनिष्पन्नघटवदिति । एतदुक्तं भवति—यस्योदये पर्याप्तयो नासादयन्ति परिपूरिमतामपर्याप्त एव म्रियते, कदाचिद्वा विनाऽपि भवति यथा सम्मूर्च्छनजमनुष्यादिरिति ॥

भा०—स्थिरत्वनिर्वर्तकं स्थिरनाम । विपरीतमस्थिरनाम ॥

टी०—स्थिरत्वनिर्वर्तकं स्थिरनाम । यस्योदयाच्छरीरावयवानां स्थिरता भवति शिरोऽस्थिदन्तादीनां तत् स्थिरनाम । अस्थिरनामापि शरीरावयवानामेव । यदुदयादस्थिरता

१ 'सूत्रा-' इति ङ-पाठः । २ चतुश्चिह्नान्तर्गतो घ-पाठः । ३ 'स्थापयतीति' इति ङ-पाठः । ४ 'हारापेक्षा' इति च-पाठः । ५ 'घृतघटवत्' इति ङ-पाठः । ६ 'तदेतद्विपरीत०' इति ग-पाठः । ७ 'शिरोमुखदन्ता' इति ग-पाठः ।

चलता मृदुता भवति कर्णत्वगादीनां तदस्थिरनामेति । तदेतद्विपरीतमस्थिरनामेत्यनेन प्रतिपादितम् ॥

**भा०—आदेयभावनिर्वर्तकं आदेयनाम। विपरीतमनादेयनाम ॥**

**टी०**—गृहीतवाक्यत्वादादरोपजननहेतुतां प्रतिपद्यते उदयावलिकाप्रविष्टं सत् । एतदुक्तं भवति—यस्योदयेन नामकर्मोदयस्तेनोक्तं प्रमाणं क्रियते यत् किञ्चिदपि दर्शनसमनन्तरमेव चाभ्युत्थानादि लोकाः समाचरन्तीत्येवंविधविपाकमादेयनाम । विपरीतमनादेयनाम। युक्तियुक्तमपि वचनं यदुदयान्न प्रमाणयन्ति लोकाः, न चाभ्युत्थानाद्यर्हणार्हस्यापि कुर्वन्ति तदनादेयनाम। अथवा आदेयता-श्रद्धेयता दर्शनादेव यस्य भवति स च शरीरगुणो यस्य विपाकाद् भवति तदादेयनाम। तद्विपरीतमनादेयनामेति ॥

**भा०—यशोनिर्वर्तकं यशोनाम, तद्विपरीतमयशोनाम।**

**टी०**—यशः-प्रख्यातिः कीर्तिः लोके गुणोत्कीर्तना प्रशंसना यदुदयात् तद् यशोनाम। तद्विपरीतं अयशोनाम। दोषविषया प्रख्यातिरयशोनामेति ॥

**भा०—तीर्थकरत्वनिर्वर्तकं तीर्थकरनाम ॥**

**टी०**—तीर्थकरत्वेति। यस्य कर्मण उदयात् तीर्थं दर्शनज्ञानचरणलक्षणं प्रवर्तयति यतिगृहस्थधर्मं च कथयति आक्षेपसंक्षेपसंवेगनिर्वेदद्वारेण भव्यजनसंसिद्धये सुरासुरमनुजपतिपूजितश्च भवति तत् तीर्थकरनामेति ॥

नामकर्मभेदाख्यानाय नामशब्दनिर्वचनमाचष्टे शब्दार्थप्रतीतये—

**भा०—तांस्तान् भावान् नामयतीति नाम। एवं सोत्तरभेदो नामकर्मभेदोऽनेकविधः प्रत्येतव्यः ॥ १२ ॥**

**टी०**—तांस्तानिति। तांस्तानभिजात्यादीन् ( भावान् ) नामयति-अभिमुखीकरोति संसारिणः प्रापयतीति नामोच्यते । एवमित्यादिनोपसंहरति नामकर्मप्रकृतिवक्तव्यं, उक्तेन प्रकारेण सोत्तरभेद इति। गतिश्चतुर्धा जातिः पञ्चप्रकारेत्यादिरुत्तरप्रकृतिभेदः सह तेन नामकर्मभेदोऽनेकविधोऽवसेय इति ॥ १२ ॥

सम्प्रति प्रकृतिबन्धं गोत्रस्याख्यातुमुपक्रमते—

गोत्रप्रकृती **सूत्रम्—उच्चैर्नीचैश्च ॥ ८-१३ ॥**

**भा०—उच्चैर्गोत्रं नीचैर्गोत्रं च (द्विभेदं गोत्रम्)। तत्रोच्चैर्गोत्रं देशजातिकुलस्थानमानसत्कारैश्वर्याद्युत्कर्षनिर्वर्तकम्। विपरीतं नीचैर्गोत्रं चण्डालमुष्टिकव्याधमत्स्यबन्धदास्यादिनिर्वर्तकम् ॥ १३ ॥**

---

१ 'प्रमीक्रियते' इति च-पाठः । २ 'विपरीत०' इति ग-पाठ । ३ 'यशोभावनिर्व०' इति ग-पाठ. । ४ धनुश्चिह्नान्तर्गतः पाठो घ-पुस्तके नास्ति ।

टी०—यदुदयाज्जीवो गच्छत्युच्चैर्नीचैश्च जातीरुच्चावचास्तद् गोत्रं द्विविधम्–उच्चै-र्नीचैश्चेति उच्चैर्गोत्रं नीचैर्गोत्रम् । चशब्दोऽवधारणार्थः । द्विभेदं द्विप्रकारमेवेति । तत्रोच्चै-र्गोत्रमित्यादिना गोत्रकर्मणः कार्यमावेदयते । कार्यलिङ्गं हि कारणं तयोर्द्वयोः प्रकृत्योर्य-दुच्चैर्गोत्रं तस्येदं कार्यमिति दर्शयति । आर्यदेशे मगधा-ऽङ्ग-वङ्ग-कालिङ्गादिके सम्भवः जातिः । पितुरन्वयो हरिवंशेक्ष्वाकुप्रभृतिः । कुलं मातुरन्वयः । सोऽप्येवंप्रकार एवोग्रभोजादिलक्षणः । स्थानमिति । प्रभोः समीपे प्रत्यासन्ननिवेशित्वम् । मानः पूजा स्वहस्तेन ताम्बूलप्रदानादिः । सत्कारोऽभ्युत्थानासनाञ्जलिप्रग्रहादिः क्रियते तस्यासौ, उच्चैर्गोत्रादयः ऐश्वर्यमिभाश्वरथपदातिप्रभृतेः प्राभूत्यं उत्कर्षापकर्षभाक्त्वादनेक-विधम् । एषां देशादिसम्भवानां निर्वर्तकमुच्चैर्गोत्रम् । विपरीतं नीचैर्गोत्रमिति । चण्डालाः प्रसिद्धा एव मातङ्गाः । चण्डालग्रहणं च प्रदर्शनं बहूनां वरुडकमुरुकक्कादीनाम् । मौष्टिकाः शौरिकादयः । व्याधा मृगयवो लुब्धकाः । मत्स्यबन्धाः प्राणातिपातहेतुभिरानायादिभि-र्जीवन्ति ये । दासभावो दास्यं तन्निर्वर्तकं नीचैर्गोत्रमिति । आदिशब्दादवस्करशोधकादि-परिग्रह इति ॥ १३ ॥

अष्टमप्रकृतेर्बन्धस्वरूपनिरूपणायाह—

## सूत्रम्—दानादीनाम् ॥ ८–१४ ॥

भा०—अन्तरायः पञ्चविधः । तद्यथा—दानस्यान्तरायः, लाभस्यान्तरायः, भोगस्यान्तरायः, उपभोगस्यान्तरायः, वीर्यस्यान्तराय इति ॥ १४ ॥

अन्तरायस्य प्रकृति-पञ्चकत्वम्

टी०—दानादीनाम् एतावत् सूत्रम् । तत्र दानादीनामिति षष्ठी प्रतिविशिष्ट-सम्बन्धापेक्षा । प्रस्तुतश्चान्तरायो मूलप्रकृतिबन्धमाह—अन्तरायः पञ्चविध इति । तद्यथेत्यनेन पञ्चविधतां दर्शयति—दानस्येत्यादि । दानं-देयम् । सत्यपि द्रव्ये न ददाति तद्धि कर्मोदितं दीयमानस्य कर्मणो विघ्नम्–अन्तरायमन्तर्धानं करोतीति दानान्तरायः । द्रव्ये प्रतिग्राहके च सन्निहितेऽस्मै दत्तं महाफलमिति जानानोऽपि दातव्यं न ददाति । एवं लाभ-भोगोपभोगवीर्यान्तरायेष्वपि योज्यम् । तथा कश्चिद् वदान्यः सर्वदा दानार्द्रकरः समस्ता-र्थिभ्यो यथाप्रार्थनं स्वशक्त्या निर्विशेषमूर्जितचेता यस्मै याचतेऽपि नो विसृजति प्रदेयमल्पमपि तस्य लाभान्तरायकर्मोदयः । तथा सकृदुपभुज्य यत् त्यज्यते पुनरुपभोगाक्षमं माल्य-चन्दनाऽ-गुरुप्रभृति, तच्च सम्भवादपि यस्य कर्मण उदयाद् यो न भुङ्क्ते तस्य भोगान्तरायकर्मोदयः ।

---

१ 'मुरुकक्कादीनाम्' इति च–पाठः । २ 'अन्तरायः' इत्यधिको ग–पाठः । ३ 'मूलप्रकृतिबन्धितना(?)-भिसम्बन्ध' इति च–पाठः । ४ 'जानन्नपि' इति च–पाठः । ५ 'मूर्च्छित' इति ङ–पाठः ।

स्त्री-वस्त्र-शयना-ऽऽसन-भाजना-दिरूपो भोगः। पुनः पुनरुपभुज्यते हि सः। पौनःपुन्यं चोपशब्दार्थः। स सम्भवन्नपि यस्य कर्मण उदयान्न परिभुज्यते तत् कर्म उपभोगान्तराyाख्यम्। वीर्यमुत्साहः चेष्टा शक्तिरिति पर्यायाः। तत्र कस्यचित् कल्पस्याप्युपचितवपुषोऽपि यूनोऽप्यल्पप्राणता यस्य कर्मण उदयात् स वीर्यान्तराय इति। उक्तलक्षणस्य वीर्यान्तरायस्य सामस्त्येनोदयः पृथिव्यप्तेजोवायुवनस्पतिषु क्षयोपशमजनिततारतम्यात्। द्वीन्द्रियादेस्तु वृद्धिं वीर्यस्य यावद्धि चरमसमयच्छद्मस्थ[1] इति प्रकर्षापकर्षविशेषोपलब्धेः। उत्पन्नकेवले तु भगवति सर्ववीर्यान्तरायक्षयः। तत्र तु निरतिशयं वीर्यमिति। अत्र चाष्टानामपि कर्मणामुत्तरप्रकृतीनां विंशत्युत्तरं प्रकृतिशतं भवति–बन्धं प्रतीत्य एतावत्यः प्रकृतयो बध्यन्ते, सम्यक्त्वसम्यग्मिथ्यात्वयोर्बन्धो नास्ति। मिथ्यादर्शनपुद्गलानामेव तथा परिणामात्[2], ताभ्यां सह द्वाविंशत्युत्तरं प्रकृतिशतम्। ताश्चेमाः—ज्ञानावरणं पञ्चभेदम् अन्तरायं च, दर्शनावरणं नवधा, वेद्यं द्विधा गोत्रं च, मोहोऽष्टाविंशतिभेदः, आयुश्चतुर्धा, नामकर्मणि गतिश्चतुर्विधा आनुपूर्वी च, जातिनाम पञ्चविधं, शरीरनाम च, बन्धनसङ्घातनाम्नोः शरीरनामान्तर्गतत्वान्न प्रकृतिगणना, संस्थाननाम षोढा संहननं च, अङ्गोपाङ्गं त्रिधा, विहायोगतिर्द्विधा, वर्णगन्धरसस्पर्शागुरुलघूपघातपराघातोच्छ्वासातपोद्योतत्रसस्थावरबादरसूक्ष्मपर्याप्तापर्याप्तप्रत्येकशरीरसाधारणशरीरस्थिरास्थिरशुभाशुभसुभगदुर्भगसुस्वरदुःस्वरादेयानादेययशोनामायशोनामनिर्माणनामतीर्थकरनामान्येकभेदानि भवन्ति ॥ १४ ॥

इत्थं प्रकृतिबन्धनिरूपणमभिधाय स्थितिबन्धमभिधेयतयोपक्रममाण आह—

भा०—उक्तः प्रकृतिबन्धः। स्थितिबन्धं वक्ष्यामः।

टी०—उक्तः प्रकृतिबन्धः। स्थितिबन्धं वक्ष्याम इति। प्रकृतिबन्धो यथावदभिहितः। सम्प्रति स्थितिबन्धमभिधास्याम इति प्रतिजानीते भाष्यकारः। तदभिधित्सया चेदमाह—

## सूत्रम्—आदितस्तिसृणामन्तरायस्य च त्रिंशत्सागरोपमकोटीकोट्यः परा स्थितिः ॥ ८–१५ ॥

सूत्रगतशब्दप्रयोजनानि

टी०—आदित इत्यादि सूत्रम्। आदावादितः औपसंख्यानिकस्तसिः। आद्यादिभ्यस्तसिर्वाच्यः। तिसृवचनमन्यमूलप्रकृतिव्युदासार्थम्। ततश्चान्यप्रकृत्यसम्प्रत्ययेऽन्तरायवचनमन्तरस्थित्यविलङ्घनार्थम्। सामान्यस्थित्यर्थमित्यर्थः। चशब्देनान्तरायस्य समुच्चयः। सागरकोटीनां च कोट्यः। परेति प्रकृष्टा, मध्यमजघन्यस्थितिनिरासः। स्थितिवचनं प्रतिज्ञातोपसंहारार्थम्। आदितस्तिसृणामित्यादिभाष्येणामुमर्थं प्रतिपादयति—

1 'समयस्य' इति च–पाठः। 2 'परिणते.' इति ङ–च–पाठः।

भा०—आदितस्तिसृणां कर्मप्रकृतीनां ज्ञानावरण-दर्शनावरण-वेद्यानाम् अन्तरायप्रकृतेश्च त्रिंशत् सागरोपमकोटीकोट्यः परा स्थितिः ॥ १५ ॥

टी०—ज्ञानदर्शनावरणवेद्यानामन्तरायस्य चैषा स्थितिः—बन्धकालात् प्रभृति यावदशेषं निर्जीर्णमित्येष स्थितिकालः । एवमासां चतसृणां मूलप्रकृतीनां उत्कृष्टः स्थितिबन्ध उक्तः । वर्षसहस्रत्रितयं चाबाधा कालः । बाधाकालस्तु यत्प्रभृति ज्ञानावरणादिकर्म उदयावलिकाप्रविष्टं यावच्च निःशेषमुपक्षीणं तावद् भवति, यच्चोदयावलिकां प्रविशति बन्धकालादारभ्य त्रिषु वर्षसहस्रेष्वतीतेषु, स त्वबाधाकालो यस्माद् कर्म नानुभूयते तावन्तं कालमिति ॥ १५ ॥

ज्ञानावरणीयादिप्रकृतीनामबाधाकालः

अथ मोहनीयकर्मप्रकृतेः कियान् स्थितिबन्ध इति तदभिधानायाह—

सूत्रम्—सप्ततिर्मोहनीयस्य ॥ ८–१६ ॥

भा०—मोहनीयस्य कर्मप्रकृतेः सप्ततिसागरोपमकोटीकोट्यः परा स्थितिः ॥ १६ ॥

टी०—सप्ततिर्मोहनीयस्येति । सागरोपमकोटीकोट्य इत्यनुवर्तते । ताः सप्ततिसंख्याः सम्बध्यन्ते । मोहनीयेत्यादिना एतदेव स्पष्टतरं विवृणोति, प्रतिपादितार्थं चैतद् भाष्यमिति । अस्यास्त्वबाधाकालः सप्त वर्षसहस्राणि । ततःपरं बाधाकालो यावत्तत् क्षीणमिति ॥ १६ ॥

नामगोत्रमूलप्रकृत्योः स्थितिप्रतिपादनायाह—

सूत्रम्—नामगोत्रयोर्विंशतिः ॥ ८–१७ ॥

भा०—नामगोत्रप्रकृत्योर्विंशतिः सागरोपमकोटीकोट्यः परा स्थितिः॥१७॥

टी०—नामकर्मणो गोत्रकर्मणश्च विंशतिः सागरोपमकोटीकोट्यः परा स्थितिरिति । नामगोत्रेत्यादिना भाष्येण स्पष्टीकृत एषोऽर्थः । अस्याश्चाबाधाकालो वर्षसहस्रद्वयमिति ॥ १७ ॥

आयुष्कोत्कृष्टस्थितिप्रतिपादनायाह—

सूत्रम्—त्रयस्त्रिंशत् सागरोपमाण्यायुष्कस्य ॥ ८–१८ ॥

भा०—आयुष्कप्रकृतेस्त्रयस्त्रिंशत् सागरोपमाणि परा स्थितिः ॥ १८ ॥

टी०—त्रयस्त्रिंशदित्यादि । त्रयस्त्रिंशत् सागरोपमाणि पूर्वकोटित्रिभागाभ्यधिकानि । त्रयस्त्रिंशद्वचनात् कोटीकोट्य इति निवृत्तम् । पूर्वकोटित्रिभागश्चाबाधाकालः । आयुष्कप्रकृतेरित्यादि भाष्यं सुज्ञानमेव ॥ १८ ॥

१ 'एवमेतासां' इति च-पाठः । २ '०प्रकृते०' इति ग-पाठः । ३ 'बाधाकालस्य०' इति ग-पाठः ।

मूलप्रकृतीनामुक्तः सामान्येन स्थितिबन्ध उत्कृष्टः । सम्प्रत्युत्तरप्रकृतीनां प्रत्येकमुत्कृष्टो जघन्यश्चोच्यते सूत्रक्रमाश्रयणेन[1] । तत्रासद्वेद्यप्रकृतेस्त्रिंशत् सागरोपमकोटीकोट्यः स्थितिः परा, जघन्या सागरोपमस्य सप्तभागास्त्रयः पल्योपमस्यासङ्ख्येयभागेन न्यूनाः, सद्वेद्यस्य पञ्चदश सागरोपमकोटीकोट्य उत्कृष्टा स्थितिः, पञ्चदशवर्षशतान्यबाधा, जघन्या द्वादशमुहूर्ता, अबाधाऽन्तर्मुहूर्तम् ।

सातासातयोः परापरौ बन्धौ

अत्रैतत्सूत्रमाह—

## सूत्रम्—अपरा द्वादशमुहूर्ता वेदनीयस्य ॥ ८–१९ ॥

**भा०—वेदनीयप्रकृतेरपरा द्वादशमुहूर्ता स्थितिरिति ॥ १९ ॥**

सूत्रपाठभेदः

टी०—वेदनीयप्रकृतेरित्यादिभाष्यम् । अपरेत्युत्कृष्टापेक्षया जघन्योच्यते । अपरा जघन्येत्यर्थः । कथं मध्यमा नेति चेत् व्याख्याविशेषाददोषः । अधरेति वा सूत्रपाठः । अपरेति(?) स्पष्टमेव सूत्रमधीयते–जघन्या द्वादशमुहूर्तेति ॥ १९ ॥

सम्प्रति नामगोत्रयोरुत्तरप्रकृतीनां स्थितिरुच्यते । तत्र नामप्रकृतीनां तावत् मनुष्यगतिमनुष्यगत्यानुपूर्व्योरुत्कृष्टः स्थितिबन्धः पञ्चदश सागरोपमकोटीकोट्यः पञ्चदशवर्षशतान्यबाधा, नरकगतिः तिर्यग्गतिरेकेन्द्रिया जातिः पञ्चेन्द्रियजातिः औदारिक-वैक्रिय-तैजस-कार्मणशरीराणि हुण्डसंस्थानं औदारिकाङ्गोपाङ्गं वैक्रियाङ्गोपाङ्गं च वज्रसंहननं वर्णगन्धरसस्पर्शनरकानुपूर्वीतिर्यगानुपूर्व्यगुरुलघूपघातपराघातोच्छ्वासातपोद्योताप्रशस्तविहायोगतित्रसस्थावरबादरपर्याप्तप्रत्येकशरीरास्थिरासुभगदुर्भगदुःस्वरानादेयायशःकीर्तिनिर्माणनाम्नामुत्कृष्टस्थितिर्बन्धो[2] विंशतिः सागरोपमकोटीकोट्यः वर्षसहस्रद्वयमबाधा । देवगतिर्देवगत्यानुपूर्वी समचतुरस्रसंस्थानं वज्रर्षभनाराचसंहननं प्रशस्तविहायोगतिस्थिरशुभसुभगसुस्वरादेययशःकीर्तीनां दश सागरोपमकोटीकोट्यः परा स्थितिः दश[3] वर्षशतान्यबाधा । न्यग्रोधसंस्थानवज्रनाराचसंहननयोर्द्वादशसागरोपमकोटीकोट्यः परा स्थितिः द्वादश वर्षशतान्यबाधा । सातिसंस्थाननाराचसंहननयोश्चतुर्दशसागरोपमकोटीकोट्य उत्कृष्टा स्थितिः, चतुर्दश वर्षशतान्यबाधा । कुब्जसंस्थानार्धनाराचसंहननयोरुत्कृष्टा स्थितिः षोडश सागरोपमकोटीकोट्यः षोडश वर्षशतान्यबाधा । वामनसंस्थानकीलिकासंहननद्वीन्द्रियत्रीन्द्रियचतुरिन्द्रियजातीनां सूक्ष्मापर्याप्तसाधारणनाम्नां चोत्कृष्टा स्थितिरष्टादश सागरोपमकोटीकोट्यः, अष्टादश वर्षशतान्यबाधा, आहारकशरीर एतदङ्गोपाङ्गतीर्थकरनाम्नामुत्कृष्टा स्थितिः सागरोपमकोटीकोटेरन्तः[4] अबाधा

नामकर्मोत्तरप्रकृतीनामुत्कृष्टा स्थितिरबाधा च

---

१ 'श्रयणात्' इति ग-पाठः । २ 'रुक' इति ङ-पाठः । ३ 'स्थितिबाधा' इति च-पाठः । ४ 'द्वादश' इति च-पाठः ।

त्वन्तर्मुहूर्तम् । एवमेता नामकर्मणः सप्तषष्टिरुत्तरप्रकृतयः । शेषकर्मणां त्रिपञ्चाशत् । एवं च विंशत्युत्तरं प्रकृतिशतं भवति ॥

सम्प्रति नामप्रकृतीनामेव जघन्या स्थितिरुच्यते । मनुष्यतिर्यग्गतिपञ्चेन्द्रियजातिरौदारिकतैजसकार्मणानि संस्थानषट्कं औदारिकाङ्गोपाङ्गं संहननषट्कं वर्णगन्धरसस्पर्शाः तिर्यग्मनुष्यानुपूर्व्यौ अगुरुलघूपघातपराघातोच्छ्वासातपोद्योताः प्रशस्ताप्रशस्ते विहायोगती त्रसस्थावरशुभाशुभसुभगदुर्भगसुस्वरदुःस्वरसूक्ष्मबादरपर्याप्तापर्याप्तप्रत्येकसाधारणशरीरस्थिरास्थिराऽऽदेयानादेयनिर्माणायशसां सागरोपमस्य द्वौ सप्तभागौ जघन्या स्थितिः पल्योपमासङ्ख्येयभागेन न्यूनौ, अबाधा त्वन्तर्मुहूर्तकालः, देवनरगती आद्यं जातिचतुष्कं वैक्रियशरीरं एतदङ्गोपाङ्गं नरकदेवानुपूर्व्योर्णां जघन्या स्थितिः सागरोपमसहस्रस्य द्वौ सप्तभागौ पल्योपमासंख्येयभागभागेन न्यूनौ, अबाधाकालोऽन्तर्मुहूर्तः । आहारकशरीरे तदङ्गोपाङ्गतीर्थकरनाम्नां जघन्या स्थितिः सागरोपमकोटीकोट्यन्तः, अबाधा त्वन्तर्मुहूर्तकालः । यशःकीर्तेर्जघन्या स्थितिरष्टौ मुहूर्ताः, अबाधा त्वन्तर्मुहूर्तकाल इति, अत्र सूत्रोपनिबन्धः कृतो वाचकेनेति, इतरा तु मध्यमा बहुवक्तव्यत्वादुपेक्षिता ।

(नामप्रकृतीनां जघन्या स्थितिरबाधा च)

## सूत्रम्—नामगोत्रयोरष्टौ ॥ ८–२० ॥

**भा०—नामगोत्रप्रकृत्योरष्टौ मुहूर्ता अपरा स्थितिर्भवति ॥ २० ॥**

**टी०**—नामगोत्रप्रकृत्योरित्यादि भाष्यं गतार्थम् । एवमेतासां नामप्रकृतीनां सप्तषष्टिसंख्यानामुत्कृष्टा[1] जघन्या च स्थितिरुक्तेति । सम्प्रति गोत्रकर्मण उत्तरप्रकृत्योर्जघन्या स्थितिरभिधीयते । नीचैर्गोत्रस्य जघन्या स्थितिः सागरोपमस्य द्वौ सप्तभागौ पल्योपमासंख्येयभागेन न्यूनौ, अबाधा त्वन्तर्मुहूर्तकालः । उच्चैर्गोत्रस्थितिर्जघन्येनाष्टौ मुहूर्ताः, अबाधा त्वन्तर्मुहूर्तकाल इति, अत्रापि सूत्रानुप्रवेशः ॥ २० ॥

पञ्चानां ज्ञानावरणप्रकृतीनां चक्षुरादिदर्शनावरणप्रकृतिचतुष्टय्याः पञ्चानां चान्तरायप्रकृतीनां जघन्या स्थितिरन्तर्मुहूर्तकालः, अबाधाप्यन्तर्मुहूर्त एव । दर्शनावरणे निद्रापञ्चकस्य जघन्या स्थितिः सागरोपमस्य त्रयः सप्तभागाः पल्योपमासङ्ख्येयभागेन न्यूनाः । मोहनीयप्रकृतेः मिथ्यात्वस्य सप्त भागाः सागरोपमस्य जघन्या स्थितिः पल्योपमासङ्ख्येयभागेन न्यूनाः । अनन्तानुबन्ध्यप्रत्याख्यानप्रत्याख्यानावरणकषायाणां द्वादशानां चत्वारो भागाः सागरोपमस्य[2] जघन्या स्थितिः पल्योपमासङ्ख्येयभागन्यूनाः । संज्वलनक्रोधस्य जघन्या स्थितिर्मासद्वयम्, अन्तर्मुहूर्तश्चाबाधा । संज्वलनमानस्य जघन्या, स्थितिर्मासः अन्तर्मुहूर्तमबाधा । संज्वलनमायाप्रकृतेर्जघ-

(ज्ञानावरणादीनां उत्तरप्रकृतीनां जघन्या स्थितिरबाधा च ।)

१ 'षष्टेरुत्कृष्ट' इति च–पाठः । २ 'चत्वारो भागाः सागरोपमस्य' इति च–प्रतौ नास्ति ।

न्याऽर्धमासः, अबाधा अन्तर्मुहूर्तकालः। संज्वलनलोभस्यान्तर्मुहूर्तकाला स्थितिर्जघन्या, अबाधाप्यन्तर्मुहूर्त एव। पुंवेदस्य जघन्या स्थितिरष्टौ वर्षाणि, अबाधा अन्तर्मुहूर्तकालः। हास्यरत्यरतिभयशोकजुगुप्सास्त्रीनपुंसकवेदानां जघन्या स्थितिः सागरोपमभागौ द्वौ पल्योपमासङ्ख्येयभागन्यूनौ, अन्तर्मुहूर्तश्चाबाधा। देवनारकायुषां जघन्या स्थितिः दश वर्षसहस्राणि, अबाधा अन्तर्मुहूर्तकालः। तिर्यग्मनुष्यायुषां जघन्या स्थितिः क्षुल्लकभवग्रहणम्, अबाधा अन्तर्मुहूर्तकाल इति ॥

एवमेतेषां ज्ञानदर्शनावरणमोहायुषां कर्मणां यत्रान्तर्मुहूर्तकाला स्थितिस्तत्रेदं सूत्रमुपतिष्ठते—

## सूत्रम्—शेषाणामन्तर्मुहूर्तम् ॥ ८-२१ ॥

भा०—वेदनीय-नाम-गोत्रप्रकृतिभ्यः शेषाणां ज्ञानावरण-दर्शनावरण-मोहनीया-ऽऽयुष्का-ऽन्तरायप्रकृतीनामपरा स्थितिरन्तर्मुहूर्तं भवति ॥ २१ ॥

टी०—वेदनीयेत्यादि भाष्यं सुगममिति।

भा०—उक्तः स्थितिबन्धः। अनुभावबन्धं[1] वक्ष्यामः ॥

टी०—सम्प्रत्यनुभावबन्धविवक्षया आह–उक्तः स्थितिबन्धः। अनुभावबन्धं वक्ष्याम इति प्रतिज्ञातं तद्विस्तरणायाह—

## सूत्रम्—विपाकोऽनुभावः ॥ ८-२२ ॥

टी०—विपाकोऽनुभाव इति। विपचनं विपाकः–उदयावलिकाप्रवेशः। कर्मणां विशिष्टो नानाप्रकारो वा पाको विपाकः–अप्रशस्तपरिणामानां तीव्रः, शुभपरिणामानां मन्दः। यथोक्तकर्मविशेषानुभवनं अनुभावः "कृत्यल्युटो बहुलं" (पा० अ० ३, पा० ३, सू० ११३) इति वचनात्। अथवाऽऽत्मनाऽनुभूयते येन करणभूतेन बन्धेन[2] सोऽनुभावबन्धः। "करणाधिकरणयोश्च" (पा० अ० ३, पा० ३, सू० ११७) इति घञ्। अनुशब्दस्य समुदायार्थं प्रदर्शनम्। अनुगतो वा भावोऽनुभाव इति प्रादिसमासः क्रियालोपी। सर्वासां हि प्रकृतीनां फलं विपाकोदयानुभावबन्धाज्जीवस्यानुसमयं कर्मानुभवनमिच्छाऽनिच्छापूर्वकम्। तद्यथा-ज्ञानावरणस्य फलं ज्ञानाभावः दर्शनावरणस्यापि फलं दर्शनशक्त्युपरोध इति। एवं सर्वकर्मणां स्वकार्यबन्धोऽनुभूतिरिति।

भा०—सर्वासां प्रकृतीनां फलं विपाकोदयोऽनुभावो भवतीति[3]। विविधः पाको विपाकः, स तथा चान्यथा चेत्यर्थः। जीवः कर्मविपाकमनुभवन् कर्मप्रत्ययमेवानाभोगवीर्यपूर्वकं कर्मसङ्क्रमं करोति।

टी०—सर्वासां प्रकृतीनामित्यादि भाष्यम्। सर्वासामिति कार्त्स्न्यग्रहणम्। कर्मबन्धस्य फलं विपाकः तस्योदयोऽनुभाव इति पर्यायकथनेन व्याख्या भवति। वेद्यते अवश्यंभावी विपाकः सर्वस्य कर्मणः। विशब्दार्थमाचष्टे–विविधो–नानाप्रकारः पाको विपाक

[1] 'अनुभागबन्ध' इति ग-पाठः। [2] 'बन्धनं' इति ग-पाठः। [3] 'भवति' इति घ-पाठः।

उच्यते। तद्द्वैविध्यं [1]निरूपयति—तथा चान्यथा चेत्यर्थः। यथा येनाध्यवसायप्रकारेण यादृग्भावं बद्धं कर्म तत् तथा तेनैव प्रकारेण विपच्यते अन्यथा च, प्रकारान्तरेणापीत्यर्थः। अनुभावो विपाको रस इति पर्यायाः। स च तीव्रमन्दमध्यमावस्थाभेदः शुभश्चैकैकः। तत्र कदाचिच्छुभमप्यशुभरसतयाऽनुभूयते, अशुभं च शुभरसतयेति वैविध्यार्थः। तथा चाह—

"तासामेव विपाकनिबन्धो यो नामनिर्वचनभिन्नः।
स रसोऽनुभावसंज्ञस्तीव्रो मन्दोऽथ मध्यो वा॥ १॥"

तत्र चाष्टप्रकारे कर्मणि किञ्चित् कर्म पुद्गलेष्वेव विपच्यते, तत्पुद्गलान् परिणमयति [2]नानाप्रकारेण, किञ्चिद् भवविपाकि प्राप्तजन्मन आत्मनः शरीरवतो विपच्यते। अपरं तु क्षेत्रविपाकि, क्षेत्रान्तरे विपच्यत इत्यर्थः। अन्यज्जीवविपाकीति, जीव एव विपच्यते इति। एवं चतुर्धा विपच्यते। तथा चाह—

केषाञ्चित् कर्मणां पुद्गलादिषु विपचनम्

"संहननं संस्थानं वर्णस्पर्शरसगन्धनामानि।
अङ्गोपाङ्गानि तथा शरीरनामानि सर्वाणि॥ १॥
अगुरुलघुपराघातोपघातनामातपोद्योतनामानि।
प्रत्येकशरीरस्थिरशुभनामानीतरैः सार्धम्॥ २॥
प्रकृतय एताः पुद्गलपाका भवपाकमुक्तमायुष्कम्।
क्षेत्रफलमानुपूर्वी जीवविपाकाः प्रकृतयोऽन्याः॥ ३॥"

कथं पुनरन्यथा बन्धोऽन्यथा विपाकरूपो रस इति प्रतिपादनायाह—जीवः कर्मविपाकमनुभवन्नित्यादि। स्थित्युत्पत्तिव्ययपरिणाम्यात्मा कर्मणो ज्ञानावरणादिकस्य विपाकं भुञ्जानो रसमनुभवन्-वेदयमानः प्रकृतीनां सङ्क्रमं करोति। स च सङ्क्रमः कर्मप्रत्ययः—कर्महेतुक एव, निर्निमित्तो यः स्यादनाभोगो हि ज्ञानावरणोदयः। अनाभोगवीर्यपूर्वकर्मसङ्क्रमोऽभिसम्बध्यते। करोति क्रियते आभुजतः—अध्यवस्यतश्चेष्टाऽऽत्मनो या तदाभोगवीर्यमनाभुञ्जतोऽनध्यवस्यतः सामर्थ्यं विशिष्टक्रियापरिणामः अनाभोगवीर्यं तत्पूर्वकं—तद्द्वारकं कर्मसङ्क्रमं विधत्ते। स पुनः सङ्क्रमः कासु प्रकृतिषु कासां वा प्रकृतीनामित्याह—

**भा०—उत्तरप्रकृतिषु सर्वासु मूलप्रकृत्यभिन्नासु, न तु मूलप्रकृतिषु सङ्क्रमो विद्यते, बन्धविपाकनिमित्तान्यजातीयकत्वात्।**

टी०—उत्तरप्रकृतिष्वित्यादि। मूलप्रकृत्यपेक्षया उत्तरप्रकृत्यभिधानम्। अष्टौ मूलप्रकृतयो ज्ञानावरणादिकाः। उत्तरप्रकृतयस्तु पञ्चभेदं ज्ञानावरणमित्यादिकाः। तत्रोत्तरप्रकृतीनामेवोत्तरप्रकृतिषु सङ्क्रमः। सर्वास्वित्युत्सर्गः। कासाञ्चिन्न भवतीत्यपीत्यर्थः। [3]अपवदिष्यते चोपरिष्टात्। पञ्चप्रकारं ज्ञानावरणं चक्षुर्दर्शनावरणादिप्रकृतिष्वप्यविशेषेण

१ 'दर्शयति' इति ग-पाठः। २ 'नानाऽऽ-' इति च-पाठः। ३ 'अपि वदिष्यते' इति ङ-पाठः।

सर्वासु सङ्क्रामतीति प्राप्तम्, अत आह—मूलप्रकृत्यभिन्नास्विति। मूलप्रकृतिभ्यः अभिन्नासु—अपृथग्भूतासु—मूलप्रकृतीरजहतीषु। यथा—मूलप्रकृतिरेका ज्ञानावरणमिति। उत्तरप्रकृतयः पञ्च। तत्रैताः पञ्चाप्यन्योन्यमेव सङ्क्रामन्ति, नान्यमूलप्रकृत्युत्तरप्रकृतिषु। एनमेवार्थं सावधारणं दर्शयति—न तु मूलप्रकृतिषु सङ्क्रमो विद्यत इति। तुशब्दोऽवधारणार्थः। नैव मूलप्रकृतिषु सङ्क्रमोऽस्ति। नहि ज्ञानावरणं दर्शनावरणे सङ्क्रामति, नापि दर्शनावरणं ज्ञानावरणे, इत्येवमन्यत्रापि योज्यम्। अमुमेवार्थं युक्त्या प्रतिपादयन्नाह—बन्धविपाकनिमित्तान्यन्यजातीयानीति। भिन्नजातीयानीत्यर्थः। अन्यद् बन्धनिमित्तं ज्ञानावरणस्य तत् प्रदोषनिह्नवादि। अन्यदसद्वेदनीयादेर्दुःखशोकादि ज्ञानदर्शनावरणयोर्बन्धनिमित्तमभिन्नमपि सदाशयविशेषाद् भेदमुपाश्नुत एव। विशेषग्राहि ज्ञानावरणम्। दर्शनावरणं तु सामान्यमात्रग्राहि, सामान्योपयोगमेवान्तर्धत्ते। एवं बन्धनिमित्तभेदाद् विपाकनिमित्तभेदाच्च भिन्नासु मूलप्रकृतिषु सङ्क्रमो नास्ति। पूर्वं सर्वास्वित्युक्तं यत् तत् सम्प्रत्यपोद्यते—

सङ्क्रमस्थानम्

भा०—उत्तरप्रकृतिषु च दर्शनचारित्रमोहनीययोः सम्यग्मिथ्यात्ववेदनीयस्यायुष्कस्य च जात्यन्तरानुबन्धविपाकनिमित्तान्यजातीयकत्वादेव सङ्क्रमो न विद्यते ॥

टी०—उत्तरप्रकृतिष्वित्यादि। कासाञ्चित् उत्तरप्रकृतीनामपि कासुचित् प्रकृतिषु सङ्क्रमो नास्तीति दर्शयति। तत्र दर्शनमोहश्चत्वारोऽनन्तानुबन्धिनः क्रोधादयो मिथ्यात्वं सम्यग्मिथ्यात्वं सम्यक्त्वमिति। शेषश्चारित्रमोहोऽप्रत्याख्यानादिः। तत्र दर्शनमोहो न सङ्क्रामति चारित्रमोहे नापि चारित्रमोहो दर्शनमोहे इति। सम्यग्मिथ्यात्वस्यासत्यपि बन्धे सम्यक्त्वेऽस्ति सङ्क्रमः। सम्यक्त्वं तु सम्यग्मिथ्यात्वे न सङ्क्रमति। तथा सम्यक्त्वसम्यग्मिथ्यात्वयोर्मिथ्यात्वं सङ्क्रामयति। आयुष्कस्य च नारक-तिर्यङ्-मनुष्य-देवभेदस्य परस्परं नास्ति सङ्क्रम इति। उक्तं चात्र—

"मूलप्रकृत्यभिन्नाः संङ्क्रमयति गुणत उत्तराः प्रकृतीः।
नन्वात्माऽमूर्तत्वादध्यवसानप्रयोगेण ॥ १ ॥
शिथिलयति दृढं बद्धं शिथिलं द(द्र)ढयति च कर्म ननु जीवः।
उत्कृष्टाश्च जघन्याः स्थितीर्विपर्यासयति चापि ॥ २ ॥"

सङ्क्रमणस्थित्युदीरणात्रयस्य दृष्टान्तत्रयोपप्रदर्शनायाह—

"तारीकरणं ताम्रस्य शोषणस्तेमने मृदः क्रमशः।
आम्रपरिपाचनं वा काले तेषूपदृष्टान्ताः ॥ ३ ॥"

---

१ 'रणकं' इति ङ-च-पाठः। २ 'न्तर्वर्तते' इति ङ-पाठः। ३ 'सङ्क्रम इति' इति क-ग-पाठः। ४ 'प्रकृतयः' इति ङ-पाठः। ५ 'तेष्वेव' इति ङ-पाठः, 'तेष्वत्र' इति तु ग-पाठः।

यथासङ्ख्यमभिसम्बन्धः कार्यः।

[1]" अनुभावांश्च विपर्यासयति तथैव प्रयोगतो जीवः।
तीव्रान् वा मन्दान् वा स्वासु प्रकृतिष्वभिन्नासु ॥ ४ ॥
यद् यद् वा मन्दं सत्क्षारीक्रियते हरिद्रया चूर्णम्।
वाताऽऽतपादिभिश्च क्षारं मन्दीक्रियेत यथा ॥ ५ ॥
तीव्रोऽनुभावयोगो भवति हि मिथ्यात्ववेदनीयस्य।
सम्यक्त्वे त्वतिमन्दो मिश्रे मिश्रोऽनुभावश्च ॥ ६ ॥ "

अत्र प्रतिज्ञातेऽर्थे युक्तिमाह—जात्यन्तरानुबन्धविपाकनिमित्तान्यजातीयकत्वादेव सङ्क्रमो न विद्यते इति। जात्यन्तरस्यानुबन्धनमनुवर्तनं यः करोति पाकस्तस्य यन्निमित्तं तदन्यजातीयकं भिन्नम्। तथाच दर्शनमोहनीयादीनामास्रवा भिन्ना एव पठिताः प्रवचन इति॥

भा०—अपवर्तनं तु सर्वासां प्रकृतीनां विद्यते। तदायुष्केण व्याख्यातम् (अ० २, सू० ५२) ॥ २२ ॥

टी०—अपवर्तनं त्वित्यादि। सर्वासामेव प्रकृतीनां सम्भवत्यपवर्तनं। द्राघीयस्याः कर्मस्थितेरल्पीकरणमपवर्तनम्। सर्वासामेव प्रकृतीनां तत् सम्भवत्यध्यवसायविशेषात्। तच्च प्राग् व्याख्यातमेवेति तत्प्रतिपादनायाह—तदायुष्केण व्याख्यातमिति। तदपवर्तनमायुष्ककर्मणा द्वितीयेऽध्याये (५२तमे सूत्रे) व्याख्यातमिति ॥ २२ ॥

विपाकोऽनुभाव इति स्वरूपमात्रमाख्यातम्। सम्प्रति तु यथा विपच्यते कर्म तथा प्रतिपादयन्नाह—

## सूत्रम्—स यथानाम ॥ ८-२३ ॥

टी०—स विपाक उक्तलक्षणो यथानाम भवति। यथाशब्देन वीप्सावाचिनाऽव्य-
यीभावः। यद् यस्य नाम संज्ञान्तरं कर्मणस्तत् तथा नामानुरूपमेव विपच्यते, यस्मात् ज्ञानाव-
रणादीनां सविकल्पानां प्रत्येकमन्वर्थनिर्देशः। ज्ञानमाव्रियते येन तत् ज्ञानावरणम्। यद् वि-
पच्यमानं ज्ञानाभावे विवर्तत इति। इत्थं दर्शनावरणमपि। सामान्योपयोगोपरोध इति-
यावत्। सुखानुभवः सद्वेद्यम्। दुःखानुभवोऽसद्वेद्यम्। तथा दर्शनमोहश्चारित्रमोहश्च। दर्शनं
तत्त्वार्थश्रद्धानलक्षणं चारित्रं मूलोत्तरगुणभेदं तन्मोहयतीति। आयुर्जीवनं–प्राणधारणं यदु-
दयाद् भवति तदायुः। तांस्तान् गत्यादीन् भावान् प्रशस्तानप्रशस्तांश्च नामयति–प्रापयतीति
नाम। यदुदयाद् गतिनामाद्यनुभवतीत्यर्थः। तथा प्रतिभेदमपि गतिं नामयतीति गतिनाम।
एवं जातिनामाद्यपीति। गोत्रमिति। 'कै गै शब्दे' (पा० धा० ७१६–७१७) गोत्रं संशब्दनं

१ 'तीव्रमन्दान्' इति च-पाठः। २ 'सत्कारी' इति छ-पाठः।

गीयते यस्योदयादुच्चैरयं पूज्य उग्रो भोज इक्ष्वाकुरिति तदुच्चैर्गोत्रम्। तथा यदुदयाद् दरिद्रः अप्रज्ञातो गर्हितश्चाण्डालादिस्तन्नीचैर्गोत्रम्। दानादीनां विघ्नमुदयाद् यस्य सोऽन्तराय इति।

एनमेवार्थं भाष्येण प्रतिपादयति—

भा०—सोऽनुभावो गतिनामादीनां यथा नाम विपच्यते ॥ २३ ॥

टी०—सोऽनुभाव इति। अनन्तरप्रस्तुतस्य विपाकस्य तच्छब्देन परामर्शः। अनुभावः कर्मणां सामर्थ्यम्। गतिनामादीनामिति यद् ग्रहणं तदशेषकर्मसाधारणताप्रदर्शनार्थम्। ज्ञानावरणाद्युदयो भवति गतिजातिशरीरादिवृत्तेर्जीवस्य। अन्यथा त्वसम्भव एवेति। सप्तम्यर्थे षष्ठी। गतिनामादीनां वा सर्वकर्मणां स विपाको भवति, यथा नाम विपच्यते-विपाकमुदयमासादयतीतियावत् ॥ २३ ॥

यदि विपाकोऽनुभावः प्रतिज्ञायते ततस्तत्कर्मानुभूतं सत् किमावरणवदवतिष्ठते, उत निःसारं सत् प्रच्यवते ? उच्यते-पीडानुग्रहावात्मनः प्रदायाभ्यवहृतौ दानादिविकारवन्निवर्तते अवस्थानहेत्वभावात्। अस्यार्थस्य प्रतिपादनाय सूत्रम्—

## सूत्रम्—ततश्च निर्जरा ॥ ८-२४ ॥

टी०—ततश्चेति विरामार्थत्वात् पञ्चमी। ततो विपाकात् कर्मणो विरमणं परिशटनं भवति ॥

भा०—ततश्चानुभावाद् कर्मनिर्जरा भवति। निर्जरा क्षयो वेदनेत्यनर्थान्तरम्, अत्र चशब्दो हेत्वन्तरमपेक्षते। तपसा निर्जरा चेति वक्ष्यते (अ० ९ सू० ३)॥ २४॥

टी०—ततश्चानुभावादित्यादि भाष्यम्। तस्मादनुभावाद् विपाकलक्षणात् कर्मणो ज्ञानावरणादेर्निर्जरा परिपतनमात्मप्रदेशेभ्यो भवति। निर्जराशब्दार्थमाचष्टे—निर्जरा क्षयो वेदनेति। निर्जरणं निर्जरा, हानिरित्यर्थः। क्षयो-विनाशः कर्मपरिणतेर्विगमः। वेदना रसानुभव आकर्मपरिणामफलपरिणामभोगपरिसमाप्तेः इति धारणा(?) शाटव्यपगमपातप्रच्युत्यादयो निर्जराशब्दार्थाः परिज्ञेयाः। सा च निर्जरा द्विविधा-विपाकजा अविपाकजा वा। विपाक उदयः। उदीरणा त्वविपाकः। तत्राद्या संसारोदधौ परिप्लवमानस्यात्मनः शुभाशुभस्य कर्मणो विपाककालप्राप्तस्य यथायथमुदयावलिकास्रोतसि पतितस्य फलोपभोगादुपजातास्थितिक्षये या निवृत्तिः सा विपाकजा निर्जरा। यत् पुनः कर्माप्राप्तविपाककालमौपक्रमिकक्रियाविशेषसामर्थ्यादनुदीर्णं बलादुदीर्योदयावलिकामनुप्रवेश्य वेद्यते पनसतिन्दुकाम्रफलपाकवत् सा त्वविपाकजा

निर्जराद्वयस्य व्याख्या

१ 'भोग' इति ग-च-पाठः। २ 'दात्रादीना' इति च-पाठ'। ३ 'अन्यथा' इति क-ग-पाठः। ४ 'भवतीति' इति घ-पाठः। ५ 'त्यर्थ' इति घ-पाठः। ६ 'मनुप्रपद्यते' इति ग-पाठः।

निर्जरा। आह च—

" तारीकरणं ताम्रस्य शोषणस्तैमने मृदः क्रमशः।
आम्रपरिपाचनं वा काले तेषूपदृष्टान्ताः ॥ १ ॥ "

यथासङ्ख्यमेते सङ्क्रमस्थित्युदीरणासु योज्याः। अत्र सूत्रे चशब्दो हेत्वन्तरमपेक्षते। विपाकहेतुका निर्जरेत्येको हेतुः। अस्मादन्यो हेतुर्हेत्वन्तरम्। तत्प्रदर्शनायाह—तपसा निर्जरा चेति वक्ष्यते-नवमेऽध्यायेऽभिधास्यते संवराधिकारे ( तृतीयसूत्रे )। तपसा द्वादशप्रकारेण संवरश्च भवति निर्जरा चेति। तपोऽपि निर्जराहेतुरतो निमित्तान्तरसमुच्चयार्थश्चशब्दः। इह चाष्टमे कर्मविरामणार्थं निर्जराग्रहणं, नवमे संवरार्थमिति ॥ २४ ॥

भा०—उक्तोऽनुभावबन्धः, प्रदेशबन्धं वक्ष्यामः ॥

टी०—उक्तोऽनुभावबन्धः। प्रदेशबन्धं वक्ष्याम इति उत्तरसूत्रसम्बन्धग्रन्थः। बन्धचतुष्टयी प्रकृता। ततः तृतीयोऽनुभावबन्ध उक्तः प्रपञ्चेन। सम्प्रति प्रदेशबन्धं वक्ष्याम इति प्रतिजानीते। तत्प्रतिपादनायाह—

**सूत्रम्—नामप्रत्ययाः सर्वतो योगविशेषात् सूक्ष्मैकक्षेत्रावगाढस्थिताः सर्वात्मप्रदेशेषु अनन्तानन्तप्रदेशाः ॥ ८–२५ ॥**

टी०—नामप्रत्यया इति सूत्रम्। अत्राष्टौ प्रश्नाः—कस्य प्रत्ययाः कारणीभूताः, किंप्रत्यया वा पुद्गला बध्यन्त (इति) एकः प्रश्नः १, जीवोऽपि तान् बध्नानः पुद्गलान् किमेकेन दिक्प्रदेशेन बध्नाति, उत सर्वदिक्प्रदेशैरिति ग्रहणमात्रमत्र विवक्षितम् २, सोऽपि बन्धः किं सर्वजीवानां तुल्यः आहोस्वित् कुतश्चिन्निमित्तादतुल्यः ? ३, किंगुणाः केवलाः पुद्गला बन्धास्पदं भवन्ति ४, यत्र चाकाशदेशे व्यवस्थिताः पुद्गलास्तत्रैवावगाढा ये जीवप्रदेशाः किं तेषामेव पुद्गलानां तत्र बन्धः, आहोस्विज्जीवप्रदेशावगाढगगनदेशव्यतिरिक्तप्रदेशवर्तिनोऽपि बध्यन्ते ? ५, किं वा स्थितिपरिणता बध्यन्ते, अथवा गतिपरिणताः ? ६, ते च किमात्मना सर्वप्रदेशेषु अथैकैकदिशे श्लिष्यन्ति ? ७, स्कन्धा वा किंसङ्ख्येयासङ्ख्येयानन्तप्रदेशा बध्यन्ते,उतानन्तानन्तप्रदेशा इति? ८। एषामष्टानां प्रश्नानां क्रमेणाष्टाभिः सूत्रावयवैर्निराकाङ्क्षीकरणं—नामप्रत्ययाः १ सर्वतः २ योगविशेषात् ३ सूक्ष्माः ४ एकक्षेत्रावगाढाः ५ स्थिताः ६ सर्वात्मप्रदेशेषु ७ अनन्तानन्तप्रदेशाः ८ इति ॥

प्रदेशबन्धविचारोऽष्टविधः

भा०—नामप्रत्ययाः पुद्गलाः बध्यन्ते। नाम प्रत्यय एषां ते इमे नामप्रत्ययाः। नामनिमित्ता नामहेतुका नामकारणा इत्यर्थः।

---

१ ' यत्राह ' इति ग–पाठः। २ 'कारणभूताः' इति च–पाठः। ३ 'गाढभाग' इति ग–पाठः। ४ 'पश्यन्ते' इति ग–पाठः।

टी०—**नामप्रत्यया** इत्यादि भाष्यम् । संज्ञानामान्वर्थं सर्वकर्मणामुक्तं ज्ञानावरणाद्यन्तरायपर्यवसानं तस्य प्रत्ययाः—कारणानीति षष्ठीसमासः । न हि तानन्तरेण तदाख्योदयादिसम्भवो मुक्तस्येवात्मनः संसारिणः प्रथमप्रश्नः । एवं द्वितीयविकल्पः किंप्रत्यया वेति द्वितीयभेदाश्रयणेन भाष्यम्—**नाम प्रत्यय एषां ते इमे नामप्रत्यया** इति बहुव्रीहिः, अन्यपदार्थश्च, गतिजात्यादिभेदं नामकर्म । औदारिकशरीरादयो योगाः कर्मणो निमित्ततां प्रतिपद्यन्ते पारम्पर्येण गत्यादयोऽपीत्यतो नामकर्मकारणाः पुद्गला बध्यन्त इति । प्रत्ययशब्दस्य पर्यायशब्दा[ख्याना]ख्यापनायाह—**नामनिमित्ता** इत्यादि । नाम निमित्तं—हेतुः—कारणमेषां ते इमे नामनिमित्तादयः । इतिशब्दः प्रकारवाची । अपरे नामप्रत्यया बन्धननाम व्याचक्षते । नामकर्मण उत्तरप्रकृतिः शरीरनामान्तर्गता बन्धननाम तत्प्रत्ययाः किल पुद्गला इति । तच्च गृहीतगृह्यमाणपुद्गलानामन्यशरीरपुद्गलैर्वा सम्बन्धो यस्य कर्मण उदयाद् भवति, काष्ठद्वयभेदैकध्यकरणे जतुवदिति । अथवाऽयमर्थः—प्रत्याययतीति प्रत्ययः । नाम प्रत्ययः कर्मैषामिति नामप्रत्ययाः नाम्नैव प्रत्याय्यन्ते यादृशाः पुद्गलाः प्रदेशबन्धस्य कारणीभवन्ति । ज्ञानावरणं दर्शनावरणमित्यादि नाम तेन नाम्ना स्वरूपमाख्यायते तेषाम्, ज्ञानावरणसमर्थाः पुद्गला येन बध्यन्ते दर्शनावरणसमर्थाश्चेत्येवमन्यत्रापि योज्यम् । ननु चैकाकारा एव पुद्गलाः समादीयन्ते न तु ज्ञानावरणादिविशिष्टाः केचिद् बहिः सन्तीति ? उच्यते—सत्यमेतत् । वयं त्विदमभिदध्महे—ज्ञानावरणादिकानां सर्वासां मूलप्रकृतीनां कर्मभेदानां सामर्थ्येऽन्ये( ने ? )न योगानां कर्मवर्गणानां ग्रहणमाम्नायते । ततः सामान्यगृहीतानामध्यवसायविशेषात् पृथक्पृथग् ज्ञानावरणादिभेदत्वेन परिणमयत्यात्मेति ॥

भा०—**सर्वतस्तिर्यगूर्ध्वमधश्च बध्यन्ते । योगविशेषात् कायवाङ्मनःकर्मविशेषाच्च बध्यन्ते ।**

टी०—**सर्वत** इति । सर्वासु दिक्षु आत्मावधिकासु व्यवस्थितान् पुद्गलानादत्ते । सप्तम्यन्तात् तसिः । एतत् प्रतिपादयन्नाह—**तिर्यगूर्ध्वमधश्च बध्यन्त** इति । तिर्यगष्टौ काष्ठाः ऊर्ध्वमधश्चैकैकेति । अतः सर्वासु दिक्ष्ववस्थितान् स्कन्धान् लाति, नैकदिक्प्रतिष्ठान्, सर्वजीवप्रदेशैः सर्वजीवप्रदेशस्थानितियावत् ॥ अपरे व्याचक्षते—**सर्वत** इति । सर्वैरात्मप्रदेशैः कर्मपुद्गलान् गृह्णाति । तृतीयान्तात् तसिः । एते चात्मप्रदेशाः शरीरिणो जीवस्य केचिदूर्ध्वं केचिच्चाधस्तादिति, न चास्ति पुनरुक्ततादोषः । सर्वात्मप्रदेशेष्वित्यत्रानन्तानन्तप्रदेशाभिसम्बन्धादिति । नापि सर्वेषां बन्धकानां सम्बन्धस्तुल्यः । कुतः ? **योगविशेषा**दित्याह । आत्मना युज्यत इति योगः

'सर्वतः'पदस्य व्याख्याने मतभेदः

१ 'प्रत्ययाविति' इति ग-पाठः । २ 'नामभेदं' इति ग-पाठः । ३ 'प्रत्याख्यानायाह' इति ग-पाठः । ४ 'यतो बध्यन्ते' इति ग-पाठः । ५ 'मेतत्संदध्महे' इति ग-पाठः, च-पाठस्तु "मपि संदध्महे' । ६ 'सामान्येन' इति ग-पाठः । ७ 'योग्यानां' इति च-पाठः ।

कायादिचेष्टा योगानां विशेषो-भेदः तीव्रमन्दादिकः तस्माद् योगविशेषादतुल्यं बन्धनम्, एतदेवाह—कायवाङ्मनःकर्मयोगाच्च बध्यन्त इति। कायस्य वाचः मनसश्च क्रिया—कर्म अनुष्ठानभाषणचिन्तनादिका तयाऽऽत्मनो योगः—सम्बन्धः। क्रियाक्रियावतोः कथञ्चिद्नन्यत्वात्, तस्य क्रियायोगस्य विशेषस्तीव्रस्तीव्रतरस्तीव्रतम इत्येवं बन्धोऽपि प्रकृष्टादिभेदो मन्तव्यः। किंगुणाः के वेत्यत्राह—

**भा०—सूक्ष्मा बध्यन्ते, न बादराः।**

**टी०—सूक्ष्मा बध्यन्ते, न बादरा इति।** सूक्ष्मशब्दो ह्यापेक्षिकत्वाद् बहुभेदः, परमाणोरारभ्य यावदनन्तप्रदेशाः स्कन्धास्तावदप्यतिसूक्ष्मत्वान्न बन्ध्या भवन्ति। अनन्तानन्तप्रदेशवर्गणायामपि भूयोऽनन्तराशिप्रदेशात् केचिद् ग्रहणयोग्याः केचिन्नेति अतः सूक्ष्मग्रहणम्। एवं क्रमेणौदारिक-वैक्रिया-ऽऽहारक-तैजस-भाषा-प्राणापान-मनोवर्गणाः समुल्लङ्घ्य कर्मवर्गणायोग्याः सूक्ष्मपरिणतिरूपा एव बध्यन्ते, न बादरपरिणतिभाज इति। एवं क्रमेण सूक्ष्मपरिणतिभाजः केचिदग्रहणयोग्याः केचिद् ग्रहणयोग्याः, पुनरपि केचिदग्रहणयोग्या इति॥

पञ्चमप्रश्नप्रतिवचनार्थमाह—

**भा०—एकक्षेत्रावगाढा बध्यन्ते, न क्षेत्रान्तरावगाढाः।**

**टी०—एकक्षेत्रावगाढा इत्यादि।** एकस्मिन्—अभिन्ने क्षेत्रे जीवप्रदेशैः सह येऽवगाढा—आश्रितास्ते बध्यन्ते। यत्राकाशे जीवोऽवगाढस्तत्रैव ये कर्मयोग्याः पुद्गलास्त एव बध्यन्ते, न क्षेत्रान्तरावगाढाः। तत्र च वर्तमानास्ते रागादिस्नेहगुणयोगादात्मनि लगन्ति, न क्षेत्रान्तरावगाढास्तद्भावपरिणामाभावादना( न्या )श्रितानामिति।

षष्ठप्रश्नोत्तरमाह—

**भा०—स्थिताश्च बध्यन्ते, न गतिसमापन्नाः।**

**टी०—स्थिता इत्यादिना।** स्थिता एव बध्यन्ते। चशब्दस्यावधारणार्थत्वात् सामर्थ्यलभ्यमर्थं दर्शयति—**न गतिसमापन्ना इति।** समाप्तिः प्राप्तिः गतिपरिणाम इत्यर्थः। गतिप्राप्तास्तु गच्छन्त्येव, परिणामविशेषान्नात्मनि श्लिष्यन्ते वेगित्वादिति।

सप्तमप्रश्नप्रतिभेदायाह—

**भा०—सर्वात्मप्रदेशेषु सर्वप्रकृतिपुद्गलाः सर्वात्मप्रदेशेषु बध्यन्ते। एकैको ह्यात्मप्रदेशोऽनन्तैः कर्मप्रदेशैर्बद्धः।**

**टी०—सर्वात्मप्रदेशेष्वित्यादि।** सर्वे च ते आत्मप्रदेशाश्च सर्वात्मप्रदेशाः। आत्मप्रदेशाश्चासङ्ख्येयास्तेषु सर्वप्रकृतिपुद्गलाः सर्वात्मप्रदेशेषु बध्यन्त इति। सर्वाश्च ताः प्रकृतयश्च

१ 'कर्मविशेषाच्च' इति ङ-पाठः। २ 'भूयोमपि भूयो०' इति च-पाठः। ३ 'प्रक्षेपात्' इति ङ-पाठः। ४ 'सह तत्र येऽवगाढाः' इति ङ-पाठः। ५ 'प्रश्ननिर्भेदायाह' इति ग-पाठः।

सर्वप्रकृतयो–ज्ञानावरणादिकास्तत्स्वरूपाः पुद्गलाः सर्वप्रकृतिपुद्गलाः । सर्वात्मप्रदेशेषु बध्यन्त इति । पुनरेकैकस्य कर्मणो ज्ञानावरणादेर्योग्याः पुद्गलाः कियन्तः एकैकस्मिन्नात्मप्रदेशे बध्यन्त इति स्पष्टं[1] विवृणोति—एकैको हीत्यादि । असङ्ख्येयप्रदेशात्मनो जीवस्य एकैकः प्रदेशोऽनन्तैर्ज्ञानावरणकर्मस्कन्धैर्बद्धः । एवं दर्शनावरणादिकर्मप्रदेशैरिति । प्रदेश-शब्दः स्कन्धवचनः, प्रकृष्टा देशा बहवो यत्र स्कन्धे वाति निर्वचनात् ।

अष्टमप्रश्ननिर्भेदायाह—

भा०—अनन्तानन्तप्रदेशाः कर्मग्रहणयोग्याः पुद्गला बध्यन्ते ।

टी०—अनन्तानन्तप्रदेशा इति । अनन्ते राशौ भूयोऽनन्तपुद्गलप्रक्षेपादनन्तानन्त इति व्यपदेशः[2] । ते चात्मन एकैकस्मिन् प्रदेशे ज्ञानावरणादिपुद्गला अनन्तानन्तप्रदेशाः स्कन्धाः कर्मवर्गणायोग्या बध्यन्ते, श्लेषमुपयान्तीत्यर्थः । अयोग्यास्तु न बध्यन्त इति ।

तत्प्रतिपादनायाह—

भा०—न तु सङ्ख्येयासङ्ख्येयानन्तप्रदेशाः । कुतः ? अग्रहणयोग्यत्वात् प्रदेशानामिति । एष प्रदेशबन्धो भवति ॥ २५ ॥

टी०—न तु सङ्ख्येयासङ्ख्येयानन्तप्रदेशा इति । नैव सङ्ख्येयादिप्रदेशा बध्यन्त इति । कुत एतदित्याह–अग्रहणयोग्यत्वात् प्रदेशानामिति । प्रदेशानां–स्कन्धानामेवंविधानामग्रहणयोग्यत्वादिति । सम्प्रति उपसंहरति—एष प्रदेशबन्धो भवतीति । एतत् प्रदेशबन्धस्वरूपमित्यर्थः ॥ २५ ॥

भा०—सर्वं चैतदष्टविधं कर्म पुण्यं पापं च । तत्र—

टी०—सर्वं चैतदित्यादिसम्बन्धग्रन्थः । सर्वमिति सोत्तरप्रकृतिकमष्टप्रकारं ज्ञानावरणाद्यन्तरायपर्यवसानं पौद्गलं कर्म द्विधा (वि)भज्यते–पुण्यं पापं च । शुभं कर्म पुण्यं, अशुभं पापमिति । तत्र द्विप्रकारे कर्मणि प्राशस्त्याच्छुभमेवाभिधीयते । तन्निरूपणेन यच्छेषं तत् पापमित्यर्थाद् गम्यते, अतः—

## सूत्रम्—सद्वेद्य-सम्यक्त्व-हास्य-रति-पुरुषवेद-शुभायु-र्नाम-गोत्राणि पुण्यम् ॥ ८–२६ ॥

भा०—सद्वेद्यं भूतव्रत्यनुकम्पादिहेतुकं सम्यक्त्ववेदनीयं केवलिश्रुतादीनां वर्णवादादिहेतुकं हास्यवेदनीयं रतिवेदनीयं पुरुषवेदनीयं शुभमायुष्कं मानुषं दैवं च शुभनाम गतिनामादीनां शुभं गोत्रं उच्चैर्गोत्रमित्यर्थः । इत्येतदष्टविधं कर्म पुण्यम्, अतोऽन्यत् पापमिति ॥ २६ ॥

---

1 'स्पष्टं पृथक्' इति ङ–पाठः । 2 'पादनन्त इति' च–पाठः ।

टी०—सद्वेद्यमिति । तत्र सद्वेद्यं सुखरूपेणानुभवनीयम् । तदुपादानहेतवः प्रागुक्ताः । कारणानुरूपं कार्यं भवतीति स्मरयति—" भूतव्रत्यनुकम्पा दानं सरागसंयमादि योगः क्षान्तिः शौचमिति सद्वेद्यस्य " ( अ० ६, सू० १३ )। सम्यक्त्ववेदनीयं तत्त्वार्थ-श्रद्धानाकारेणानुभवनीयम्, तदपि केवलिश्रुतसङ्घधर्मदेवानां वर्णवादादिहेतुकम्[1] । वर्णः—कीर्तिः, यशः सद्भूतगुणोद्भावनं भक्तिः पूजा पर्युपासनम् आदिग्रहणात्, ते हेतवो यस्य तत् तद्धेतुकम् । हास्यवेदनीयं हास्याकारेणैवानुभवनीयम् । एवं रतिवेदनीयं च रत्याकारेण, पुरुषवेदनीयं पुरुषाकारेणेति । शुभायुर्नामगोत्राणीति । शुभशब्दः प्रत्येकमभिसम्बध्यते । तत्र शुभायुष्कं मानुषं दैवं च भाष्यकाराभिप्रायः । कर्मप्रकृतिग्रन्थानुसारिणस्तु तिर्यगायुरपि शुभमाचक्षते । यदि च तत् तथा चशब्देनानुकृष्यते । शुभनाम गतिनामादीनां मध्यादुद्धर्तव्यं सप्तत्रिंशत्प्रकारम् । शुभं गोत्रमाचष्टे । उच्चैर्गोत्रमित्यर्थः । एवमेतदुच्चैर्गोत्रान्तं सद्वेद्यादि कर्माष्टविधं पुण्यसंज्ञितं, अर्थाल्लभ्यं व्युदसनीयं पापमिति । कर्मप्रकृतिग्रन्थानुसारिणस्तु द्वाचत्वारिंशत्प्रकृतीः पुण्याः कथयन्ति—सद्वेद्यं (१), तिर्यङ्-मनुष्यदेवायूंषि (३), मनुष्य-देवगती (२) पञ्चेन्द्रियजातिः (१), शरीराणि पञ्च (५), समचतुरस्रसंस्थानं (१), वज्रर्षभनाराचसंहननं (१), अङ्गोपाङ्गत्रयं (३), प्रशस्तवर्ण-गन्ध-रस-स्पर्शाः (४), मनुष्य-देवानुपूर्व्यौ (२), अगुरुलघु-पराघात-उच्छ्वास-आतप-उद्द्योत-प्रशस्तविहायोगति-त्रस-बादर-पर्याप्तप्रत्येक-स्थिर-शुभ-सुभग सुस्वर-आदेय-यशःकीर्ति( १६ )पर्यवसानाः शुभाः निर्माण-तीर्थकर-उच्चैर्गोत्रैः (३) सहेति ॥ आसां च मध्ये सम्यक्त्व-हास्यरति-पुरुषवेदा न सन्त्येवेति । कोऽभिप्रायो भाष्यकृतः को वा कर्मप्रकृतिग्रन्थप्रणायिनामिति सम्प्रदायविच्छेदान्मया तावन्न व्यज्ञायीति, चतुर्दशपूर्वधरादयस्तु संविद्रते यथावदिति निर्दोषं व्याख्यातम् ।

मतान्तरम्, तत्समाधानस्याशक्यत्वम्

द्व्यधिकाशीतिरपुण्यकृतीनाम् । तद्यथा—पञ्च ज्ञानावरणानि नव दर्शनावरणानि असद्वेद्यं मिथ्यात्वं षोडश कषायाः नव नोकषायाः नारकायुः नरक-तिर्यग्गती एक-द्वि-त्रि-चतुरिन्द्रियजातयः, आद्यवर्जानि संस्थानानि पञ्च संहननानि पञ्चैव अप्रशस्तवर्ण-गन्ध-रस स्पर्शाः नारकतिर्यग्गत्यानुपूर्व्यौ उपघातनाम अप्रशस्तविहायोगतिः स्थावर-सूक्ष्मा-ऽपर्याप्तक-साधारणा-ऽस्थिरा-ऽशुभ-दुर्भग-दुःस्वरा-ऽनादेया-यशःकीर्तय[2] इति, तथा नीचैर्गोत्रं पञ्चविधमन्तरायमिति ।

८२ पापप्रकृतयः

सम्यक्त्वादिषूभयथा दर्शनात् संशेते मनः ।

सातं तिर्यग्-नृ-सुरा-युंषि शरीराणि पञ्च मनुजगतिः ।
देवगतिः पञ्चेन्द्रियताऽङ्गोपाङ्गानि सर्वाणि ॥ १ ॥
वज्रर्षभनाराचं समचतुरस्रं च तीर्थकरनाम ।
स्पर्श-रस-गन्ध-वर्ण-विहायोगतयः प्रशस्ताश्च ॥ २ ॥

१ 'श्रुतसंयमदेवानुवर्णं' इति च-पाठः । २ 'यशोऽकीर्तयः' इति घ-पाठः ।

अगुरुलघु पराघातो-च्छ्वासो-द्योता-ऽऽतपाश्च निर्माणम् ।
उच्चैर्गोत्रं नर-देवआयोग्यानुपूर्व्यौ च ॥ ३ ॥
प्रत्येकदेह-बादर-पर्याप्ता-ऽऽदेय-सुस्वर-त्रसताः ।
स्थिर-शुभ-सुभग-यशांसि च शुभसंज्ञाः प्रकृतयः प्रोक्ताः ॥ ४ ॥
सम्यक्त्व-हास्य-रति-धववेदानां पुण्यतामुशन्त्येके ।
न तथा पुनस्तदिष्टं मोहत्वाद् देशघातित्वात् ॥ ५ ॥
केवलवर्जज्ञानावृद्विघ्नं नोकषायसंज्वलनाः ।
अवधिदृगनक्षिनेत्रावरणानि च देशघातीनि ॥ ६ ॥
दृग्ज्ञानावृन्मोहानां, शेषं सर्वघातिकर्मोक्तम् ।
घाति प्रतिघाति किञ्चित् ( किञ्चिद् )घात्यन्यदुपदिष्टम् ॥ ७ ॥

अपरस्त्वाह—

अभिप्राय-भिन्नता

रति-सम्यक्त्व-हास्यानां, पुंवेदस्य च पुण्यताम् ।
मोहनीयमिति भ्रान्त्या, केचिन्नेच्छन्ति तच्च न ॥ १ ॥-अनु०
सर्वमष्टविधं कर्म, पुण्यं पापं च निर्वृतम् ।
किं कर्मव्यतिरिक्तं स्याद्, यस्य पुण्यत्वमिष्यताम् ॥ २ ॥
शुभायु-र्नाम-गोत्राणि, सद्वेद्यं चेति चेन्मतम् ।
सम्यक्त्वादि तथैवास्तु, प्रसादनमिहात्मनः ॥ ३ ॥
पुण्यं प्रीतिकरं सा च, सम्यक्त्वादिषु पुष्कला ।
मोहत्वं तु भवाबन्ध-कारणादुपदर्शितम् ॥ ४ ॥
मोहो रागः स च स्नेहो, मोहो रागः स चार्हति ।
रागस्यास्य प्रशस्तत्वान्-मोहत्वेन न मोहता ॥ ५ ॥

इति श्रीमदर्हत्प्रवचने तत्त्वार्थाधिगमे भाष्यानुसारिण्यां तत्त्वार्थटीकायां बन्धस्वरूपनिरूपकोऽष्टमोऽध्यायः ॥ ८ ॥

( ग्रन्थाग्रं १२६० अष्टमाध्यायस्य, समग्रतस्तु १८७७९ )



१ 'घातिमता ( ? )' इत्यपि पाठः ।

# नवमोऽध्यायः ९



टी०—तत्र तावदध्यायसम्बन्धमाह भाष्यकारः—

भा०—उक्तो बन्धः । संवरं वक्ष्यामः ॥

टी०—उक्तः-प्रपञ्चेन प्रतिपादितोऽनादिमन्ततिरष्टविधः कर्मबन्धः । पौरुषेयत्वादेव कदाचित् केनचिदत्यन्तमुच्छिद्यतेऽपि, पुंसा समासादिततदुच्छेदसाधनेनात्यन्तिकं क्षयमापाद्यत इति । तत्र पूर्वोपचितकर्मजालविच्छेदाय "तपसा निर्जरा च" इति कार्त्स्न्येनोच्छेदं वक्ष्यति (अ० ९, सू० ३) । अपूर्वकर्मावयवप्रवेशनिवारणाय तु संवरमेव तावद् वक्ष्यामः—

संवरलक्षणम् **सूत्रम्—आस्रवनिरोधः संवरः ॥ ९–१ ॥**

टी०—आस्रूयते-समादीयते यैः कर्माष्टविधमास्रवास्ते कर्मणां प्रवेशवीथयः शुभाशुभलक्षणाः कायादयस्त्रय इन्द्रिय-कषाया-ऽव्रत-क्रियाश्च पञ्च-चतुः-पञ्च-पञ्चविंशतिसङ्ख्यास्तेषां निरोधो-निवारणं-स्थगनं संवरः । पर्यायकथनेन व्याख्या ॥

भा०—यथोक्तस्य काययोगादेर्द्विचत्वारिंशद्विधस्यास्रवस्य निरोधः संवरः ॥ १ ॥

टी०—यथोक्तस्येत्यादि भाष्यम् । षष्ठेऽध्याये कायादिरास्रवोऽभिहितोऽनेकप्रकारः, तस्य काययोगादेरास्रवस्य द्व्यधिकचत्वारिंशद्भेदस्य निरोधो यः स संवरः । आत्मनः कर्मोपादानहेतुभूतपरिणामाभावः संवर इत्यभिप्रायः । अतो यावत्किञ्चित्कर्मागमनिमित्तं तस्याभावः संवरः । स च सर्व-देशभेदाद् द्विधा । बादरसूक्ष्मयोगनिरोधकाले सर्वसंवरः, शेषकाले चरणप्रतिपत्तेरारभ्य देशसंवरपरिणतिभागात्मा भवति । अत्राह—यदि

संवरद्वैविध्यम्

सकलास्रवद्वारस्थगनलक्षणः संवरस्ततः सर्वकर्मनिमित्तास्रवच्छिद्रसंवृर्षा कतिपयपुरुषसाध्यैव प्रसजति, अशेषस्य परिस्पन्दस्य निराचिकीर्षितत्वात् । अतः समचतुरस्रसंस्थानवज्रर्षभनाराचसंहननादिभाजामाहितपराक्रमाणां कर्माणि निर्जिजीर्षतां परिपूर्णशक्तिकानां परिस्पन्दस्वभावयोगत्रयनिग्रहः क्रमते, प्रागुपचितकर्मनिवृत्तिश्च, न पुनरैदंयुगीनपुरुषाणां यथोक्तसंवराभावादिति ?, उच्यते—संवरद्वैविध्ये सति सर्वसंवराभावः साम्प्रतिकानामिष्यनुमनुमहे । देशसंवरस्तु सामायिकादिचारित्रवतां सत्यपि परिस्पन्दवत्त्वे विदिततत्त्वानां

---

१ 'उक्तो बन्धः संवरं वक्ष्यामः इत्यनेनाध्याय' इति छ-पाठः । २ तालव्यपाठो ङ-प्रतौ । ३ 'स्पन्दवत्त्व' इति ङ-पाठः ।

संसारजलधेरुत्तरीतुमभिवाञ्छतां प्रधानसंवराभावेऽपि न्यस्तसमस्तप्रमादस्थानानां देशसंवरः समस्त्येवेति । तत्प्रतिपादनायाह—

संवरस्य उपायाः सूत्रम्—स गुप्ति-समिति-धर्मा-ऽनुप्रेक्षा-परीषहजय-चारित्रैः ॥ ९-२ ॥

टी०—अथवा आस्रवनिरोधलक्षणः संवर उक्तः । स पुनः केनोपायेन कर्तव्य इत्युपायस्य दर्शनार्थमिदं सूत्रं स गुप्तीत्यादि । स इत्यनेन सर्वनाम्ना प्रक्रान्तं संवरं परामृशति । गुप्यतेऽनयेति गुप्तिः, संरक्ष्यतेऽनयेत्यर्थः, संवृण्वतो हि गुप्त्यादयः करणीभवन्ति सम्यग्गतिहेतुत्वात् समितयः, गतिरिति सकलक्रियोपलक्षणम् सर्वज्ञप्रणीतज्ञानानुसारिण्यश्चेष्टाः संवरमादधति । नरकादिकुगतिप्रपातधारणाद् धर्मः क्षमादिदशलक्षणकः । अनुप्रेक्षणम्-अनुचिन्तनम् अनुप्रेक्षा अनुप्रेक्ष्यन्ते-भाव्यन्त इति वाऽनुप्रेक्षाः । तादृशानुचिन्तनेन तादृशीभिर्वा वासनाभिः संवरः सुलभो भवति । समन्तादापतिताः क्षुत्पिपासादयः सह्यन्त इति परीषहाः, परीषहा इति कः शब्दसंस्कारः ? न तावत् पचाद्यचि, कर्तरि विहितत्वात्; न कर्मसाधनो घञ्वृद्धिप्रसङ्गात् "पुंसि संज्ञायां घः" (पा० अ० ३ पा० ३ सू० ११८) इति चेत्, न, तस्य करणाधिकरणयोर्विधानात् । उच्यते-" कृत्यल्युटो बहुलं " ( पा० अ० ३ पा० ३ सू० ११३ ) इति वचनात् कर्मण्येव घञ्प्रत्ययः । " उपसर्गस्य घञ्यमनुष्ये बहुलं" ( पा० अ० ६, पा० ३, सू० १२२ ) इति (बहुल)वचनात् घञि चान्यत्र च दीर्घत्वं शिष्टप्रयोगानुसरणात् परीषहाणां जयः-न्यक्करणमभिभवः परीषहजयः । चर्यते तदिति चारित्रं, पृषोदरादित्वाद् वा अष्टविधकर्मचयरिक्तीकरणात् चारित्रं सामायिकादिपञ्चभेदम् । गुप्त्यादीनां चारित्रान्तानां द्वन्द्वः । एभिर्गुप्त्यादिभिः करणभूतैः संवरोऽवाप्यत इति ॥

सम्प्रति भाष्यमनुस्रियते—

भा०—स एष संवर एभिर्गुप्त्यादिभिरुपायैर्भवति ॥ २ ॥ किञ्चान्यत्—

टी०—स एष संवर इत्यादि । प्रस्तुतसंवरसम्बन्धनार्थस्तच्छब्दः । स संवरः आस्रवनिरोधलक्षणः । एष इत्यनेन मनसि व्यवस्थापितः, एभिर्गुप्त्यादिभिः करणभूतैरभ्युपायैर्भवति-जायते, स्वरूपं प्रतिलभत इतियावत् । कथं पुनः करणरूपं गुप्त्यादयः प्रपद्यन्ते ? तत्र रागद्वेषपरिणतेरार्तरौद्राध्यवसायात् मनो निवर्त्य निराकृतैहिकामुष्मिकविषयाभिलाषस्य मनो गुप्तत्वादेव न रागादिप्रत्ययं कर्मास्रोष्यति, यच्च वाचिकमसंवृतस्यासत्प्रलापिनोऽप्यप्रियवचनादिहेतुकं कर्माभिधीयते न तद् वाग्व्यापारविरतस्य यथाविहितवाग्भाषिणः, वाचाऽपि गुप्तत्वादेव, तथा कायिकमनिभृतस्य धावनवल्गनाप्रत्युपेक्षिताप्रमार्जितावनिप्रदेशचङ्क्रमणद्रव्यान्तरादान-

१ 'धेरुत्तरीतुं' इति ङ-पाठः । २ 'सत्यतः मस्त' इति ङ-पाठः । ३ 'मभिभूतस्य' इति ग-पाठः, 'मनिवृतस्य' इति तु ङ-पाठः ।

निक्षेपणादिनिमित्तमात्मनि नाश्लिष्यति कायोत्सर्गभाजः परित्यक्तहिंसादिदोषविषयक्रियाकस्य वा समयविहितक्रियानुष्ठायिनः, कायगुप्तत्वात्, एवं सम्यग्योगत्रयनिगृहीतिलक्षणास्तिस्रो गुप्तयः संवरस्य कारणीभवन्ति। समितयोऽपि गुप्तिरूपा एव प्रायश्चेष्टालक्षणत्वात्। चेष्टा च कायवाङ्मनोव्यापारः। तत्रेर्याऽऽदाननिक्षेपोच्चारादित्यागसमितयस्तिस्रः कायव्यापारान्तर्भूताः। मनोव्यापारानुयायिनी चैषणासमितिः, वाग्व्यापारलक्षणा भाषासमितिः। यत् तु पार्थक्येनोपादानं तत् मन्दधियां विवेकेन सुखप्रतिपत्त्यर्थं, प्रथमव्रतमृषावादादिप्रपञ्चवत्। तथा क्रोध-मान-माया-लोभानां सभेदानां क्षमा-मार्दवाऽऽर्जव-शौचैर्निगृहीतत्वात् संवरावाप्तिः। सत्य-त्यागा-ऽऽकिञ्चन्य-ब्रह्मचर्याणि चारित्रानुरोधीनि। संयमोऽपि सप्तदशप्रकारः कश्चित् प्रथमव्रतान्तःपाती, कश्चिदुत्तरगुणान्तर्भूतः। तपो द्वादशविधमुत्तरगुणान्तःपात्येव। अनित्याशरणादिचिन्तनमपि संवृण्वतो हेतुभूतमुत्तरगुणानुयायि च। परीषहा अपि यथास्वमापतिताः सम्यगधिसहनेन जीयमानाः संवरमाविष्कुर्वन्ति। तथा हिंसा-ऽनृतवचन-परस्वाहरणा-ऽब्रह्मचर्य-परिग्रह-यामिनीभोजनानि संश्लेषविशेषाहितकलुषस्य कर्मास्रवनिमित्तानि। निरोधे सति विरमणभाजो न जातुचिदापतति तन्निमित्तकं कर्मेति। आधाकर्मादिपरिभोगनिमित्तं च कर्मास्रवणं तत्परित्यागे सति नैवास्ति। सर्वं चैतद्दारेकादिदोषजम्बालविमुक्तसम्यग्दर्शनपीठप्रतिबन्धं गुप्त्यादि चारित्रान्तम् अतः सति तत्त्वार्थश्रद्धानलक्षणे सम्यक्त्वे न भवति मिथ्यादर्शनप्रत्ययः कर्मास्रव इत्येवमेते गुप्त्यादयः संवरस्य हेतवः—अभ्युपायाः सम्पद्यन्त इति ॥ २ ॥

अथ किमेभिरेव गुप्त्यादिभिरेष संवरो निष्पद्यते उतापरेणापि केनचिदित्याह—किञ्चान्यदिति। अनेन कारणान्तरमपि सम्बध्नाति। न गुप्त्यादय एव केवलाः संवरणसमर्थाः, किञ्चान्यदपि तपोलक्षणं [3]संवृतेः कारणमस्तीति प्रदर्शयन्नाह—

संवरस्य अपर उपायः

## सूत्रम्—तपसा निर्जरा च ॥ ९–३ ॥

टी०—तपसा निर्जरा चेति। पृथग् योगकरणमुभयहेतुत्वात्। तपसोऽभिनवकर्मप्रवेशाभावः पूर्वोपचितकर्मपरिक्षयश्च। तप्यत इति तपः, सेव्यत इतियावत्। तपति वा कर्तारमिति तपः। तपसेति करणे तृतीया। निर्जरणं निर्जरा—विपक्वानां कर्मावयवानां परिशटनं, हानिरित्यर्थः। तपसा सेव्यमानेन कर्माण्यात्मप्रदेशेभ्यो विघटन्त इतियावत्। कर्तुः सन्तापकत्वाद् वा शुष्करसं कर्मातिरूक्षत्वान्निःस्नेहबन्धनं परिशटतीत्यर्थः। चशब्दः प्रस्तुतसंवरानुकर्षी, तपसा संवरश्च क्रियते, अनशनप्रायश्चित्तध्यानादितपोयुक्तोऽनश्यन्तयैव संवृतास्रवद्वारो भवतीति ॥

---

१ 'निक्षेपादि' इति ङ-पाठः। २ 'देकादि' इति ङ-पाठः। ३ 'संवृतस्य' इति ङ-पाठः।

भा०—तपो द्वादशविधं वक्ष्यते ( अ० ९, सू० १९-२० )। तेन संवरो भवति निर्जरा च ॥ ३ ॥

टी०—तपो द्वादशविधमित्यादि भाष्यम्। द्वादश विधाः-प्रकारा यस्य तद् द्वादशविधं तपः, उपरिष्टात् इहैवाध्याये (सू० १९-२०) अभिधास्यते—बाह्यमनशनादि षोढा, आभ्यन्तरं च प्रायश्चित्तादि षोढा। तेन द्वादशभेदेन तपसा करणतामापन्नेनोक्तलक्षणः संवरो भवति-आगन्तुककर्माभावप्रतिपादनं, निर्जरा च भवतीति चिरन्तनबद्धकर्माभावप्रतिपत्तिः। एवमिदमुभयस्य संवरनिर्जरालक्षणस्य हेतुभूतं तपो भवतीति ॥ ३ ॥

आह—अस्मिन् भारते वर्षे साम्प्रतिकपुरुषाणामल्पवीर्यत्वात् सकलयोगनिरोधलक्षणसंवरात्यये गुप्त्यादिसामर्थ्यात् परिस्पन्दवतामपि संवरास्तित्वमाश्रीयते यदि ततस्त एव स्वरूपतोऽभिधेया इति क्रमेण गुप्त्यादिस्वरूपनिर्णयः कार्यः। तत्र तावद् गुप्तिस्वरूपमेवोच्यते—" सम्यग्योगनिग्रहो गुप्तिः" (सू० ४)। भाष्यकारस्त्वन्यथा कियताऽपि विशेषेण सम्बन्धमाह—

उत्तरसूत्रसम्बन्धः

भा०—अत्राह-उक्तं भवता (अ० ९, सू० २)-गुप्त्यादिभिरभ्युपायैः संवरो भवतीति। तत्र के गुप्त्यादय इति ?। अत्रोच्यते—

टी०—अत्राह-उक्तमित्यादि। गुप्त्यादिभिः संवरो भवतीत्यत्रावसरे कश्चित् प्रश्नयति—उक्तं भवता गुप्त्यादिभिरभ्युपायैः संवरो भवति। तत्र-तेषु संवरकारणेषु के गुप्त्यादयः-किंस्वरूपा गुप्त्यादय इति ?। अत्रोच्यते प्रतिपादयितुर्वचनम्, अत्र प्रश्ने निर्वचनमभिधीयते ॥

गुप्तिलक्षणम्

## सूत्रम्—सम्यग्योगनिग्रहो गुप्तिः ॥ ९-४ ॥

टी०—सम्यक्-प्रशस्तो मुमुक्षोर्योगनिग्रहो गुप्तिः-आत्मसंरक्षणम्। योगा मनोवाक्-कायलक्षणास्तेषां निग्रहो-निगृहीतिः प्रवचनविधिना मार्गव्यवस्थापनमुन्मार्गगमननिवारणं चेति, अतो योगनिग्रहविशेषणार्थं सम्यगिति, सम्यग्-आगमानुसारेणारक्तद्विष्टपरिणतिसहचरिष्णोर्मनोव्यापारः काय-वाग्व्यापारश्च निर्व्यापारता-वाक्-काययोर्निग्रहो गुप्तिर्भवति, न पुनस्तस्करस्येव प्रत्यग्रागसो गाढबन्धनबद्धस्यातिपीडितहृदयप्रदेशस्य सम्पुटितनकविवरस्य पराधीनात्मनोऽनिच्छतो( वृत्तो ) योगनिग्रह इष्यते।

सम्प्रति भाष्येण सूत्रार्थं स्पष्टयन्नाह—

भा०—सम्यगिति विधानतो ज्ञात्वाऽभ्युपेत्य सम्यग्दर्शनपूर्वकं त्रिविधस्य योगस्य निग्रहो गुप्तिः।

१ 'वक्ष्यामः' इति ङ-पाठः। २ 'गन्तुकर्मा' इति ङ-पाठः। ३ 'काययोग' इति ग-पाठः। ४ 'प्रत्ययाप्रशो' इति ग-पाठः।

टी०—सम्यगित्यादि । सम्यगित्यस्य शब्दार्थमाचष्टे–विधानत इति, सभेदं विज्ञाय योगं, तत्र काययोगस्यौदारिक-वैक्रिया-ऽऽहारक-तैजस-कार्मणभेदाः सम्भविनः, वाग्योगस्य सत्यामृषादयः, मनसः सावद्यसङ्कल्पादयः । ज्ञात्वेत्यागमतो यथावदवबुध्य, अभ्युपेत्य सम्यग्दर्शनपूर्वकमिति प्रतिपद्य च भावतः–एवमेते योगाः परिणताः कर्मबन्धाय, एवं च कर्मनिर्जरायै । सम्यग्दर्शनपूर्वकमित्यभ्युपगमक्रियाविशेषणम् । प्रशम-संवेग-निर्वेदा-ऽस्तिक्या-ऽनुकम्पाभिव्यक्तिलक्षणं सम्यग्दर्शनं तत् पूर्वं यस्याभ्युपगमस्येति । त्रिविधस्य योगस्येति मूलभेदाख्यानम्, उत्तरभेदानां मूलानतिलङ्घित्वात् परिग्रहः निग्रहः स्ववशे व्यवस्थापनं, स्वातन्त्र्यप्रतिषेधेन मुक्तिमार्गानुकूलः परिणामो गुप्तिः, संरक्षणं भयानकात् कर्मबन्धशत्रोः ।

त्रैविध्यप्रतिपादनायाह—

गुप्तेः प्रकारत्रयं कायगुप्तेर्लक्षणं च

भा०—कायगुप्तिः, वाग्गुप्तिः, मनोगुप्तिरिति । तत्र शयना-ऽऽसना-ऽऽदाननिक्षेप-स्थान-चङ्क्रमणेषु कायचेष्टानियमः कायगुप्तिः ॥

टी०—कायगुप्तिर्वाग्गुप्तिर्मनोगुप्तिरिति । कायस्य गुप्तिः-संरक्षणं उन्मार्गगतेरागमतः । तथा च संरक्षितः कायो नात्मानमुपहन्ति, एवं वाङ्मनोगुप्त्योरपि व्याख्या । इतिशब्दोऽवधारणार्थः । त्रिविध एव मूलभेदतो योगः । तत्र–तेषु योगेषु निगृहीतव्येषु काययोगनिग्रह एव तावदुच्यते—शयनमागमोक्तो निद्रामोक्षकालः । स च रात्रावेव, न दिवाऽन्यत्र ग्लानादेः । तत्रापि क्षणदायाः प्रथमयामेऽतिक्रान्ते गुरुमापृच्छय प्रमाणयुक्तायां वसतौ, एकस्य साधोर्हस्तत्रयप्रमिते भूप्रदेशे सभाजनस्य च यत्रावस्थानं सकलावकाशपूरणं च सा प्रमाणयुक्ता,

शयन-विवरणम्

तत्र प्रमृज्य स्वावकाशं प्रत्यवेक्ष्य संहृत्यास्तीर्य च संस्तरणपट्टकद्वयमूर्ध्वमधश्च कायं प्रमृज्य सपादं मुखवस्त्रिका-रजोहृतिभ्याम् अनुज्ञापितसंस्तारकावस्थानः कृतसामायिकनमस्कृतिः वामबाहूपधानः आकुञ्चितजानुकः कुक्कुटवद् वियति प्रसारितजङ्घो वा प्रमार्जितक्षोणीतलन्यस्तचरणो वा भूयः सङ्कोचसमये प्रमार्जितसंदंशकमुद्वर्तनकाले च मुखवस्त्रिकाप्रमृष्टकायो नात्यन्ततीव्रनिद्रः शयीत ।

आसनं-निवेशनं यत्र भूप्रदेशे विवक्षितं तं प्रत्यवेक्ष्य चक्षुषा च रजोहरणेन प्रमृज्य च बहिर्निषद्यामास्तीर्य निविशेत । निविष्टोऽप्याकुञ्चनप्रसारणादि पूर्ववत् कुर्वीत । वर्षादिषु च बृंसिकापीठकाद्यमुयैव सामाचार्या प्रत्यवेक्ष्य प्रमृज्य च सन्निवेशनं कुर्यात् । आदाननिक्षेपौ च दण्डकोपकरणचेष्टाभोजनादिविषयौ, वा तावपि प्रत्यवेक्षणप्रमार्जनपूर्वकौ निरवद्यौ भवतः । तथा स्थानमूर्ध्वस्थितिलक्षणमवष्टम्भादिकं सुप्रत्यवेक्षितप्रदेशविषयं पिण्डीकृतवस्त्राद्यन्तर्धानमवष्टम्भादि च निरवद्यं, चङ्क्रमणं-गमनं तदपि प्रयोजनवतः पुरस्ताद् युगमात्रप्रदेश-

१ 'निग्रहः परिग्रहः' इति ग-पाठः । २ 'कायेना' इति च-पाठः । ३ 'प्रमाणायुष्काणा' इति ङ-च-पाठः । ४ 'प्रमृज्यकायेन' इति ङ-पाठः । ५ 'चक्षुषा प्रमृज्य च रजोहृत्या बहिर्निष०' इति च-पाठः । ६ 'यत्र भूप्रदेशे निविष्टो' इति ङ-पाठः । ७ 'बृसिका' इति च-पाठः । ८ 'प्रत्युपेक्ष्य प्रमृज्य' इति ग-च-पाठः । ९ 'दिवास्तुप्रत्य' इति ङ-पाठः । १० 'चक्रमणं' इति ग-च-पाठः ।

सन्निवेशितदृष्टेरप्रमत्तस्य स्थावराणि जङ्गमानि च भूतानि परिवर्जयतोऽत्वरया पदन्यासमाचरतः प्रशस्तम्। एवमेतेषु गमनादिविषयेषु कायकृतचेष्टायाः-कायव्यापारस्य नियमो-व्यवस्था निग्रहः-एवं कर्तव्यम्, एवं न कर्तव्यमिति। उक्तं च—

" कायक्रियानिवृत्तिः कायोत्सर्गे शरीरगुप्तिः स्यात्।
दोषेभ्यो वा हिंसादिभ्यो विरतिस्तयोर्गुप्तिः ॥ १ ॥ "

अत्र च यद्यपि मनोव्यापारसंसृष्टः कायव्यापारः तथापि कायचेष्टायाः साक्षात्कायेनैव निष्पादितत्वाद् बहिरुपलक्ष्यमाणत्वाच्च प्राधान्येन विवक्षा ॥

वाग्गुप्तिविषयप्रदर्शनायाह—

**भा०—याचन-पृच्छन-प्रश्नव्याकरणेषु वाङ्नियमो मौनमेव वा वाग्गुप्तिः ॥**

टी०—याचनेत्यादि। याचनं-प्रार्थनं अन्यतो गृहस्थादेराहारोपधिशय्यानां, तच्च मुख-वसनाच्छादितवक्त्रभागस्य प्रवचनविहितवाक्यशुद्ध्यनुसारिणो भाषमाणस्य वाग्गुप्तिर्भवति। तथा पृच्छनमाचरतोऽध्वगमनवैद्यसन्देहविच्छेदादिविषयमागमविधिभाजो वाग्गुप्तिः। तथा धर्ममाचक्ष्वेति पृष्टः श्राद्धेन केनचित् प्रकल्पग्रन्थाभिहितनीत्या व्याकुर्यात् सम्यगुपयुक्तः, अन्यद् वा सावद्यमनवद्यं वा पृष्टः समाधाय लोकागमाविरोधेनाचक्षीत, एवंविधः पृच्छनादि-विषयो वाङ्नियमो वाग्गुप्तिः, मौनमभाषणमेव वा वाचोगुप्तिरिति। आह च—

" अनृतादिनिवृत्तिर्वा, मौनं वा भवति वाग्गुप्तिः। "

इति ॥

मनोगुप्तिस्वरूपाख्यानायाह—

**भा०—सावद्यसङ्कल्पनिरोधः कुशलसङ्कल्पः कुशलाकुशलसङ्कल्पनिरोध एव वा मनोगुप्तिरिति ॥ ४ ॥**

टी०—सावद्येत्यादि। अवद्यं-गर्हितं-पापं सहावद्येन सावद्यः सङ्कल्पः-चिन्तनं आलोचनं आर्तरौद्रध्यायित्वं चलचित्ततया वा यदवद्यवच्चिन्तयति, तस्य निरोधः-अकरणम-प्रवृत्तिर्मनोगुप्तिः। तथा च कुशलसङ्कल्पानुष्ठानं सरागसंयमादिलक्षणं येन धर्मोऽनुबध्यते यावांश्चाध्यवसायः कर्मोच्छेदाय यतते सोऽपि सर्वः कुशलसङ्कल्पो मनोगुप्तिः। अथवा न कुशले सरागसंयमादौ प्रवृत्तिर्नाप्यकुशले संसारहेतौ, योगनिरोधावस्थायामभावाद् एवं मनसो गुप्तिः। तत्काले च ध्यानसम्भवात् सकलकर्मक्षयार्थ एवात्मनः परिणामो भवतीति ॥ ४ ॥

एवं कायादिनिरोधात् तन्निमित्तकर्मानास्रवणे सति संवरसिद्धिरुक्ता। सम्प्रति चेष्टा-वतोऽपि संवरसिद्ध्यर्थमिमाः पञ्च समितयोऽभिधीयन्ते। आह च—

१ 'वाग्गुप्तिः' इति ग-पाठः। २ 'प्रवचनविदित' इति च-पाठ.।

" तद्गुणपरिशुद्ध्यर्थं भिक्षोर्गुप्तीर्जगाद तिस्रोऽर्हन् ।
चेष्टितुकामस्य पुनः समितीः प्राजिज्ञपत् पञ्च ॥ १ ॥"

इति ॥

पञ्चविधत्वं समितीनाम् **सूत्रम्—ईर्या-भाषै-षणा-ऽऽदाननिक्षेपो-त्सर्गाः समितयः ९-५**

टी०—अनन्तरसूत्रात् सम्यग्ग्रहणमनुवर्तते, तत् प्रत्येकमभिसम्बन्धनीयं समितिग्रहणं च । ईरणमिर्या—गतिपरिणामः । सम्यगागमानुसारिणी गतिः ईर्यासमितिः । समितिरिति तान्त्रिकी संज्ञा पञ्चसु चेष्टासु । अथवा नानुवर्तते सम्यग्ग्रहणम् । समितिरिति समुपसर्गः प्रशंसार्थः । प्रशस्ता—इति चेष्टा सर्ववित्प्रवचनानुसारेण प्राशस्त्यार्था । एवं भाषणं भाषा तद्विषया चेष्टा (भाषा)समितिः । एषणमेषो—गवेषणं तं करोतीति णिच् तत्र स्त्रीलिङ्गे भावे युच् एषणा, यथागमसाहारादेरन्वेषणमेषणासमितिः । आदानं—ग्रहणं, निक्षेपो—न्यासः स्थापनं तयोः समितिः—प्रावचनेन विधिना अनुगता आदाननिक्षेपसमितिः । उत्सर्जनमुत्सर्गः । उत्सर्जनमाहारोपधिशय्योच्चारादेर्भगवद्वचनापेक्षमुत्सर्गसमितिः । ईर्यादयः कृतद्वन्द्वाः समितिशब्दसमानाधिकरणा इति ।

अमुमेवार्थं भाष्येण स्फुटयति—

**भा०—सम्यगीर्या सम्यग्भाषा सम्यगेषणा सम्यगादाननिक्षेपौ सम्यगुत्सर्ग इति पञ्च समितयः । तत्रावश्यकायैव संयमार्थं सर्वतो युगमात्रनिरीक्षणायुक्तस्य शनैर्न्यस्तपदा गतिरीर्यासमितिः ॥**

टी०—सम्यगीर्येत्यादिना, सम्यग्-आगमपूर्विका ईर्या—गमनमात्मपरबाधापरिहारेण। यथोक्तं ( दशवैकालिके अ० ५, उ० १, सू० ३-४ )—

" पुरओ जुगमायाए, पेहमाणो महिं चरे ।
वज्जितो बीयहरियाइं, पाणे य दगमट्टियं ॥ १ ॥"
ओवायं विसमं खाणुं, विज्जलं परिवज्जए ।
संकमेण न गच्छिज्जा, विज्जमाणे परक्कमे ॥ २ ॥"

सम्यग्भाषाऽप्यागमानुवर्तिनी—

---

१ 'प्रतिष्ठा' इति ग-पाठः ।

२ छाया—

पुरतो युगमात्रया प्रेक्षमाणो महीं चरेत् ।
वर्जयन् बीजहरितानि प्राणितश्चोदकं मृत्तिकाम् ॥ १ ॥
अवपातं विषमं स्थाणुं विजलं (सकर्दमं) परिवर्जयेत् ।
संक्रमेण (अस्थिरेण) न गच्छेत् विद्यमाने पराक्रमे (स्थिरे) ॥ २ ॥

"[1]जा य सच्चा अवत्तव्वा, सच्चामोसा य जा मुसा ।
जा य बुद्धेहिं नाइण्णा, न तं भासिज्ज पण्णवं ॥ १ ॥"

—दशवैकालिके ( अ० ७, उ० २, सू० २ )

सम्यगेषणा–गवेषणमागमविधिना पिण्डादीनाम् । सम्यगादाननिक्षेपौ प्रत्युपेक्षाप्रमार्जनपूर्वकौ । सम्यगुत्सर्गः स्थण्डिले व्यपगतप्राणिके । इतिशब्दः स्वरूपप्रतिपादनार्थः । एवंस्वरूपाः[2] पञ्चैव समितयः । तदेव स्वरूपं प्रपञ्चयति—तत्रेत्यादि । तत्र–तासु समितिष्वीर्यासमितिरित्थंरूपा आवश्यकायैवेति[3] अवश्यकार्यमवश्यं कर्तव्यं यदागमचोदितं[4] प्रयोजनं विहारादिभूगमनं तदेव भूयः स्पष्टयति–संयमार्थमिति । संयमः सप्तदशभेदः । तदेव चावश्यकमवश्यंतया कर्तव्यम् । सर्वत इति सर्वत्र युगप्रमिते भूप्रदेशे[5], पादाग्रादारभ्य यावद् युगमात्रं तावन्निरीक्षणेत्यर्थः । युक्त आयुक्तस्तस्यैवं चेष्टमानस्य शनैः शनैः–मन्दं गतिभेदमकुर्वतोऽन्यासक्षरणयोराचरत ईर्यासमितिः । आह च—

" उपयोगोद्योतालम्बनमार्गविशुद्धिभिर्यतेश्चरतः ।
सूत्रोदितेन विधिना भवतीर्यासमितिरनवद्या ॥ १ ॥"

सम्प्रति भाषासमितिनिरूपणायाह—

भा०—हितमितासन्दिग्धानवद्यार्थनियतभाषणं भाषासमितिः ॥

टी०—हितमितेत्यादि । आत्मने परस्मै हितमायत्यामुपकारकं मुखवसनाच्छादितास्यता, नातिबहु प्रयोजनमात्रसाधकं मितं, असन्दिग्धं सूक्तम् अर्थवर्णप्रतिपत्तौ वा न सन्देहकारि निरवद्यार्थमनुपघातकं षण्णां जीवकायानां एवंविधं च नियतं सर्वदैव भाषणं भाषासमितिः । आह च—

" त्यक्त्वा[6]नृतादिदोषं सत्यमसत्यानृतं च निरवद्यम् ।
सूत्रानुया[7]यि वदतो भाषासमितिर्भवति साधोः ॥ १ ॥"

एषणासमितिस्वरूपावधारणायाह—

भा०—अन्नपानरजोहरणपात्रचीवरादीनां धर्मसाधनानामाश्रयस्य चोद्गमोत्पादनैषणादोषवर्जनमेषणासमितिः ॥

---

१ छाया—

या च सत्याऽवक्तव्या सत्यामृषा च या मृषा ।
या च बुद्धैरनाचरिता नेमां भाषेत प्रज्ञावान् ॥

२ 'रूपाश्रयस्य काये० ' इति च–पाठः । ३ ' आवश्यकायैवेत्या ' इति ग–पाठः । ४ ' चिदितं ' इति ङ–पाठः । ५ ' युगप्रतीते भूप्रदेशे ' इति ग–च–पाठ. । ६ ' त्यक्त्वा ' इति च-पाठः । ७ ' नुवीचि ' इति च-पाठः ।

टी०—अन्नपानेत्यादि। अन्नं-अशन-खाद्य-स्वाद्यभेदम्। पानं आरनालतन्दुलक्षालनाद्युद्गमादिदोषपरिशुद्धम्। तथा रजोहरणं समुखवसनम्। पात्रद्वयम्। चोलपट्टकादि चीवरम्। आदिग्रहणाच्चतुर्दशविधोऽप्युपधिः स्थविरकल्पयोग्यो जिनकल्पयोग्यश्च सहौपग्रहिकेण ग्राह्यः। धर्मसाधनानामिति। श्रुतचरणधर्मसाधकानामित्यर्थः, साक्षात् पारम्पर्येण च। न हि पात्राद्यन्तरेण महाव्रतसंरक्षणं कर्तुं शक्यम्। एवमाहारोपकरणविषयामेषणां प्रतिपाद्य प्रतिश्रयैषणाभिधानायाह—आश्रयः शय्या। साऽप्युद्गमादिदोषरहितैव परिभोग्या। चशब्दः समुच्चितौ। तत्र षोडश आधाकर्मादय उद्गमदोषाः। उत्पादनादोषाः षोडशैव धात्र्यादयः। दशैषणादोषाः शङ्कितादयः। एतद्दोषपरिहारेणान्नपानादिग्रहणमेषणासमितिः।

"उत्पादनोद्गमैषणधूमाङ्गारप्रमाणकारणतः।
संयोजनाच्च पिण्डं शोधयतामेषणासमितिः॥ १॥"

आदाननिक्षेपसमितिस्वरूपविवक्षयाह—

**भा०—रजोहरणपात्रचीवरादीनां पीठफलकादीनां चावश्यकार्थं निरीक्ष्य प्रमृज्य चादाननिक्षेपौ आदाननिक्षेपणासमितिः॥**

टी०—रजोहरणेत्यादि। रजोहरणपात्रचीवरादीनामिति चतुर्दशविधोपधिग्रहणं[1] द्वादशविधोपधिपरिग्रहः, पञ्चविंशतिविधोपधिग्रहः[2], पीठफलकादीनामिति वा शेषौपग्रहिकोपकरणसङ्ग्रहणमावश्यकार्थमित्यवश्यन्तया वर्षासु पीठफलकादिग्रहः, कदाचिद्धेमन्तग्रीष्मयोरपि क्वचिदनूपविषये जलकणिकाकुलायां भूमावेवं द्विविधमप्युपधिं स्थिरतरमभिसमीक्ष्य प्रमृज्य च रजोहृत्या आदाननिक्षेपौ कर्तव्यावित्यादाननिक्षेपणासमितिः। आह च—

"न्यासाधिकरणदोषान् परिहृत्य दयापरस्य निक्षिपतः।
न्यासे समितिरथादाने च तथैवाददानस्य॥ १॥"

उत्सर्गसमितिस्वरूपकथनायाह—

**भा०—स्थण्डिले स्थावरजङ्गमजन्तुवर्जिते निरीक्ष्य प्रमृज्य च मूत्रपुरीषादीनामुत्सर्ग उत्सर्गसमितिरिति॥ ५॥**

टी०—स्थण्डिल इत्यादि। स्थानदानात् स्थण्डिलमुज्झितव्यवस्तुयोग्यो भूप्रदेशः। कीदृक् पुनस्तदवकाशं ददातीत्याह—स्थावरजङ्गमजन्तुवर्जितम्। तत्र स्थावराः संचित्ता[3] मिश्राश्च पृथिव्यादयः पञ्च। द्वीन्द्रियादयो जङ्गमाः। तद्वर्जिते निरीक्ष्य चक्षुषोपयुज्य प्रमृज्य च रजोहृत्या वस्त्रपात्रैखेलमलभक्तपान[4]मूत्रपुरीषादीनामुत्सर्ग—उज्झनमुत्सर्गसमितिः। इतिशब्दः परिसमाप्तिवचनः। आह च—

---

१ 'ग्रहणं' इति छ-पाठः। २ 'परिग्रहः' इति छ-पाठः। ३ 'असचित्ता' इति च-पाठः। ४ 'खेलमलभक्त' इति ग-च-पाठः।

"न्यासादानसमित्या व्युत्सर्गे चापि वर्णिता समितिः।
सूत्रोक्तेन (च) विधिना व्युत्सृजतोऽर्थं प्रतिष्ठाप्यम् ॥ १ ॥"
एवं साधोर्नित्यं यतमानस्याप्रमत्तयोगस्य।
मिथ्यात्वाविरतिप्रत्ययं निरुद्धं भवति कर्म ॥ २ ॥" ॥ ५ ॥

अत्राह—उक्तं समितिगुप्तीनां संवरहेतुत्वम्। अधुना को धर्मः संवरस्य कारणम्? इति वक्तव्यम्। साध्वगारिधर्मभेदाहितसन्देहस्य प्रश्नः। उच्यते—सत्यप्यविशेषाभिधाने न पुण्यकर्म धर्मः, किं तर्हि?, संवरापादनसामर्थ्यनिमित्तं यो धर्मः स उच्यते।

धर्मस्य दशविधता

**सूत्रम्—उत्तमः क्षमा-मार्दवा-ऽऽर्जव-शौच-सत्य-संयम-तपस्त्यागा-ऽऽकिञ्चन्य-ब्रह्मचर्याणि धर्मः ॥ ९-६ ॥**

टी०—उत्तमग्रहणं अगारिधर्मव्यवच्छेदार्थम्। उत्तमो धर्मः प्रकर्षयोगात्। क्षमादयो हि उत्तमविशेषणविशिष्टास्तादृशाश्चागारिणो न सन्ति। यतः सर्वावस्थां अनगाराः क्षमन्ते, सकलमदस्थाननिग्राहिणः शाठ्यरहिताः सन्तोषामृततृप्ताः सत्यवादिनः संयमिनः तपस्विनो यथावद् दातारः कनकादिकिञ्चनरहिताः सर्वप्रकारं ब्रह्म बिभ्रतीति॥ न त्वेवं जातुचिद् गृहिणां क्षमादयः प्रकर्षभाजो भवन्ति। क्षमादयः कृतद्वन्द्वाः प्रथमाबहुवचननिर्दिष्टाः समुदिता एवोत्तमो धर्मः। एष च क्षमादिसमुदयः संवरं धारयति करोति यतस्ततो धर्मः। संवरार्थं चात्मना धार्यत इति धर्मः।

एतावन्ति धर्माङ्गानि तन्निष्पादितश्च धर्म इति दर्शयति—

भा०—इत्येष दशविधोऽनगारधर्म उत्तमगुणप्रकर्षयुक्तो भवति ॥

टी०—एवमेष दशप्रकारो यतिधर्मः। उत्तमा गुणा मूलोत्तराख्यास्तेषां प्रकर्षः—पराकाष्ठा तद्युक्तोऽनगाराणां धर्मो भवति ॥

क्षमायाः पर्यायाः

भा०—तत्र क्षमा तितिक्षा सहिष्णुत्वं क्रोधनिग्रह इत्यनर्थान्तरम् ॥

टी०—तत्र क्षमेत्यादिना विवृणोति। उत्तमत्वं क्षमेति क्षमणं—सहनं परिणाम आत्मनः शक्तिमतः। अशक्तस्य वा प्रतीकारानुष्ठाने तां पर्यायशब्दैराचष्टे। तितिक्षा क्षान्तिः। सहिष्णुत्वं सहनशीलत्वम्। क्रोधनिग्रहः क्रोधस्योदयनिरोधः, उदितस्य वा विवेकबलेन निष्फलताऽऽपादनम्। एवमेतेऽनर्थान्तरवाचिनः शब्दाः क्षमामेवाभिदधति।

भाष्यकारस्तु स्वयमेवाशङ्क्याह—

भा०—तत् कथं क्षमितव्यमिति चेदुच्यते—क्रोधनिमित्तस्यात्मनि भावाभावचिन्तनात् ॥

---

१ 'दशागारिणि' इति ग-पाठः।

टी०—तत् कथं क्षमितव्यमिति चेत् । क्षमितव्यमिति भावे कृत्यः । क्षमाऽपि भाव एव । अतः सामान्यमात्रमाश्रित्य तच्छब्दप्रयोगः । वाक्यार्थस्तु—सा—क्षमा कथं—केन प्रकारेण कर्तव्या ? । एवं मन्यते दुर्भञ्जः क्रोधवेगो मदाकुलस्येव करिणः । चेच्छब्दः शङ्कायाः सूचकः । एवमाशङ्किते आशङ्काव्युदासचिकीर्षया आह—उच्यत इति । क्रोधनिमित्तस्यात्मनि भावाभावचिन्तनात् । भावः सद्भावोऽस्तित्वं तच्चिन्तनात् तदुपयोगात् उभयथाऽपि क्रोधो न घटत इति । येन निमित्तेन परप्रयुक्तेनायं मम कोप उत्पद्यते तन्निमित्तं मयि किं सत्यमेवास्ति उताभ्याख्याति परः ?, यदि सत्यमस्त्येतन्निमित्तं किं कोपेन? कृतं खलु मयेदं, नाणीयोऽपि परस्यात्राऽऽगः सद्भूतमर्थं प्रकाशयतः, स्वकृतं हि दुश्चरितं तपतीत्येवं चिन्तयेत् । एतदेवाह—भावचिन्तनात् । तावद् विद्यन्ते मय्येते दोषाः किमत्रासौ मिथ्या ब्रवीतीति क्षमितव्यं, तथाऽभावचिन्तनादपि क्षमितव्यमित्यादि, ये दोषाः परेणोपक्षिप्यन्ते मयि नैते विद्यन्ते । अभाव एव, परस्त्वज्ञानादेवमभिधत्ते । अज्ञात्वैव[1] दोषानुपक्षिपतीत्यर्थः । एवं च निरपराधमात्मानमवेत्य क्षन्तव्यमेव ॥ किञ्चान्यदालम्बनं सहिष्णुत्वे इत्याह—

भा०—परैः प्रयुक्तस्य क्रोधनिमित्तस्यात्मनि भावचिन्तनादभावचिन्तनाद्[2] क्षमितव्यम् । भावचिन्तनात् तावद् विद्यन्ते मयि एते दोषाः किमत्रासौ मिथ्या ब्रवीतीति क्षमितव्यम् । अभावचिन्तनादपि[3] क्षमितव्यम्, नैते विद्यन्ते मयि दोषा यानज्ञानादसौ ब्रवीतीति क्षमितव्यम् । किञ्चान्यत् ॥

टी०—गतार्थमेवेदं भाष्यम् ।

क्षमाकरणे अन्यान्यालम्बनानि भा०—क्रोधदोषचिन्तनाच्च क्षमितव्यम् । क्रुद्धस्य हि विद्वेषासादनस्मृतिभ्रंशव्रतलोपादयो दोषा भवन्तीति[4] । किञ्चान्यत् ॥

टी०—क्रोधदोषचिन्तनाच्चेत्यादि । क्रुद्धः—कषायपरिणतो विद्वेषी कर्म बध्नाति, परं वा निहन्ति व्यापादयति वा । अतः प्राणातिपातनिवृत्तिव्रतलोपः स्यात्, गुरूनासादयेद्—अधिक्षिपेत्, अतो ज्ञानादिनिर्वाणसाधनपरिहाणिरवश्यंभाविनी । क्रुद्धो वा भ्रष्टस्मृतिको मृषाऽपि भाषेत, विस्मृतप्रव्रज्याप्रतिपत्तिः परेणादत्तमप्याददीत, द्वेषात् परपाखण्डिनीषु ब्रह्मव्रतभङ्गमप्यासेवेत । तथा प्रद्विष्टः सहायबुद्ध्या गृहस्थेष्वविरतेषु मूर्च्छामपि कुर्यात् । आदिग्रहणाद् उत्तरगुणभङ्गमप्याचरेत् कारट्टक(करडुक?)भक्तालाभे[5] मासक्षपकवत् ॥ किञ्चान्यदालम्बनं क्षान्तावित्याह—

१ 'अज्ञात्वैव' इति ग-च-पाठः । २ 'नाद् वा' इति घ-पाठः । ३ 'दपि नैते मयि' इति ग-पाठः । ४ 'भवन्तीति' इति घ-पाठः । ५ 'भक्तना' इति ग-पाठः ।

भा०—बालस्वभावचिन्तनाच्च परोक्षप्रत्यक्षाक्रोशताडनमारणधर्मभ्रंशा-नामुत्तरोत्तररक्षार्थम्। बाल इति मूढमाह। परोक्षमाक्रोशति बाले क्षमितव्यमेव। एवंस्वभावा हि बाला भवन्ति। दिष्ट्या च मां परोक्षमाक्रोशति न प्रत्यक्ष-मिति लाभ एव मन्तव्यः। प्रत्यक्षमप्याक्रोशति बाले क्षमितव्यम्। विद्यत एवैतद् बालेषु। दिष्ट्या च मां प्रत्यक्षमाक्रोशति, न ताडयति, एतदप्यस्ति बालेष्विति लाभ एव मन्तव्यः। ताडयत्यपि बाले क्षमितव्यम्। एवंस्वभावा हि बाला भवन्ति। दिष्ट्या च मां ताडयति, न प्राणैर्वियोजयतीति। एतदपि विद्यते बालेष्विति। प्राणैर्वियोजयत्यपि बाले क्षमितव्यम्। दिष्ट्या च मां प्राणैर्वियोजयति, न धर्माद् भ्रंशयतीति क्षमितव्यम्। एतदपि विद्यते बालेष्विति लाभ एव मन्तव्यः। किञ्चान्यत्—

टी०—बालस्वभावेत्यादि। बालशब्दोऽवैधेयवचनः[1], न वयोऽवस्थावाची। तथैव चाह भाष्यकृत्। बालः मूढो निर्विवेक इत्यर्थः। तस्य चैष एव स्वभावो मूढत्वात् यत्किञ्च-नभाषित्वं तत्स्वभावालोचनमन्वेषणं, अतस्तच्चिन्तनाच्च क्षमितव्यमेव। चशब्दः समुच्चयार्थः। उत्तरोत्तररक्षार्थमिति परोक्षाक्रोशात् प्रत्यक्षाक्रोशनमुत्तरं, प्रत्यक्षाक्रोशनात् ताडनं, ताडनान्मारणं, मारणाद् धर्मभ्रंशनं, परोक्षाक्रोशेन क्षमायां प्रत्यक्षाक्रोशनं रक्षितं भवति। एवमुत्तरत्रापि, अस्ति हि कियत्यपि मन्दाक्षमाक्रोष्टुर्मयि ततः परोक्षमाक्रोशति, न प्रत्यक्षम्। दिष्ट्येति तृतीयैकवचनप्रतिरूपको निपातः प्रसादवचनः प्रशंसावचनो वा। अयमेव च प्रसादो मम—इदमेव वा साधु यन्मां परोक्षमाक्रोशति, न प्रत्यक्षमित्येष एव लाभः। लौकिकः खलु अयमाभाणकः—अयमेव (मे) लाभ इति, एवं सर्वत्र व्याख्या। किञ्चान्यदा-लम्बनमाश्रित्य क्षमा कार्या तदभिधीयते—

भा०—स्वकृतकर्मफलाभ्यागमाच्च। स्वकृतकर्मफलाभ्यागमोऽयं मम, निमि-त्तमात्रं पर इति क्षमितव्यम्। किञ्चान्यत्—

टी०—स्वकृतफलाभ्यागमाच्चेति। जन्मान्तरोपात्तस्य कर्मणः स्वकृतस्यायं विपाको मम यदाक्रोशति ताडयति वा परः, स तु निमित्तमात्रं कर्मोदयस्य। यस्माद् द्रव्यक्षेत्रकाल-भवभावापेक्षः कर्मणामुदयो भगवद्भिराख्यातः। स्वकृतं च कर्मानुभवितव्यमवश्यन्तया निकाचितं, तपसा वा क्षपणीयमिति। किञ्चान्यदालम्बनं क्षन्तुमनसा विधातव्यमित्याह—

भा०—क्षमागुणांश्चानायासादीननुस्मृत्य क्षमितव्यमेवेति क्षमाधर्मः॥ १॥

---

1 'विधेयं' इति च-पाठः।

